"संहतिः कार्य्यसाधिका"।

# मित्रगोष्ठी-पत्रिका।

मासिकं संस्कृतपत्रम्। 340

"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्"।

"समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्"

ऋग्वेदः।

तीये वर्षे } १८२७ शकाब्दाः, वैशाखः। { प्रथम संख्या

## मङ्गलम्।

शं नो देवा विश्वदेवा भवन्तु, शं सरस्वती सह धीभिरस्तु ॥१॥

शं नो मित्रः, शं वरुणः, शं विष्णुः, शं प्रजापतिः।

शं नो इन्द्रो बृहस्पतिः, शं नो भवत्वर्य्यमा ॥ २ ॥

शं नो मित्रः, शं वरुणः, शं विवस्वांछमन्तकः।

उत्पाताः पार्थिवान्तरीक्षाः, शं नो दिविचरा ग्रहाः ॥ ३ ॥

शं नो ग्रहाश्चान्द्रमसाः, शमादित्यश्च राहुणा।

शं नो मृत्युर्धूमकेतुः, शं रुद्रास्तिग्मतेजसः ॥ ४ ॥

शं रुद्राः, शं वसवः, शमादित्याः, शमग्नयः।

शं नो महर्षयो देवाः, शं देवाः, शं बृहस्पतिः ॥ ५ ॥

ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्तऋषयोऽग्नयः।

तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म्म यच्छतु,

ब्रह्मा मे शर्म्म यच्छतु ॥ ६ ॥

अभयं नः * करत्वन्तरीक्षमभयं द्यावापृथिवी उभे इमे।

अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥ ७ ॥




* करतु—कुर्य्यादित्यर्थः।

अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः ।
अभयं नक्तमभयं दिवा नः, सर्वा आशा मम मित्रं भवन्तु ॥ ८ ॥

पृथिवी शान्तिरन्तरीक्षं शान्तिर्द्यौः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे मे देवाः शान्तिः, सर्वे मे देवाः शान्तिः, शान्तिः शान्तिः शान्तिभिः ।

ताभिः शान्तिभिः सर्वशान्तिभिः शमयामोहं * यदिह घोरं यदिह क्रूरं यदिह पापं तच्छान्तं, तच्छिवं सर्वमेव शमस्तु नः ॥ १ ॥ †

———:o:———

## शुक्तिरजतम् ।

नूनं बहुभिरेव निरीक्षितं स्यात्—चन्द्रमसः सुनिर्मलैः किरणकलापैर्धवलिते भुवनमण्डले पुरःपतितं शुक्तिकाखण्डम्, अथवा तादृशमेवापरं किमपि समुज्ज्वलं वस्तु सपदि रजतरूपेणावभासते एवं क्षीणालोकमध्यवर्त्तिनो रज्जुप्रभृतयः सर्पादिरूपेण प्रतिभान्तीति । तदेतत् कथं भवतीत्यस्मदीयानां दार्शनिकानामतमनुसृत्य किञ्चित् प्रदर्शयितुं यतिष्यतेऽस्मिन् सन्दर्भे ।

एकस्मिन् वस्तुनि अपरस्य वस्तुन आरोपोऽध्यास इत्युच्यते । यस्मिन् आरोप्यते तदधिष्ठानम्, यत् पुनरारोप्यते तदारोप्यम् । यथा—शुक्तिकायां रजतमारोप्यत इति शुक्तिका अधिष्ठानम्, रजतमारोप्यम् ।

यद् वस्तु प्राक् कथमपि न ज्ञातम्, न तदारोपयितुं शक्यते; यो हि पूर्वं रजतस्वरूपं नाजानात्, न तदा तस्य शुक्तिका रजतवद् अवभासेत । अत आरोपात् पूर्वम्, आरोप्यस्य ( रजतादेः ) ज्ञानमावश्यकम् ।

* वयं शमयामः—अपगमयाम इत्यर्थः इति सायणः ।

† एतत्सर्वम् अथर्वसंहिताया ऊनविंशकाण्डतः संगृहीतम् ॥

आरोपाधिष्ठानं ( शुक्तिकादि ) सामान्यविशेषरूपेण द्वेधा विभज्यते। तत्र यदा सामान्यांशस्य ज्ञानम्, विशेषांशस्य चाज्ञानं स्यात्, तदाध्यासो भवेत्। प्रकृते—"इयं शुक्तिकेति" ज्ञानविषयभूतायाः शुक्तिकाया द्वौ अंशौ—इदन्त्वरूपः, शुक्तित्वरूपश्च, इदन्त्वांशः सामान्यम्। ( अयं घटः, अयं पट इत्यादौ सर्वत्रैव इदन्त्वांशस्यानुगमनात्, ) शुक्तित्वरूपश्च विशेषः ( अन्यत्रास्याननुगमनात् )। तत्र 'इदम्' ( किञ्चित् ) इत्यस्य। इदन्त्वरूपस्य सामान्यांशस्य ज्ञाने, 'शुक्तिकेति' विशेषांशस्याज्ञाने च शुक्तिकायां रजतमध्यस्यते। यदि शुक्तित्वरूपस्य विशेषांशस्यापि ज्ञानमेव स्यात्; न त्वज्ञानं, न तदा अध्यासः सम्भवेत्। स्थाणुर्यदि स्थाणुत्वेनैव विज्ञातः, न तर्हि तत्र कस्यचित् पिशाचबुद्धिरुत्पद्यते।

यथाच शुक्तित्वरूपस्य विशेषांशस्याज्ञानादेवाध्यासः, न तु ज्ञानात्, एवम् इदन्त्वरूपस्य सामान्यांशस्य ज्ञानादेवाध्यासः, न त्वज्ञानात् अधिष्ठाने सामान्यतोऽप्यज्ञाते कुत्र, किमारोप्येत, किमिति शुक्तिकायामेव रजतमारोप्यते, न तु तत्समीपस्थेऽप्यपरस्मिन् वस्तुनि। * पुरोवर्त्तिन्यां शुक्तिकायां रजत आरोपिते इदं रजतम् इति ज्ञानं जायते। यावत् किञ्चन लोके ज्ञानमस्ति अवश्यं तस्य स्यादेवैकैको विषयः; यथा—घटज्ञानपटज्ञानयोर्यथाक्रमं घटः पटश्च विषयः अतः 'इदं रजतम्' इत्यस्यापि ज्ञानस्य अवश्यं कोऽपि विषयो वक्तव्य एव। तत्र न रजतं तस्य ज्ञानस्य विषयः सम्भवति, तस्यासद्भावात्; न हि तदानीं तत्र रजतमस्ति। यद्युच्यते—मा नाम तत्र रजतमस्तु, देशान्तरे तु तदस्त्येव, तदेव तस्य ज्ञानस्य विषयो भवेदिति। तन्न सम्भवति; तदानीं तस्य रजतस्य चक्षुरिन्द्रियेण सन्निकर्षाभावात्;—नहि इन्द्रियासन्निकृष्टस्यापि पदार्थस्य प्रत्यक्षं ज्ञानं भवति—नहि "इदं लण्डननगरम्" इत्यस्माकं प्रत्यक्षं ज्ञानं जायते; कुतः? तेन नगरेण सह

* अत्र बहूनि मतान्तराणि सन्ति, तानि क्रमेण वार्त्तौ भविष्यन्ति।

असम्बद्धचक्षुषः सम्बन्धाभावात् । अतो न देशान्तरस्थमपि रजतं तज्ज्ञानविषयः । यदि वा कथञ्चित् (ज्ञानलक्षणया) स्वीक्रियतेऽपि सन्निकर्षः (चक्षुषा देशान्तरीयरजतस्य), न तदा "इदं रजतम्" इति ज्ञानं भवेत्, अपितु "तद् रजतम्" इत्येव ।

अथोच्यते—शुक्तिकाया लोचनेन सन्निकर्षे सति तच्चाकचिक्यादिदर्शनेन देशान्तरस्य रजतस्य "रजतम्" इति स्मृतिर्भवति, भवति च लोचनस्य अपाटवादिदोषेण पुरःस्थितायाः शुक्तेः केवलम् 'इदम्' इति इदन्त्वरूपसामान्यांश ज्ञानम् । तदुभयं ज्ञानं मिलितं सत् 'इदं-रजतम्' इति भवतीति । नेदमपि शुक्तम्; तथाहि—शुक्तिकादौ रजताद्यध्यासस्थले 'इदं रजतं पश्यामीति' प्रत्यक्षरूपमेव ज्ञानं जायते । भवन्मते तु न तथा सम्भवति । देशान्तरस्य रजतस्य यदि स्मरणं स्यात्, तर्हि 'रजतं स्मरामि' इत्येव ज्ञानं स्यात्, न तु 'रजतं पश्यामीति' । वस्तुतस्तु 'रजतं पश्यामी' त्येतदेव भवति । अतो देशान्तरस्थरजतस्य, स्मरणेन शुक्तिकाया इदन्त्वरूपसामान्यांशस्य ज्ञानेन च "इदंरजतम्" इति ज्ञानं न सम्भवति ।

यथा च घटज्ञानस्य विषयो न पटो भवति, न वा पटज्ञानस्य घटः, एवम् 'इदं रजतम्' इत्यस्यापि ज्ञानस्य विषयः पुरोवर्त्ति रजतं विना नान्यत् किमपि सम्भवति ।

अतएव केचिदाहुः—* काचादिदोषदूषितेन नयनेन सार्द्धं पुरोवर्त्तिन्याः शुक्तिकायाः संयोगे सति तस्याः सामान्यविशेषरूपः सर्वोऽप्यंशो न गृहीतो भवति, किन्तु इदन्त्वांशमात्रमेव गृह्यते, तेन चान्तःकरणे चाकचिक्याकारा काचन वृत्तिर्जायते । तया वृत्त्या पूर्वदृष्टरजतसंस्कारस्योद्बोधो भवति अथ तादृशोद्बुद्धरजतसंस्कारसहितं यत् शुक्तित्वरूपविशेषांशस्याज्ञानम्, तदेव प्रातिभासिकरजतरूपेण परिणमते ।

---

* काचो नेत्ररोगविशेषः ॥

अत्रायमनुयोगः सम्भवति—यथा हि घटस्योत्पत्तौ तदुपादानभूता मृत्तिकावश्यमपेक्ष्यते—नहि मृदभावे शिल्पिसहस्रेणापि घट उत्पादयितुं शक्यते, एवं शुक्तिरजतस्थले यदि प्रातिभासिकरूपं किञ्चन रजतमुत्पद्यते तद्धि 'इदं रजतम्' इति ज्ञानस्य विषयो भवेत्, क नु खलु तस्योपादानमिति ।

इदमिहोच्यते—लोके हि द्विविधं वस्तु दृश्यते, तत्र प्रथमं 'व्यवहारिकम्, द्वितीयन्तु 'प्रातिभासिकम्' । तत्र प्रथमं यथा घटपटादिकम्; घटपटादिभिर्हि अस्माकं संसारव्यवहारो निष्पद्यते, यावत् संसारं च तत्सर्वमवतिष्ठते । द्वितीयं प्रतिभासिकम्,—यद्धि प्रतीतिमात्रकालं तिष्ठति, विनश्यति चानन्तरमेव विशेषज्ञानोत्पत्तौ, यथा रज्जु सर्पादि । रज्ज्वां प्रतीयमानः 'अयं सर्प' इति ज्ञानविषयः सर्पस्तावदेव तिष्ठति, यावन् नायं सर्पः, रज्जुरियम् इति विशेषज्ञानं नो जायते । शुक्तिरजतमपि प्रातिभासिकम्, शुक्तौ रजतबुद्धिर्यदा उत्पद्यते, रजतसत्तापि तत्र तदैवानुभूयते, अथ 'नेदं रजतम्,—शुक्तिरियम्' इति विशेषज्ञाने जात एव न तस्मिन् रजतं भवति ।

क्रमशः

विधुशेखरशर्म्मा ।

——:o:——

## सौरकलङ्कः ।

वियन्मण्डलवर्त्तिनामनन्तानां ज्योतिष्काणां चन्द्रमा एवैकः कलङ्कीति प्रसिद्धम् । भगवान् भास्करोऽप्यविमुक्तः कलङ्ककालिम्नेति न वयं तावत् प्रत्येतुं प्रभवामः, युक्तमेवैतत्; तथाहि यस्य खलु ज्योतिषा सर्वमपीदं विश्वमण्डलं प्रतिभासते सोऽयं ज्योतिर्मयो ग्रहराजोऽपि यत् स्वकीयाङ्के तिमिरं पुष्णीयादिति वस्तुत एवेदं महच्चित्रम् । अथ ज्योतिर्विदां वचनं नाविश्वासार्हं तर्हि सूर्य्यस्यापि कलङ्कोऽस्तीति अनङ्गीकृत्य स्थातुं न शक्यते । उभयैरपि प्राचीनाधुनिकैर्ज्योतिस्त-

स्वल्पैः स्पष्टमेव प्रदर्शितं यच्चन्द्रमस इव सूर्य्यस्यापि देहः कलङ्कोपेत इति। उभयोः कलङ्कयोरेतावन्मात्रं पार्थक्यं यत् चान्द्रकलङ्कः स्थिरः,—चिरमप्येकस्मिन्नेव स्थाने वर्त्तते; सौरकलङ्कस्तु न तथा,—सूर्य्यमण्डलस्य यस्मिन्नंशे यावत् स्थानं व्याप्याद्य कलङ्को दृश्यते, कियद्दिनानन्तरं न स तस्मिन्नेवांशे तावदेव स्थानं व्याप्य वा दृश्येत स खलु कदाचिद् विपुलावयवः, कदाचिद्वा स्वल्पाकारः संवृत्तः सूर्य्यशरीरस्य नैकस्थानेषु कानिचिद्दिनानि विचरन् अन्तर्धत्ते। कदाचित्तु भूयोऽपि सूर्य्यमण्डलस्थान्यस्मिन् अंशे नवोनस्य कलङ्कस्याविर्भावो दृश्यते।

चान्द्र-सौर-कलङ्कयोराकारसादृश्यमपि नास्ति। नूनं श्रीमद्भिः पाठकैश्चन्द्रमण्डलस्य कृष्णस्थूलदीर्घरेखामयाः कलङ्का दृष्टाः। सौरकलङ्को न लेशतोऽपि तादृक्। सौरकलङ्का हि दूरवीक्षणयन्त्रेण सूर्य्यदेहस्य बहुषु स्थानेषु वृत्ताकाराणि कृष्णचिह्नानीव दृश्यन्ते। यथा चन्द्रमसः कलङ्करेखा अन्योन्यं संश्लिष्टास्तिष्ठन्ति, सौरकलङ्कास्तु न तथा,—प्रायः खल्वेते सूर्य्यमण्डलस्य विभिन्नेष्वंशेषु अन्योन्यं विश्लिष्टा दृश्यन्ते। साधारणसौरकलङ्कानामायतनं सूर्य्यदेहापेक्षया नाधिकमपि, पृथिव्यपेक्षया अत्यन्तं वृहत्। गणनया निर्णीतं यत् सौरकलङ्कविशेषस्यायतनं कदाचित्ससागरपृथिवीतोऽपि चतुर्गुणेन पञ्चगुणेन वाऽधिकमिति। दृष्टं यत् कैश्चिदोदृशैः कलङ्कैरधिकृतं स्थानं विंशतिसहस्रवर्गक्रोशापेक्षयाप्यधिकमिति। साम्प्रतं कश्चित् तादृगेव सौरकलङ्कः परिदृष्टः। अयमेवं वृहत्तरो यदस्य परिदर्शने दूरवीक्षणमपि नापेक्षितम् वयं कियद्भिर्बन्धुभिः साकं केवलं केनापि कज्ज्वललिप्तेन काचखण्डेनैव तं कलङ्कमपश्याम।

चन्द्रसूर्य्यादीनां ग्रहणादिकमिव सौरकलङ्कस्याविर्भावतिरोभावौ गणनया पूर्वमेव विज्ञातुं नाद्यापि कश्चिदुपायः केनाप्याविष्कृतः। असम्भवो हि तदाविष्कारः। यथा वत्सरस्य कस्मिन् दिवसे, कस्मिन स्थाने, झञ्झावायुर्वा वृष्टिपातो वा भवेदिति न निर्णेतुं शक्यते, सू-

र्य्यमण्डले सौरकलङ्काविर्भावतिरोभावनिर्णयोऽपि तद्वदस्थ एव । भू-खिज्ञाऽगदिकं तत्तत्स्थानगतौ शीततापावपेक्षते,—कस्मिन् दिने प्रकृत्या किं नाम वर्द्धयिष्यते, किं वा ह्रसयिष्यत इति पूर्वमशक्यनिर्णयम्, सौरकलङ्कोत्पत्तिरपि तद्वदेव प्रकृतिमपेक्षते । इति सापि पूर्वं दुर्निर्णया ।

सौरकलङ्कस्याविर्भावतिरोभावकालनियमो नास्तीति सत्यम्, परन्तु ज्योतिर्विद्भिः बहुपर्य्यवेक्षणेन तत्प्राचुर्य्यस्य कश्चिन् नियमोऽधिगतः । प्रायः प्रत्येकादशवर्षं सूर्य्यमण्डले सौरकलङ्कस्य प्राचुर्य्यं दृश्यते; किन्त्वस्य समयव्यवधानस्य सौरकलङ्केन कीदृशः सम्बन्ध इति नाद्यापि ज्ञायते । खी० १६३७ तमाब्दे सूर्य्यमण्डले इयतः कलङ्कस्योत्पत्तिरासीत्, येन सूर्य्यस्य तापालोकयोरापेक्षिकं न्यूनत्वं सर्वैरनुभूतम् । ईदृशोऽपि कश्चित् समयोऽसकृद् दृश्यते यत्रैकस्मिन् वर्षे नैकवारमपि कलङ्कोदयो भवति । कृतं कथनेन, सूर्य्यस्येयमवस्था प्रायः खलु कलङ्कप्राचुर्य्यकालानन्तरमेव एकादशस्य वर्षस्यानन्तरम् भवति ।

साम्प्रतं सौरकलङ्कस्योत्पत्तितत्त्वमालोच्यताम् । प्राचीनज्योतिषग्रन्थालोचने एतद्विषये नैकविधा अद्भुतकथाः श्रूयन्ते । केनापि पण्डितेन सिद्धान्तितम्—सौरकलङ्को वस्तुतो न सूर्य्यमण्डलस्यान्तर्गतम्; कदाचिद् वियति परिभ्रमतां ग्रहाणां केचित् सूर्य्यपृथिव्योरन्तराले आपतन्ति तदानीं सौरालोकस्य पृथिव्यामागमने अवरोधप्राप्तेः सूर्य्यदेहे कृष्णचिह्नानि दृश्यन्ते समुज्ज्वलदग्निपूर्णस्य कुण्डस्य पुरतः कस्मिंश्चित् पत्रे धृते, यथा कुण्डस्य पत्रव्यवहितोंऽशः अनुज्ज्वलो दृश्यते, तद्वत् क्षुद्रक्षुद्रै ग्रहगणैर्व्यवहितः सूर्य्यदेहः वस्तुतः समुज्ज्वलोऽपि भूपृष्ठस्थैः कृष्णकलङ्काकुलै रिव दृश्यते । प्राचीनेषु ज्योतिःशास्त्रेषु अपरेऽपि सिद्धान्ताः श्रूयन्ते । केनापि निर्णीतम्—सौराकाशमण्डले प्रसर्पन्तो मेघपंक्तिरेव सौरकलङ्क इति । अन्येन केनापि तत्प्रतिवदतोक्तम्,—सूर्य्यस्याभ्यन्तरम् अत्युज्ज्वलैर्द्रुतैर्धातुभिः पूर्णम्, ( प्राचीनमतमिदम्, साम्प्रतं न तथा स्वीक्रियते ) यदा कारण-

विशेषेण कस्मिंश्चिदंशे स धातुः शीतलत्वमापन्नः संहतो भवति, दृश्य स एवानुज्ज्वलः शीतलोऽशोऽस्माभिः "सौरकलङ्क" इत्युच्यते। इतमुक्तेन साम्प्रतिकानां ज्योतिर्विदां कठोरपरीक्षया सर्वाण्यपि प्राचीनमतानि भ्रमसंकुलत्वेन प्रतिपादितानि । तदिह आधुनिकाः किं वदन्तीत्यालोच्यताम् ।

सौरकलङ्के साम्प्रतिकं मतं जिज्ञासुभिः पूर्वं किञ्चित् सूर्य्यस्य प्राकृतिकावस्थाज्ञानमुपादेयम्। हार्शेल्-(Herschel) लाप्लास्-(Laplace) प्रमुखाः भुवनविश्रुताः पाश्चात्या वैज्ञानिकाब्रुवन्ति—सूर्य्यमण्डलं नियतमेव केनापि विपुलेन बाष्पावरणेनावृतं तिष्ठति, अतः सूर्य्यमण्डलस्याभ्यन्तरं कीदृशमिति ज्ञातुं न कश्चिदुपायोऽस्ति, वस्तुतः सूर्य्यस्तस्मिन् बाष्पावरणे निगूढोवर्त्तते । तदिदं बाष्पावगुण्ठनं ( Photoshhere ) पृथिव्या बाष्पावरणमिव न स्वच्छं, न वा ज्योतिर्हीनम् । इदं प्रज्वलद् बाष्पावगुण्ठनं महति शून्ये वर्त्तमानं तापालोकौ विकिरति । तन्मन्ये, सूर्य्यस्य तापो न तस्य स्वकीय इति नात्युक्तं भवेदिति सौराकाश एव हि तस्य महिमानं सम्पादयति । प्रागुक्तेनात्युज्ज्वलेन बाष्पावगुण्ठनेनैव सौराकाशः सर्वथा न पूर्णः, तद्बाष्पावरणस्योपरि नातिगभीरं बाष्पस्तरद्वयम् उपर्य्युपरि सज्जितमस्तीति दृष्टम् ।

किन्तु पूर्वोक्तप्रथमबाष्पावरणमिव अनन्तरोक्तं तद्द्वयं नात्युज्ज्वलम् । वैज्ञानिकैरुच्यते—एतयोर्बाष्पस्तरयोर्निम्नवर्त्तिनः स्तरान् नियतमेवैकः क्षीणलोहितालोको निर्गच्छति । एतदुपरिस्थः स्तरस्तु प्रायो निष्प्रभः । ज्योतिःशास्त्रे एतयोःस्तरयोः प्रथमः "वर्णावरणमिति" ( Chromosphere ) द्वितीयस्तु तन्निम्नवर्त्ती "छटामुकुटम्" इति ( Corona ) आख्यायते । महता दूरवीक्षणेन सनैपुणं पर्य्यवेक्षितेऽपि सूर्य्यमण्डले, एतयोः सत्ता न तावत् स्पष्टमधिगम्यते यतः सूर्य्यपृष्ठसंलग्नस्य तस्य खलु प्रज्वलतो बाष्पावरणस्य ( Photosphere ) उज्ज्वलतया अपरावपि स्तरौ समोज्ज्वलावेव दृश्येते, ततश्चान्योन्यं पृथक्त्वेन न निर्णयो भवति । अतएव पूर्णसूर्य्यग्रहणकाल एव वर्णा-

वर्णाच्छटामुकुटयोः सन्दर्शनस्यैकः सुसमयः। अस्मिन् समये चन्द्रेण सूर्य्यमण्डले आवृते, बाष्पावरणमप्यावृतं भवति। अतो वर्णावरणच्छटामुकुटयोरुज्ज्वलत्वं कीदृशमिति परीक्षितुं तदानीं शुक्लोऽवसरोऽधिगम्यते।

साम्प्रतिकैः पण्डितैः प्रागुक्तस्य सौरबाष्पावरणस्य चाञ्चल्यमेव कलङ्कस्य निदानमिति सिद्धान्त्यते। एतैरुच्यते—कारणविशेषेण बाष्पावरणे विच्छिन्ने यदा सूर्य्यस्यानुज्ज्वलो देह उन्मुक्तो भवति, तदानीं सूर्य्यस्य तमुन्मुक्तमंशमेव वयं कलङ्काकारेण पश्यामः। बाष्पावरणं तु तत् कया महाशक्त्या विच्छिन्नं भवतीति नाद्यापि केनचित् निःसंशयं सिद्धान्तितम्। कैश्चिदुच्यते यस्मिन् खलु सज्योतिष्काकाशे बहुलक्षवत्सराणि यावत् समुज्ज्वलन् महान् बाष्पराशिस्तिष्ठति, तदाकाशं यन्नियतमेव शान्तस्तिमितं वर्त्तत इति न सम्भाव्यते। अस्याः क्षुद्रतरायाः पृथिव्या उपरिस्थिते तरलबाष्पमये वियन्मण्डले तापस्यात्यधिकह्रासवृद्धिप्रभावेण अन्तरान्तरा झटिकावर्त्तादीनां कथमिवोत्पत्तिर्भवतीति सर्वेषां प्रत्यक्षम्। अतः सौराकाशं यद् अस्मदाकाशात् कोटिकोटिगुणाधिकाद्वेगचाञ्चल्यपूर्णमिति लीलयैवानुमातुं शक्यते। ज्योतिर्विद्भिरेतेनैवानुमानेन कथ्यते,—प्रायः खलु सौराकाशे प्रज्वलन् समन्तादागच्छन् बाष्पराशिः परस्पराभिघातेन झटिकावर्त्तमुत्पादयति; सोऽयमावर्त्तः काले काले इयत्प्रबलो भवति, येनावर्त्तसंलग्नस्थानस्य बाष्पराशिस्तत्स्थानभ्रष्टो भवति। एवं च तदानीं तद्बाष्पराशेरपगमात् सूर्य्यस्यानुज्ज्वलोऽशोऽस्माभिः प्रत्यक्षीक्रियते।

अन्येषां पण्डितानां मते बुधबृहस्पतिशुक्रादीनां ग्रहाणामाकर्षणमेव सौरबाष्पावरणस्य चाञ्चल्ये कारणमिति। एते वदन्ति—ते खलु ग्रहा युगपदाकर्षणेन सौरबाष्पावरणे किमपि प्रबलमालोडनमुत्पादयन्ति, तेनैव तद् विच्छिन्नं भवति। अत्र केषाञ्चिज् ज्योतिर्विदां मतं किञ्चिद् भिन्नम्। एतैरुच्यते—प्रकामं तापविकिरणेन बाष्पावरणस्य यदा केचिदंशाः शीतलीभूय किञ्चिद् गुरूभवन्ति, तदानीं

ते स्वपार्श्वस्थेषु लघुतरेषु बाष्पेषु न प्लवमानाः स्थातुं प्रभवन्ति; अतः स गुरुः शीतलो बाष्पराशिरधस्तात् सूर्य्यदेहे प्रबलेन वेगेन निपतति सूर्य्यपृष्ठस्थस्तरलो बाष्पस्तु ऊर्द्ध्वं गन्तुं चेष्टते "बल्" महाशयमते एतयोरन्योन्यं विप्रतीपगामिनोर्बाष्पयोः परस्परघातप्रतिघाताभ्यां सौराकाशबाष्पावरणं विच्छिन्नं भवति अन्यच्च यद् बाष्पं स्वभावस्वच्छम्, तदपि प्रज्वलितं सत्स्वच्छं भवतीति स्पष्टमेवास्माभिः परीक्षया दृश्यते । अतो 'बल्'महाशयेनोक्तम्—अत्युष्णावस्थायां सौरबाष्पावरणस्य योंऽशः सूर्य्यपृष्ठमावृणोत्, तस्मिन्नेव किञ्चित् शीतलीभूते अनुज्ज्वले, तेन यत् सूर्य्यपृष्ठ दृश्येतेति किमत्राद्भुतम् ।

यथा तथा वा भवतु सौरबाष्पावरणविच्छेदकारणनिर्णये सत्यपि मतभेदे खण्डितं बाष्पावरणमेव यत् कलङ्कम् जनयति, नेहेदानीं किमपि मतद्वैधमस्ति ।

केवलं कुतूहलनिवृत्त्यर्थमेवेदं सौरकलङ्ककारणाद्यनुसन्धानमिति पाठकैर्न मन्तव्यम् । एतेन सूर्य्यस्यावस्थाविषयकमनेकं तत्त्वमाविर्भूतम् । मन्ये, पाठकैर्ज्ञातमेतद् यत् ज्योतिर्मात्रस्यैव द्वे गती विद्येते । तत्रैकया तत् किमपि ज्योतिरभितो भ्रमति, अन्यया तु स्वस्वाक्षरेखया घूर्णति । पृथिव्यादिवत् सूर्य्योऽपि कयापि निजाक्षरेखया घूर्णतीति प्राचीनैरपि ज्ञातम्, परन्तु किम्परिमाणेयं गतिः, कियद्भिर्दिनैश्चैकं पूर्णावर्त्तनं सम्पद्यत इति ज्ञानस्य तदानीं नोपाय आसीत् । अयमुपायः सौरकलङ्केनोद्भावितः । सूर्य्यदेहस्य क्वापि कलङ्के समुत्पन्ने, दृश्यते, प्रायः खलु स न तत्स्थानं त्यजति, परन्तु पर्य्यवेक्षणेन ज्ञायते कलङ्कमात्रमेव सूर्य्यगोलके एकयैव दिशा गतिमदिति । अतः स्वयं सूर्य्य एव यत् कलङ्कानावर्त्तयतीति प्रागुक्तव्यापारेण किञ्चित् प्रतिभासते । एवं सूर्य्यमण्डलस्य प्रान्तवर्त्तिनः कलङ्कस्य सहसा तिरोधानानन्तरं पुनस्तद्विपरीतप्रान्तत आविर्भावः सूर्य्यस्य कक्षावर्त्तनगतेरस्तित्वं प्रतिपादयति । कलङ्कस्यास्या गतेश्चिरं पर्य्यवेक्षणेन निर्णीतम् यद् यथा चतुर्विंशतिघटिकाभिः पृथिव्याः स्वक-

क्षया एकं पूर्णावर्त्तनं भवति, सूर्य्यस्यापि तथा पूर्वपश्चिमाभिमुखं भ्रमतः प्रायः पञ्चविंशतिदिनैः पूर्णावर्त्तनमेकं सम्पद्यते। सूर्य्यस्याक्षरेखाया अवस्थानं, तस्य बाष्पावरणस्य गाम्भीर्य्यं चानुमानिकं कलङ्कपरीक्षया निर्णीतम्।

सौरकलङ्कस्य सूर्य्यबाष्पावरणमेव कारणमिति अपरमप्येकं प्रमाणमुपलब्धम्। आवर्त्तमाने कस्मिंश्चिद् गोलके तदुपरिस्थाः सर्वेऽपि बिन्दवः समेनैव कालेन पूर्णावर्त्तनं सम्पादयन्ति न च तावता गोलकस्य सर्वस्मिन्नपि स्थाने आवर्त्तनवेगः समानो भवति,—गोलकस्य मध्यस्थानात् बिन्दुर्यावद् मेरोः समीपवर्त्ती स्यात्, तावदेव तस्यावर्त्तनवेगोऽल्पो भवेत् अतः पृथ्वी-सूर्य्यादिवत् आवर्त्तनशीले कस्मिंश्चिज् ज्योतिष्के विषुवरेखास्थस्य बिन्दोरावर्त्तनवेगः मेरुप्रदेशीयबिन्दोरावर्त्तनवेगादधिकः। ज्योतिष्कपृष्ठेषु नदीपर्वतसमुद्रादयो दृढसम्बद्धा इति तेऽपि ज्योतिर्भिः सार्द्धं समेनैव वेगेन घूर्णन्ति। बाष्पावरणस्य तु ज्योतिष्पृष्ठेन न तादृक् किमपि बन्धनमस्ति। अतस्तत् ज्योतिः सर्वमपि बाष्पावरणं स्वगतिवेगेनाकर्ष्टुं प्रभवति। अतो विषुवरेखोपरिस्थस्य मेरुसन्निहितस्य च बाष्पावरणस्यावर्त्तनकालभेदः सम्भवत्येव। सौरमण्डलपर्य्यवेक्षणेन तदेव दृष्टम्। ज्योतिषिकैर्विषुवरेखासमीपस्थानां मेरुसन्निहितानां च विविधानां कलङ्कानाम् आवर्त्तनकालतुलनया तदनैक्यमुपलब्धम्। यतः सूर्य्यस्य यमंशं वयं पश्यामः, स हि केवलं बाष्पमयः, बाष्पावरणस्य च तस्य विच्छेद एव कलङ्कस्योदयो भवतीत्यस्वीकारः साम्प्रतं न केनापि कर्त्तुं शक्यते।

बुधबृहस्पत्यादिभिः सौरज्योतिर्भिरस्माकं क्षुद्रायाः पृथिव्याः सम्बन्धोऽस्त्येव, परन्तु सूर्य्येणैवास्याः सम्बन्धः सन्निकृष्टतमः। सूर्य्य एवैकः सर्वान् ग्रहोपग्रहान् विविधैर्बन्धनैरावध्य परिचालयति। अयमत्र प्रश्नः सम्भवति—यदि नाम ग्रहपतेः सूर्य्यस्य देशे बहुशत-योजनव्यापी एकैकः कलङ्क उत्पद्येत, तर्हि किं पृथिव्यां तत्फलं

किञ्चिदधिगम्येत ? उक्तपूर्वमिदं कलङ्कप्राचुर्य्येण सूर्य्यकिरणतीक्ष्णत्वमप्यल्पं भवतीति परन्तु सौरकलङ्कस्य पृथिव्यां नायमेवैकः प्रभावः । ज्योतिषिकैरालोच्य दृष्टम्—प्रायो ह्यस्मिन् समये पृथिव्यामवृष्टिः अतिवृष्टिर्वा अपरो वा कोऽप्युपप्लवो भवतीति । अपि चास्मिन् समये चौम्बकशक्तेरपि ( Magnetism ) किञ्चित् परिवर्त्तनमुपजायते । पाठकैर्नूनं दृष्टं यद् दिग्दर्शनयन्त्रशलाका दक्षिणोत्तराभिमुख्येन नियतं तिष्ठतीति; भूम्या अपि कापि शक्तिरस्ति ययेयं तां शलाकां स्वां प्रत्याकर्षति । कलङ्कप्राचुर्य्यसमये चौम्बकशक्तेर्बहु परिवर्त्तनं दृश्यते—तदानीं हि चुम्बकशलाकाया ह्यथाश्चल्यं जायते, येन दिङ्नियमः कर्त्तुं न कथमपि शक्यते ।

अनेन चौम्बकपरिवर्त्तनेन सौरकलङ्कस्य कीदृशः सम्बन्ध इति प्रयतमानैरपि पण्डितैर्नाद्यापि निर्णेतुं प्राभूयत । फ्रांसदेशीयेन वैज्ञानिकेन बेकेरल—( M. Becquerel ) महाशयेन उक्तम्—" वियति परिदृश्यमानाया विद्युतः न केवलं पृथिवीत उत्पत्तिः । यथा सूर्य्यः पृथिव्या अपरासां सर्वासां शक्तेर्जनकः, एवं चौम्बकवैद्युतशक्त्योरपि स जनकः ।

सौरदेहे कलङ्कस्योदये तदधिकृतस्थानात् महता वेगेन जलजनक—( हाइड्रोजेन ) प्रभृतीनि लघूनि बाष्पजातानि विद्युद्रूपेण महति शून्ये विचरन्ति; तान्येव च भूपृष्ठसन्निधाने सति भूम्यां वैद्युत-चौम्बकशक्त्योः परिवर्त्तने कारणीभवन्तीति । अस्य मतस्य किमपि दृढं प्रमाणं नास्ति । कियद्दिनमतीतम्, फ्रान्सदेशीयेन सुप्रथितेन ज्योतिर्विदा 'फेइ' ( Feye ) महाशयेन प्रागुक्तसिद्धान्तस्य प्रतिवादे सप्रमाणं प्रतिपादितं यत् कलङ्कस्थाने जलजनक—( हाइड्रोजेन ) बाष्पोद्गमः सम्भवन्नपि न कथमपि पृथ्वीसमीपमागन्तुमर्हतीति । तदेतत् तेन गणितसाहाय्येन प्रदर्शितम् । अतो वक्तव्यं यत् पृथिव्यां सौरकलङ्कस्य प्रभावं प्रति किं कारणमिति

निरूपणे साम्प्रतिकैरपि वैज्ञानिकैः पराभवः स्वीकृत इति ।

श्रीजगदानन्दरायः,
विज्ञानाध्यापकः,
ब्रह्मचर्य्याश्रमः, ( बोलपुर )

---:o:---

## व्रतपालनम् ।

वङ्गेषु नवद्वीपमण्डलान्तर्गते सुप्रथितनामधेये कृष्णनगरे वर्षमेकमतीतम् प्रमथनाथो नाम कश्चिद् ब्राह्मणः स्वयमनिच्छन्नपि केवलं बहुतनयवियोगविधुरायाः सहधर्म्मिण्याः प्रियंवदाया निर्बन्धातिशयेन विवाहोचिते वयसि अवर्त्तमानेनापि निजात्मजेन चन्द्रनाथेन इन्दुमतीत्यभिधेयायाः कस्याश्चिद् अष्टवर्षीयायाःकन्यकायाः पाणिग्रहणं समपादयत् । लब्धं यल्लब्धव्यम्, दृष्टं च यद् द्रष्टव्यमिति नववधूं विलोकयन्ती प्रियंवदा प्रकामं प्रमोदस्रोतस्विन्यां प्लवमानेव सानन्दं वर्षमेकमतिवाहितवती ।

निदाघसमये दिधक्षन्निव जगन्मण्डलं दहनशलाकिकासमूहैरिव दुर्विषहैस्तीक्ष्णतरैः किरणकलापैः समुद्भासमानः मध्यमम्बरमधिरोहन् सहस्रकिरणः काञ्चिदभिनवामेव मूर्त्तिं धारयति । समग्रमपि भुवनं निष्प्राणमिव स्तिमितगम्भीरं कथं कथमिव तिष्ठति । कानिचिद्दिनानि कृष्णनगरं सुविषमेण विसूचिकाव्याधिनाक्रान्तमिति सर्वोऽपि नागरिकजनो भीतभीतो गृहमध्य एव वर्त्तते; ते खलु नियतं पौरजनसंघातसम्मर्दसङ्कुलाः कृष्णनगरस्य पन्थानो जनशून्या निरुद्वेगं निद्राणा इव विद्यन्ते । अन्तरान्तरा भीतिविधुरहृदयानां शववाहकानां गद्गदकण्ठास्फुटो "हरिःहरि" रिति कातरस्वर उद्भवति । काकनिकराश्च शुष्कपादपशिरसि कर्णकटु रटन्तो भीतानपि पौरान् पुनरुक्तं भीषयन्ति, वायुरपि च कथं कथमिव कठोरस्पर्शो जनानां शुष्कं हृदयं पुनरपि शोषयति । अस्मिन्नेव समये प्रमथनाथगृहतो हाहा-

च्छनिरुद्धतिष्ठत्; चन्द्रनाथो विसूचिकयाक्रान्तः, प्रतिहता शक्तिश्चिकित्सकानाम्, प्रतिबद्धः प्रभावो मणिमन्त्रौषधीनाम्, पश्यत, एष चन्द्रनाथः विषमामवस्थामापन्नः, भस्मीभूतः सुखभोगः प्रियंवदायाः । गतश्चन्द्रनाथः स्वस्थानं सफलयितुमिव स्वां दैवलिपिम्, पूर्णश्च कामः कुलिशकठोरस्य विधातृहतकस्य ।

अहो इन्दुमति, अनाथासि, मुषितासि हताशे । शून्यं—जीर्णारण्यं खल्वसौ ते जीवलोकः । चिराय हन्तास्तमितस्ते सुखरविः । साम्प्रतमन्धतमसाच्छन्नं ते जीवनम् । इयं दुःखवेदनैव ते अद्यप्रभृति प्रियसहचरी । फलितमिदानीं दैवेन । अहो प्रसादवैमुख्यं देवानाम्; कष्टमितिदारुणो ग्रहकोपः । मृतश्चन्द्रनाथः, मूढे, इन्दुमति, त्वमपि किं न मृतासि । अनात्मज्ञे, कथमिदानीं कठोरामतिकठोरां यन्त्रणां सहेथाः ?

अहो सुखमयं शैशवम् । सर्वथा अलौकिकीयं सृष्टिर्भगवतो विश्वसृजः । यत्र नातीतो न वा भविष्यन् दशाविपर्य्यासो लेशतो जनान् पीडयति । यत्र च न द्वेषादयो हृदयमाक्रम्य जनान् पशूकर्तुं क्षमन्ते ।

न जानातीन्दुमती स्मर्त्तुमपि शोच्यमात्मनोऽवस्थान्तरम्, न सा क्षणमप्यचिन्तयद्—यद् दैवचौरो जीवनमपि तस्या हृदयादचोरयदिति । न वा सावबोद्धुमचेष्टतापि यत् कथं नु खल्वेते हाहाकारं सोरस्ताडं च रुदन्तीति । कथमिमे ' हा चन्द्रनाथ, हा इन्दुमति ' इत्यसकृदाक्रुश्यानुशोचन्तीति ज्ञातुमसमर्थापीयं केवलं तेषां तादृशीमवस्थामवलोक्य तद्वदेव रोदितुमारभत ।

क्षणेनैव इन्दुमत्या भागधेयेन सह वेशस्यापि परिवर्त्तनं जातम्; मृष्टः सीमन्तमूलादचिरारोपितो बिन्दुः सिन्दूरस्य, उन्मुक्तानि सह शङ्खायसवलयाभ्यां * सर्वाण्यपि समुल्लसन्ति अचिरार्पितान्याभरणानि; दूरीकृतो रक्तपटः; परिधापितन्तु नयनविषादावहमरक्तं वासः ।

* वङ्गेषु एतत् सर्वं सभर्त्तृकालक्षणम् ॥

सान्त्वनात्मज्ञा अनेनापि चिरं वहनीयेन दौर्भाग्यपिशुनेन सुदुर्दर्शेन वेशपरिवर्त्तनेन नाबिभेत्, न व्यसीदत्, न वा लेशतोऽप्यकम्पत ।

प्रियंवदा तु 'हा चन्द्रनाथ, हा स्नेहसर्वस्व, हा मातृवत्सल, हा पुत्र' इति रात्रिन्दिवमाक्रन्दन्ती मूर्त्तिरिव करुणस्य दीनाद् दीनतरामवस्थां प्रतिपद्यमाना मुहुर्मुहुर्विलपन्ती प्रतिपदिन्दुलेखेवातिक्षीणा कथञ्चिदुच्छ्वसिति ।

नगर्य्यां विसूचिकायाः प्रकोप उत्तरोत्तरं वर्द्धते; प्रतिगृहमेव स्वजनवियोगव्याकुलानां मर्मच्छेदोचितो हाहाध्वनिराकर्ण्यते ।

सर्वथा अवितथमिदं यद् विपद् विपदमनुसरतीति । यद् हन्त ईदृशमपि दशाभोगं भुञ्जानेषु प्रमथनाथपरिवारेषु अपरापि विपत्तिरुदपद्यत;—कष्टम् इन्दुमत्यपि विसूचिकयाक्रान्ता । ज्ञात्वैवेदं सर्वं परं व्यसीदन् । व्याधिः क्रमादेव वर्द्धितुमारभत । निमेषादिव द्वित्रा अगदङ्कारा उपस्थिताः; व्यवस्थापितं तैर्भेषजम् । परन्त्वहो कष्टं, किं नाम तेन क्रियताम् ? का खलु भेषजं पिबेत् ? अभितो ध्वनिरुदतिष्ठत्—"अद्य हि तिथिरेकादशी नाम; इन्दुमती च विधवा; न साद्य भेषजं पातुमर्हतीति" । विषमेयमवस्था आपतिता । परिपृष्टैः पण्डितैः तदेव प्रत्युक्तम्—"न खलु धर्मशास्त्रम् ईदृशेष्वपि समयेषु विधवानां जलबिन्दुमात्रस्यापि पानं विदधातीति" । "ननु विषमोऽयमामयः, दुर्लभा ह्यनेनाक्रान्तानां प्राणाः, तत्र तदर्थं भेषजं पिबन्ती विधवाप्येषा दूष्येदिति" बहुशः प्रत्युक्तेऽपि कैश्चित् सहृदयैः, कस्तत् शृणुयात् ? नहि नश्वराणां प्राणानां कृते अविनश्वरो धर्म्मः परित्यक्तुं शक्यते । रोगो द्विगुणमवर्द्धत । पिपासा च बलवद्बाधत रोगिणीम् । जलम्, जलम्, जलम्, इत्यसकृत् सकरुणं सविनयं च जलं याचमानस्तस्याः क्षीणशुष्कः कण्ठः पश्यत्स्वपि बहुषु न केनाप्यन्वकम्प्यत । न बिन्दुरपि सलिलस्य पातितः केनापि तस्या ओष्ठाकरस्योपरि । को नु जनस्तया तदर्थं नाभ्यर्थितः ? न कः करुणार्थिना तरलतरलेन लोच-

नयुगलेन निरीक्षितः ? कोऽथवा उत्थितपतितेन अतिदुर्बलेन करपल्लवेन नाहूतः ? अहो न तथापि कस्यचिद् हृदयं व्यचलत् ? नालभतेन्दुमती विन्दुमपि जलस्य, न वा पायिता सा भेषजम् ।

'वत्से, सहस्व कथञ्चित् कांश्चित क्षणान्; किं कुर्य्याः ? निरीक्षस्व भगवन्तं धर्म्मम्; समाह्वय देवं मधुसूदनम्; स ते सर्वां बाधां निराकरिष्यति वत्से विधवासि, कथमेकादश्यां जलं प्रार्थयसे ? तन्मैवं विक्लवा भूः; अचिरादेव गच्छति रात्रिः; तूर्णमेवोदयति देवो विभावसुः; प्रभूतं ते जलं दास्यामि; तन्नयने निमील्य तूष्णीमास्स्व धर्म्मस्त्वां रक्षिष्यतीत्यादि' विविधं प्रबोधवचनमन्तरा न किञ्चिदन्यत् तदानीम् इन्दुमतीभाग्यं तस्यै उपहर्त्तुं प्राभवत् ।

अहो प्रशस्यो धर्म्मरक्षणप्रकारः ! नूनं तथापतितां तामालोक्य ग्रावापि भिद्येत, लौहमपि विद्रवेत् वज्रमपि च शतधा विदीर्य्येत; परन्तु न तत्रत्यैर्मनागपि विचलितम् ! न विभाता विभावरी, न वा समुदितो भगवान् सहस्रकिरणः । इन्दुमती सुष्ठु खलु बान्धवानामुपदेशवचनमनुसृतवती; निरीक्षितस्तया भगवान् धर्म्मः; आहूतो देवो मधुसूदनः; निमीलितं चिराय लोचनयुगलम्; अवलम्बितं च सुमहन्मौनम् । किञ्च जलं जलमिति न पुनस्तया बान्धवो जन उद्वेजितः ।*

कश्चिद् वङ्गीयः
प्रकाशानन्द शर्म्मा ।

——:o:——

* लेखकेनात्र सत्यमेवोक्तमिति मन्यामहे । वङ्गीयेषु केषाञ्चिदयमेवाचारः, अस्मरियतामन्या अपि एकादश्यां विसूचिकाव्याधिरभवत् । तद्दिने विन्दुमात्रमपि तया भेषजं न पीतम्, द्वादश्यां, प्रातरेव सा परं लोकमुपागतवती । अपि वस्तुत एव 'धर्म्मशास्त्रं' तथा कथयति ?

मि. प. ब.

## भारतभूमिः ।

न स्नेहो गणितो न च स्मृतिपथं नीतस्तथासंस्तवो
विस्रम्भो न विचारितः परिचितो नापेक्षितो वादरः ।
क्लेशः पालनसम्भवः सविपुलो भ्रान्त्यापि नो चिन्तितो
न स्निग्धं हृदयञ्च बुद्धमथवा कालश्चिरं जीवतु ॥
वत्सोऽवैरपिनामधेयमसकृद् यस्याः समुत्कीर्त्तयन्
कीर्त्तिं कामपि साग्रहं जनगणैर्गेयां समाश्लिष्यसि ।
या च त्वामतिवत्सला स्वहृदये धत्तेऽधुनाप्यादरात्
तामेवाद्य न लज्जसेऽवगणयन्, विज्ञोऽसि पुत्राथवा ॥

विधुशेखर शर्म्मा ।

---

## साहित्यरत्नावली ।

### त्रिविक्रमः

अयं शाण्डिल्यवंशजः श्रीधरात्मजदेवादित्यस्य पुत्रः । अधिकं न किंचिन्निश्चितमस्यविषये ज्ञायते । एकमेव दमयन्तीकथापराख्यं नलचम्पूकाव्यमनेन प्राणायि ।* अयमतिप्राचीनइति ज्ञायते । अस्य श्लोकानां कण्ठाभरणे उपलम्भोदृश्यते । 'पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् । हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत' । अयं श्लोकः कण्ठाभरणे दर्पणे चोद्धृतः । अस्य काव्यं सभङ्गश्लेषप्रचुरं नचेदृशी सभङ्गश्लेषे वाग्मिता कस्याप्यन्यस्य कवेर्दृष्टा । सभङ्गश्लेषप्रियतया च यथासंभवं सरलतायां कृतप्रयत्नस्याप्यस्य काव्यं प्रायोऽतीव गहनम् । यत्रकुत्रापि स्वभावोक्तिभ्रान्तिमदाद्यलंकारेष्वपि कौशलमद्भुतमस्य परिदृश्यते तथाचास्य 'कपाले मार्जार'इति भासपद्यस्यानुकारि, दर्पणे उद्धृतस्याज्ञातकर्तृकस्य—

"मुग्धा दुग्धधिया गवां विदधते कुम्भानधोवल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।

---

* अयंबाणादर्वाचीनः सद्दिकाद्योपक्रमेऽनेनवर्णितः ।

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाशङ्कया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका" ॥१॥

इत्यस्य पद्यस्य सदृशमस्य पद्यम्—

सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा-
भिल्लीं पल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु ।
कान्ताः कुङ्कुमकाङ्क्षया करतले मृद्नन्ति लग्नं च य-
त्तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥ १ ॥

प्रायो गद्ये सुबन्धुबाणयोः शैलीमनुकृत्यायं प्रावर्तत । पद्ये तूपक्रमे बाणस्य हर्षचरितोपक्रममनुसरन्नपि पश्चात्स्वतन्त्रामेव प्रणालीं प्रावर्तयत् । अस्य ग्रन्थश्चापूर्णएव दैवाद्बाणस्येव वावतस्थे इति समाप्तिदर्शनाद्भिमाव्यते । अन्यकविभिरक्षुण्णामस्य पद्धतिं प्रदर्शयितुमत्र प्रबन्धद्वयमुपन्यस्यते ।

## नलचम्पूः ।

### १ आर्यावर्तवर्णनम्

अस्ति समस्तविश्वम्भराभोगभास्वल्ललामलीलायमानः, समाश्रः सेव्यतया नाकलोकस्य, ग्राम्यकविकथाबन्धइव नीरसस्यमनोहरः, भीमइव भारतालङ्कारभूतः, अनधीतव्याकरणइवादृष्टप्रकृतिनिपातोपसर्गलोपवर्णविकारः, पशुपतिजटाबन्धइव विकसितकमलकुवलयोच्छलितरजःपुञ्जपिञ्जरितहंसावतंसया प्रचुरचलच्चकोरचक्रवाककारण्डवमण्डलीमण्डिततीरया भगीरथभूपालकीर्तिपताकया स्वर्गगमनसोपानवीथीयमानरिङ्गत्तरङ्गया गङ्गया पुण्यसलिलैः प्लावितश्चन्द्रभागालंकृतैकदेशश्च, धाम धर्मस्य, आश्रयः संपदाम्, आचार्यभवनमार्यमर्यादोपदेशानामार्यावर्तोनाम देशः यत्र कुष्ठयोगोगान्धिकापणेषु, स्फोटप्रवादो वैयाकरणेषु, संनिपातस्तालेषु, ग्रहसंक्रान्तिर्ज्योतिःशास्त्रेषु, भूतविकारवादः साङ्ख्येषु, क्षयस्तिथिषु, गुल्मवृद्धिर्वनभूमिषु, गलग्रहा मत्स्येषु गण्डकोत्थानं पर्वतवनभूमिषु, शूलसंबन्धश्चण्डिकायतनेषु दृश्यते न प्रजासु । यत्र

चतुरगोपशोभिताः संग्रामाइव ग्रामाः, तुङ्गसकलभवनागाइव नगरप्रदेशाः, सदाचरणमण्डनानिनूपुराणीव पुराणि, सदानभोगाः प्रभञ्जनाइव जनाः, प्रियालपनसाराणि यौवनानीव वनानि, विटपिहिताश्चेटिकाइव वाटिकाः, निवृ तिस्थानानि सुकलत्राणीवेक्षुक्षेत्रसत्राणि, जलाविलक्षणाः पशुपुरुषाइवाप्रमाणा स्तडागभागाः, कुपितकपिकुलाकुलितालङ्केश्वरकिंकराइव भग्नकुम्भकर्णघनस्वापाः कूपाः, पीवरोधसः सरितइव गावः, सतीव्रतापदोषाः सूर्यंदु तयइव कुलस्त्रियः। यत्र च मनोहारिसारसद्वन्द्वास्तत्पुरुषेण द्विगुना चाधिष्ठिताः कादम्बरीगद्यबन्धाइव दृश्यमानबहुव्रीहयः केदाराः, किं बहुना।

नास्ति सा नगरी यत्र नवापीनपयोधराः अपिच।
दृश्यते न च यत्र स्त्री नवापीनपयोधरा॥ १॥
भवन्ति फाल्गुने मासि वृक्षायत्र विपल्लवाः।
जायन्ते न तु लोकस्यकदापिच विपल्लवाः॥ २॥

यत्र च सौराज्यरञ्जितमनसः सकलसमृद्धिवर्द्धितमहोत्सवपरम्परारम्भनिर्भराः सततमकुलीनं कुलीनाः प्राप्तविमानमप्राप्तविमानभङ्गाः कतिपयवसुविराजितमनेकवसवः समुपहसन्ति स्वर्गवासिनं जनं जनाः। कथंचासौ स्वर्गान्न विशिष्यते यत्र गृहे गृहे गौर्यः स्त्रियः महेश्वरोलोकः सश्रीका हरयः पदेपदे धनदाः सन्ति लोकपालाः। केवलं न सुराधिपोराजा न च विनायकः कश्चित्। यत्र चलतोपसंबन्धः कलिकोपक्रमश्च पादपेषु दृश्यते न पुरुषेषु। यत्र चमरकवार्तापरमहिमोपघातश्च तुहिनाचलस्थलीषु श्रूयते न प्रजासु। यश्च नीतिमत्पुरुषाधिष्ठितोऽप्यनीतिः सवटोप्यवटसंकुलः कारूपगतोऽप्यगतरूपशोभः। यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः, मात्राकलहं लेखशालिकाः, मित्रोदयद्वेषमुलूकाः, अपत्यत्यागं कोकिलाः, बन्धुजीवविघातं ग्रीष्मदिवसाः कुर्वन्ति न जनाः। किं बहुना।

देशः पुण्यतमोद्देशः कस्यासौ न प्रियोभवेत्।
युक्तो नुक्रोशसंपन्नै र्योजनैरिव योजनैः॥ ३॥

## २ नर्मदातीरभुवः

एवमसौ क्रीडितानेकपामरान्गिरीन्ग्रामांश्च बहुतरकूपशोभिताः सरितः सीङ्गश्च व्यूढपत्ररथान्पथः पादपांश्च लङ्घयन् सालसहिताः पुरीर्नारीश्च सेवमानः पच्यमानगोधूमश्यामलाः क्षेत्रभुवो भिल्लपल्लीश्च परिहरन् विधवाः शत्रुसीमन्तिनीरटवीश्चातिक्रामन् परिवारीणि बन्धुकुलानि सरांसि च बहु मानयन् नातिचिरेण रविरथतुरङ्ग परिहृतविषमशिरःशिखरसहस्रमजस्रममरगणगन्धर्वसिद्धद्वन्द्वस्कन्धमध्यं विन्ध्याचलमनुससार—

ततश्च, दिशिदिशि किमिमानि प्रच्यवन्तेन्तरीक्षा-
दविरतमुत देवी भूतधात्री प्रसूते ।
इति शबरवधूभिस्तर्क्यमाणान्यवापुः
सपदि विपुलविन्ध्यस्कन्धमध्यं बलानि ॥ १ ॥

श्रुतशीलस्तु तुङ्गशृङ्गरङ्गत्सारङ्गाङ्गनासु नक्षत्रासन्नाकाशावकाशविशदृंशजालजटिलासु चलच्चित्रचित्रककरिकलभकदम्बसंचारशबलासु हारिहरिताङ्कुररमणीयासु वनस्थलीषु निक्षिप्तचक्षुषमवलोक्य राजानमिदमवादीत्—

माद्यद्दन्तिकपोलपालिविगलद्दानाम्बुसिक्तद्रुमाः
क्रीडत्क्रोडकुलार्द्धचर्वितपतन्मुस्तारसामोदिताः ।
अन्तःसुस्थितपान्थमन्थरमरुल्लोललतामण्डपाः
कस्यैता न हरन्ति हन्त हृदयं विन्ध्यस्थलीभूमयः ॥२॥

इतश्च पश्यतु देवः—

एषा सा विन्ध्यमध्यस्थलविपुलशिलोत्सङ्गरङ्गत्तरङ्गा-
संभोगश्रान्ततीराश्रयशबरवधूशर्मदा नर्मदा च ।
यस्याः सान्द्रद्रुमाली ललिततलमिलत्सुन्दरीसंनिरुद्धैः
सिद्धैः सेव्यन्तएते मृगमृदितदलत्कन्दलाः कूलकच्छाः ॥३॥

इतश्चास्यास्तीरे—

अंसस्रंसिजलार्द्रजर्जरजटाजूटैर्मनाक्मन्थरा-
स्तिम्यच्चारवतन्तुनिर्मितकुथत्कौपीनमात्रच्छदाः ।
शीतोत्कण्टकितास्थिशेषतनवः स्नात्वोत्तरन्तः शनै-
रेते पश्य पतन्ति पिच्छिलशिलाजाले जरत्तापसाः ॥४॥
पश्यैताः करिकुम्भसंनिभकुचद्वन्द्वोल्लसद्वीचयः
क्रीडन्त्यब्जविकासभासि पयसि स्वैरं पुलिन्दाङ्गनाः ।
उन्मीलन्नवनीलनीरजधिया पक्ष्मान्तरे नेत्रयो-
र्यासां हस्ततलताहताअपि परिभ्राम्यन्ति भृङ्गाङ्गनाः ॥५॥

(इदं च—

कुररभरसहंसहंसमालं मुदितमयूरचकोरचक्रवाकम् ।
क इह सुरुचिरं चिरं विलोक्य प्रवरमते रमते नरो न रोधः ।

(ततश्च—

वककृतनिनदं नदं नदम्भात्कृतसवनं सवनं भजन्तपते ।
निरुपमविभवं भवंस्मरन्तः प्रशमधनामुनयोनयोपपन्नाः ॥६॥

क्वचित्प्रवरगैरिकासमसमुल्लसत्पल्लवं
लवङ्गलवलीलतातलचलच्चकोरं क्वचित् ।
क्वचिद्गिरिसरित्तटीतरुणविस्फुरत्कन्दलं
जलन्निचुलमञ्जरीमधुनिरुद्धभृङ्गं क्वचित् ॥७॥

क्वचिच्चटुलकोकिलाकलितनूत्नचूताङ्कुरं
कुरङ्गकुलसेवितप्रवरसालमूलम् क्वचित् ।
क्वचित्प्रवरसञ्चरत्सुरवधूपदैः पावनं
घनं नयति विक्रियामिह मनोमुनीनामपि ॥८॥

तदेवंविधेषून्मिषन्मुकुलविगलितबहलमकरन्दसीकरासारसुरभित-
(त)लेषु कूजत्कुररपरिवारितसरःपरिसरेषु चलच्चकोरसारसरवरम-
(णी)येषु विहरतु देवः सह सैन्येन नर्मदोर्मिमन्दानिलान्दोलितलतापल्ल-
(वे)षु वनेषु ।

90263

—:o:—

# पाश्चात्यदर्शनम् ।

मुख्यतः पाश्चात्यदर्शनस्य यद्वा सर्वस्या एव पाश्चात्यविद्यायास्त्रयो विभागाः समयत्रयविभागानुसारिणः । ते च समया यथा—१ यवन समयः, २ रोमकसमयः ३ आधुनिकसमयश्च । तत्र यथाऽस्मद्देशेषूत्तरोत्तरं विद्याया हानिर्जाता न तथा पाश्चात्येषु, तेषु तूत्तरोत्तरं विद्यायावृद्धिरेवाभूत्साम्प्रतमपि च स एव वृद्धेः क्रमः ।

यवनेषु चातिबुद्धिमान्सक्रतुनामा ( Socrates ) दार्शनिकोऽभूत् तस्मात्पूर्वेषां दार्शनिकानामेकोवर्गः, द्वितीयः सक्रतुवर्गः तृतीयश्च तस्मात्परोवर्गइति यवनदर्शने वर्गत्रयम् ।

## सक्रतुपूर्वजाः

इतः प्रायोवर्षसहस्रत्रयात्पूर्वं प्राग्यवनेषु * केऽपिप्रकृतिवादिनो दार्शनिकाः समभूवन् । तेषु 'मिलित' नगरे ( Miletus ) स्थलेश ( Thales ) नामा विद्वानभवद्यः किल यवनेषु सप्तबुद्धिमतामेकत्वेन विदितः । सर्वेषां वस्तूनां का खल्वेका प्रकृतिरिति विभावयञ्जलमेवेदृशी प्रकृतिरित्ययं निश्चिकाय † । पृथिवी तस्य मते जले एव प्लवमाना तत्रैव प्रतिष्ठिता वर्तते । ततः तस्मिन्नेव मिलितनगरे अनक्षिमन्द्रनामा ( Anaximander ) विबुधोभूत् । तस्यमते न सलिलादेर्नियतगुणाद्वस्तुनो नवा गुणहीनात्कुतोपि परिमितानियतगुणस्य जगतउत्पत्तिः सम्भाव्यतेइति किमप्यव्यक्त ‡ मनियतानेकगुणमवर्तत यस्माच्छीतोष्णशुष्कार्द्रादिभेदोऽभूत् । अस्मिन्नेवचाव्यक्ते सर्वं प्रलीयते । ( गीतास्वपि—" अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके " । तदनन्तरंचानक्षिमणिनामकः ( Anaximenes ) कश्चिदपरो धीमानुदपद्यत । तेन च परिच्छिन्नस्या-

---

* वासस्थानभेदात्त्रयोयवनगणाः १ प्राग्यवनाः, यवनाः, पश्चिमयवनाश्च ।

† औपनिषदीमाकाशादिसृष्टिं भागशइदमनुकरोति नतु सर्वथा ।

‡ किंचित्सांख्यानुसारि ।

स्य विश्वस्य सामान्य मपरिच्छिन्नं किंतु नियतगुणमेव किंचिन्मूलं भवितुमर्हतीति विभावयता वायु * र्विश्वस्य प्रकृतिरिति निर्णीतम्। ततोदिवोजनिनामा ( Diogenes ) कश्चिद्दार्शनिकोऽभूत्। स्पष्टमेवतेनोक्तमेकस्मादेवादिमात्कस्माच्चिद्वस्तुनः परिणामरूपं † सर्वं जगत् नाभिनवस्य कस्य चिद्द्रव्यस्योत्पत्तिः स्वीकार्या। नवा आत्मतत्त्वं स्वीकरोत्यसौ‡ तत्पूर्वजानां स्थलेशादीनामात्मानात्मनोर्भेदोनज्ञातआसीत् दिवोजनिना तु भेदं ज्ञात्वापि नात्मनः स्थितिरङ्गीकृतेति विशेषः। ज्ञानं चेतनात्मकं न च तत्प्राणैर्विना स्थातुं शक्नोतीति वायुरेव जगतोमूलम् सएव च ज्ञानस्यापिमूलम्। वायोरेव लघुत्वगुरुत्वादिगुणभेदाज्जगतउद्भवः। पृथ्वीयं वायोर्गुरुरंशः तथैव तारका अपि। तारकाश्च पृथिवीतउद्गतैर्वाष्पैः पोष्यन्ते।

अयंचात्र संग्रहश्लोकः—

जगन्मूलं स्थलेशोऽपोऽव्यक्तंचानक्षिमन्द्रकः।
वायुमाहानक्षिमणिर्नास्तिकश्च दिवोजनिः॥

इतः सार्द्धसहस्रद्वयवर्षेभ्यःपूर्वं समधासनगरे (Samos) पृथुगौरनामा (Pythagorus) वैज्ञानिकोऽजनि अयं न प्रकृतिवादी किंत्वात्मवादिनामन्यतमः। (Jonia) यवनेषु ( Phenicia ) फणीशेषु अजगुप्तेषु (Egypt) च भ्रमणं विधाय पश्चादयं पश्चिमयवनेषु (Greek Colonies in Italy) निवासं चकार। पृथुगौरोगणितज्ञआसीत्सर्वे च पृथुगौरीयाः संख्यायामेव जगतस्तत्त्वं प्रतिष्ठितमिति मेनिरे। संख्याया गणितशास्त्रस्य मूलत्वात्स्वरादिसाम्यस्य संख्यापेक्षत्वा न्नियमेन संख्याविशेषाणां प्राकृतेषु वस्तुषु दर्शनाच्च तैरित्थं निरूपितमित्यरिष्टोत्तरः (Aristotle) पृथुगौरीयाणां मते § एकमनेकशून्यं परा देवता। ततएव सर्वे

---

* इदमपि तथवक्रमेण स्रष्टिं किंचिदनुकरोति।

† सारख्यानां परिणामोऽत्रानुसन्धेयः।

‡ लोकायतादिमतमनुकरोति।

§ एकमेवाद्वितीय मित्युपनिषद्वाक्यमत्रानुसन्धेयम्॥

भेदाः समुद्भवन्ति। सत्ता स्थिरा भूतान्यस्थिराणि। जनफाणिकः (Xenophanes) अन्योवैज्ञानिकोऽभूत्। तस्य मते स्थिरा सत्तैव सर्वम्। भूतानि न किंचित्। साचैका सत्ता नित्या। बहुत्वमनियतत्वंच तत्र नोपलभ्यते। परमानदाख्यः (Armenid) जनफाणिनः शिष्य आसीत्। तस्य मते नेन्द्रियकप्रत्यक्षेण किंतु विवेकसहकृतेन ज्ञानेन तत्त्वं प्राप्यम्। सत्तैव च तत् तत्त्वम्। तदतिरिक्तंसर्वमसत्। ज्ञानस्वरूपैवेयं सत्ता सा च परिच्छिन्ना अपरिच्छिन्नाचेत्यादि न निर्णेतुं शक्यते।

क्रमशः

श्रीरामावतारशर्मा

——:o:——

## अदृष्टवाद-विचारः।

'दृष्टम्' इत्यस्य न केवलं चक्षुरिन्द्रियेण अपितु सर्वैरेवेन्द्रियैरनुभूतमित्यर्थे प्रयोगो दृश्यते दर्शनादिषु, ततश्चादृष्टमिति लौकिकानामस्माकं ज्ञानाविषयीभूतं किमप्यतीन्द्रियं वस्तु बोधयति। 'लौकिक' ग्रहणमाविर्भूतज्योतिषामृषीणां व्यावृत्त्यर्थं। तेषां हि सर्वज्ञत्वं प्रसिद्धमेव।

अदृष्टं जनानां ज्ञानास्तिक्ययोस्तारतम्यभावेन विविधार्थत्वेन गृहीतं विविधैर्जनैः (Chance) तथा हि केचिद् व्याहरन्ति "यादृच्छिकं घटनमदृष्टं दैवंवदइति उदाहरन्ति च ते तत्प्रमाणत्वेन—"यथा काष्ठं च काष्ठं च समेयातां महोदधौ। समेत्य च व्यपेयातां तद्वद् भूतसमागमः"। "अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ। पथि संगतमेवैतद् भ्राता माता पिता सखा"॥ "का तव कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः। कस्यत्वं वा कुत आयातस्तत्त्वं चिन्तय तदिदं भ्रातः"॥ इत्यादीनि वाक्यानि। केचिदपरे "जीवानां जन्मसमकालमेव धात्रा लिखिता काचिद् अखंडनीया लिपिर-

दृष्टम्" इति विश्वसन्ति । प्रमाणान्यत्र—"यत्क्षणात् पतितो विन्दु-र्मातृगर्भे नियोजितः । तत्क्षणाल्लिखितं धात्रा यावत् कर्म शुभाशुभ-म्" । "आयुः कर्म च वित्तं च विद्या निधनमेव च । पंचैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनाम्" ॥ "लिखितमपि ललाटे प्रोज्झितुं कः समर्थः" "विधात्रा लिखितं कर्म प्राक्तनं केन वार्यते । ना भुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" ॥ इत्यादीनि । अपरे तु "जन्मा-न्तरीयकर्मजन्यसंस्कारविशेषएवादृष्ट"मिति व्याचक्षते । यथोक्तंम-त्स्यपुराणे "स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम्" । इति ।

एतेषां मतानां हेयत्वोपादेयत्वविचारे वयं पुनः शेषोक्तमेव मत-मनुमोदामहे । कुतः, 'यादृच्छिकं घटनमदृष्टम्' इति लक्षणे स्वीकृते कारणभूतस्येश्वरस्य जगन्नियामकत्वमाक्षिप्येत कार्यकारणसंयोगनि-यमस्य व्याहतत्वापत्तेः । अथ यद्यखण्डनीया काचिन् विधिलिपिरदृ-ष्टम् इति लक्षणं गृह्येत तर्हि विधातुरीश्वरस्य सृष्टिक्रियाणां वैषम्य-नैर्घृण्ये प्रसज्येयाताम् । किञ्च । एतयोर्लक्षणयोः स्वीकृतयोर्मानवानां सर्वथात्मानमनीशमात्मनो मन्यमानानां कर्तव्याकर्तव्यविचारोपेक्षास-म्भवात् संसारे विविधाः क्लेशाः समुत्पद्येरन् । न पुनस्तथा 'जन्मा-न्तरीयकर्मजन्यसंस्कारोऽदृष्टम्' इति लक्षणे स्वीकृते । एतेन हि सर्वे-षामेवोल्लिखितानां विभिन्नमतवादिभिः प्रमाणत्वेन गृहीतानां वचनानां निर्दोषार्थसंगतिप्रतिपादनं सुशकं भवेत् । एवं यादृच्छिकघटनविष-ये वक्तव्यं यत् यद्यिदं यादृच्छिकमिव प्रतिभाति तदपि पूर्वजन्मार्जि-तकर्मरूपादृष्टेन नियन्त्रितमिति । विधिलिपिविषयेऽपि वक्तव्यं यत् विधिर्न कर्मफलस्य स्रष्टा अपितु कर्मणां यथार्हेण फलेन योजयिता ।

यथोक्तं ब्रह्मवैवर्तपुराणे "कर्मानुरूपफलदः सर्वेषां कारणं विधिः । भवितव्यं कृतं कर्म तदमोघं श्रुतौश्रुतम्" । इति

ननु 'पूर्वजन्मसु कृतानां कर्मणामिहजन्मनि कुतः संभवति फलम्, जन्मनः प्रागेव स्वर्गनरकादिभोगेन तेषां निःशेष क्षपितत्वाद्'* इति ।

*यथोक्तं योगवासिष्ठे—"क्षीणे पुण्ये विशन्त्य सं मर्त्यलोकं च मानवाः" इति ।

अत्रोच्यते—'नैवम्, तदभावे पुनर्जन्मनोऽप्यसम्भवात्' इति । अथ 'जन्ममात्रापेक्षितमेव कर्म शिष्टमभूत्' इति चेत् । 'तदपि न । एवं सति जन्माव्यवहितपरमेव मृत्योः सम्भवाज्जीवानाम्' । अतो ब्रूमः, यान्येव कर्माणि स्वर्गनरकभोगपराणि तान्येव भोगेन क्षपितानि न जन्मपराणि कर्माणि । अन्यथा सद्यः प्रसूतस्य अप्राप्तशिक्षस्य शिशोः स्तन्यपानादिकं कार्यं न व्याख्यातुं शक्यम् । एतत्सर्वं हि पूर्वजन्मसंस्कारजन्यम् इत्यत्रास्तिकदार्शनिकाः प्रमाणम् । अत्रापि पुनराशङ्केत, कथमयं संस्कार उपन्यस्यते । नैष कश्चिन्नियमो यदयं जातो मानवशिशुरन्येष्वपि जन्मसु मानव एव आसीद् यतोऽयं स्तन्यपानादिरूपः संस्कार आगतो भवेद्' इति । * जीवस्यात्मन्यन्तर्निहिता कापि शक्तिर्विद्यते । सा च शक्तिर्जन्मनियन्त्रितकर्मसम्पादनद्वारेण क्रमशो विकाशमधिगच्छति । तेन सह देहोऽपि क्रमशो विकाशस्यास्यानुरूपकर्मसम्पादनानुकूलं परिणामं व्रजतीति । अतश्चोपपद्यते मानवदेहस्यासुलभत्वं पुराणादिवर्णितं, विभिन्नजीवरूपेण बहुजन्मापेक्षत्वात् परिणामस्यास्य ।

एतावता दृष्टं यत् दैवं नाम प्राक्तनं पूर्वजन्मार्जितं कर्म वा । तदेव कर्म ऐहिकं सत् पुरुषकारसंज्ञितं भवति । यत् खलु अस्माभिरिह भुज्यते फलं तत् उभयक्रियाजन्यम् । अतोहि समपुरुषकारयोरपि पुरुषयोः फलवैषम्यमुपपद्यते अदृष्टवैषम्यस्वीकाराद् इति ।

यच्च महाभारतादिषु पौरुषं दैवात् बलीयः इति प्रतिपादितं तस्यायमेवाशयो यददृष्टं शुभंवाशुभंवेति नास्माकं विदितमस्ति । अतो यदि जनः तन्निरपेक्षं शुभफलदं कर्म कुर्यात् तर्हि तेन अशुभादृष्टस्य

* अत्र केषांचिद् दार्शनिकानां मते जीवप्रवाहस्यानाद्यनन्तत्वाद् एक एव जीवो नेकवारमप्येषयोनिषु परिभ्रमन् तत्तज्जन्मसंस्कारं वहति । स च संस्कारः पूर्वानुभूतजन्मकाले पुनरात्मानं प्रकटयतीति । परमस्मिन् मते अनवस्थादोषप्रसङ्गाद्धेतोः अन्या युक्तिरुपाश्रियते ।

नियमनेन शुभादृष्टस्य च सम्पोषणेन शुभोदर्कः सम्भवेत् इति । अत एव शास्त्रकारैः पुनः पुन रुपदिष्टम् ।

"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः,
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरुपौरुषमात्मशक्त्या,
यत्ने कृते यदि न सिध्यति कोऽत्रदोषः" ॥

"यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तथा पुरुषकारेण विना दैवं न सिध्यति"॥ इत्यादिभिः श्लोकैः ।

तत् किं "भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्" 'अरक्षितं तिष्ठति दैवरक्षितम्' इत्यादयो दैवप्रशंसनपराः श्लोका दुरभिप्राय-प्रणोदिताः ? नहि । पुरुषकारपराः श्लोकाः यथा जाड्यापनयनादि-श्रेयः साधनपराः एवं एतेऽपि दैवपराः श्लोकाः आत्माभिमानित्वा-दिश्रेयोविघ्नप्रशमनपराः इति । सनातनश्चायं नियमो यत् न किमपि वस्तु तत्त्वतो हितं वाहितं वा । हितत्वमहितत्वं च तस्य देशकाल-पात्रापेक्षमिति शम् ।

श्रीनीलकमल भट्टाचार्यः ।

——:0:——

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

नववर्षारम्भः—भगवतो विश्वम्भरस्य तत्रभवतां श्रीमतां ग्राहक-मित्राणांच पुष्कलेन प्रसादेनाद्य "मित्रगोष्ठी-पत्रिकाया" द्वितीयव-र्षारम्भो जातः । पुनरपि वर्षमेकं तेषां सेवनार्थं धृतपरिकरा वयम्—

"......'मित्रस्य' मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।
'मित्रस्या'हं चक्षुषा सर्वाणिभूतानि
समीक्षे, 'मित्रस्य' चक्षुषा समीक्षामहे" ॥

इति सुधामधुरां वैदिकसूक्तिं मसकृदुच्चारयन्तश्चिन्तयन्तश्च तदर्थं,

पाठकमहोदयानपि क्षणं तत्स्मरणाय प्रार्थयामहे। आशास्महे—अतीताब्द इव इहापि पत्रिकेयं तेषां स्निग्धनयनपातमधिगच्छेदिति।

बङ्गेषु संस्कृतपरीक्षा—बङ्गेषु गताब्दे सम्पन्नायाः तीर्थोपाधि-परीक्षायाः फलमवलोकयन्तो वयं मोदामहे। फलप्रकाशिकायां पत्रिकायां त्रयश्छात्राः पूर्वमीमांसापरीक्षायामुत्तीर्णा इति दृश्यते। अनन्तरातीतेषु त्रिचतुरेषु ततोऽप्यधिकेषु वा वत्सरेषु तत्र नैकस्यापि तादृशस्य छात्रस्य नामधेयं केनापि दृष्टम्। पूर्वमीमांसादर्शनस्य पठनपाठने पण्डितसमाजेषु प्रायो विलुप्ते। तदधीयानाश्छात्रा अतिदुर्लभाः। दर्शनमिदमतिगम्भीरमिति न सन्देहः। पठनपाठन सम्प्रदायविच्छेद एव तस्यान्यतमं कारणम्। दर्शनेऽस्मिन् हृदयाह्लादोचिता बहवोऽर्थाः प्राक्तनैर्भाष्यकारादिभिर्निरपेक्षं चिन्तिताः। आशास्महे क्रमेणैव वयं दर्शनस्यास्य अनुशीलनाभ्युदयं द्रक्ष्याम इति। अन्यश्चेहास्माकं हर्षहेतुः—यदिह वेदपरीक्षामप्युत्तीर्णस्यैकस्य छात्रस्याभिधेयं द्रष्टुं शक्यत इति। अहो अस्माकं दुर्भागधेयविलसितम्, यद् वयं पण्डितपरिषत्सु अग्रमासनमधिगच्छन्तोऽपि न लेशतोऽपि वेदार्थं जानीमः; वेदोऽखिलो धर्म्ममूलम् इति धर्म्ममूलत्वेनोद्घोषयन्तोऽपि वयं न जातु भ्रमेऽपि वेदाध्ययनमिच्छामः। यत्र क्वापि विप्रकीर्णानि द्वित्राणि समुद्धृतानि श्रुतिवचनानि ज्ञात्वैव वेदज्ञानं समस्तमिति कृतार्थम्मन्या भवामः। एतद्विषये विस्तरो वक्ष्यते। इत्थं दशाविपर्य्यासं भुञ्जानेष्वस्मासु एकस्यापि वेदतत्त्वानुशीलनाभिलाषुकस्य नामधेयाधिगमः कस्य नाम वेदार्थपक्षपातिन आर्यकुलसमुत्पन्नस्य भारतीयस्य नानन्दाय भवेत्।

वाराणसी-रामकृष्ण-सेवाश्रमः—वर्षपञ्चकप्रभृति आश्रमोऽयं जनानां कीदृशं महान्तमुपकारं साधयतीति सम्यक् प्रकाशयितुं नास्मल्लेखन्याः शक्तिरस्ति। आश्रमस्यास्यापरं नाम "दरिद्रदुःखप्रतीकारसमिति"रिति। किमर्थमुत्पन्नोऽयमाश्रम इति तेनैव शक्यं बोद्धु-

[। अस्ति कश्चिदाभाणकः—"स्निग्धे शिरसि सर्वोऽपि तैलं निषेक्तुं
भवतीति"। वयमप्यत्र तत्स्मरामः, दुर्लभाः—अतिदुर्लभास्ते पुरु-
ा, ये नाम दरिद्राणां दुःखसन्दर्शनेन वस्तुतः खिद्यन्ते। वाराणसी-
ासिनां नैतदविदितं यत् कियन्तो नाम सत्रालयान्नमात्रैकजीविका
ीना भिक्षवो नियतमेव "अन्नम्, अन्नम्" इति प्रतिमार्गं प्रतिद्वारं
च सकरुणं प्रार्थयमानाः पर्य्यटन्ति। अन्नस्येव स्थानस्याप्येषामभा-
ः। यत्र क्वापि यथा कथञ्चिदेते रात्रिं यापयन्ति। व्याधिसमये य-
थोचितं चिकित्सितमनधिगम्य प्रायेणैते विपद्यमाना राजपथेषु निप-
तिता अपि पार्श्वप्रचलितैरपि लोकनिवहैर्हन्त दृष्टापि न दृश्यन्ते।
ात्सत्यं केवलं चिकित्सितशुश्रूषणाभावादेव बहवः खल्वेते व्यापन्ना
भवन्ति। अस्माकं रामकृष्णसेवाश्रमो देश-जाति-धर्म्मादिनैरपेक्ष्येण
तेषामेव व्याधिविधुराणां निःसहायानां मार्गनिपतितानां तपस्विनां
पथ्यभेषजप्रदानेन यावच्छक्यं सयत्नं स्वहस्तेन सेवनार्थमात्मलाभम-
धिगतः न केवलं तन्मात्रमेव तत्कृत्यं;—वाराणसीयं विद्यास्थानमिति
मुक्तिक्षेत्रमिति च भारतस्य सर्वेभ्योऽपि देशेभ्यः बहवो लोकाः समा-
गत्येह निवसन्ति। अधिकएव तेषां निर्धना वृद्धतराश्च सत्रालये-
भ्योऽपि भाग्यदोषादन्नसंग्रहाक्षमाः। एषां दौर्गत्यं स्वयमस्माभिः
प्रत्यक्षीकृतम्। रामकृष्णसेवाश्रमः परोपकारबद्धपरिकरैः सविग्रहैरिव
दुगारसैः स्वसेवकैः नगर्य्यां प्रतिगृहं भिक्षया संगृहीतेन तण्डुलादिना
अनाहारोपहतानां तेषामपि यथाशक्ति साहायकं विधत्ते। आश्रमस्या-
स्य चतुर्थवार्षिककार्यविवृति रस्मत्करतलमापतिता। तत्र दृश्यते त-
स्मिन् वर्षे ६६५ जना आश्रमात् साहायकमधिगताः। न केवलं
हिन्दवो दरिद्राः, किन्तु महम्मदीया अपि खीष्टीया अपि चात्र निर्वि-
शेषं सेव्यन्ते। उक्तेषु जनेषु भारतस्य सर्वदेशीयानामेव नामान्युपल-
भ्यन्ते। आश्रमोऽयं यत्सर्वेषामेव स्निग्धदृष्टिं स्वस्वानुरूपं साहायकं
चार्हति न तत्र स्तोकोऽपि संशयः। क्रियते रामकृष्णसेवाश्रमेण यत्क-
र्त्तव्यं मनुष्यनामधारिणां, दृश्यते च यद् द्रष्टव्यं नयनशालिभिः।

अत्र यो यत्किमपि प्रदायाश्रममम् अनुजिघृक्षति, तेन तदाश्रमस्य सहकारिसम्पादकसमीपे प्रेषणीयम् । आश्रमगतविस्तरोऽपि तत एव ज्ञेयः । तत्स्थाननिर्द्देश इत्थम्—सहकारि-सम्पादकः, रामकृष्णसेवाश्रमः, वाराणसीनगरम् । Ram-Krishna Home of Service, Benares City.

तन्त्रीवार्त्ता-कौशलम्—तन्त्रीवार्त्ताप्रेरणस्य साम्प्रतं किञ्चिद्-द्भुतमिव यन्त्रमाविष्कृतं येन प्रति'मिनिट्'मात्रकालं ४०,००० शब्दान् तन्त्र्या अपरप्रान्ते प्रेरयितुं ततो ग्रहीतुं च सुस्पष्टाक्षरं शक्यते । अमृतबाजारपत्रिका । 90268

अद्भुतघटिकायन्त्रम्—फ्रान्सदेशे 'लेरो'-( Leroy ) नगरे एकं महाश्चर्यभूतं घटिकायन्त्रमुत्पन्नम्, यद्धि एकशतवर्षाणां दिनं, मासं, वत्सरं तिथिम्, अयनं, महाविषुवं, सूर्यस्योदयम्, अस्तमयनं, समयं च पृथिव्यां प्रथिततमानां १२५ नगराणां प्रदर्शयेत् । —सैव ।

सौरकलङ्कः—एतन्नामकः कोऽपि प्रबन्धः पाठकैः पत्रिकाया अन्यत्र दृश्यते । सौरकलङ्कप्रभावेण शीतातपन्यूनाधिकत्वं भवतीति तत्रोक्तम् । अतीतवर्षे माघादिमासे सर्वत्रैव शीतातिरेकः सञ्जात इति सर्व एव जानन्ति । तदा वैज्ञानिकैरुक्तं तस्मिन्समये दृश्यमानः सौरकलङ्क एव तद्धेतुरासीदिति ।

भूकम्पः—अतीते चैत्रे पञ्चनदप्रदेशेषु महान् भूकम्पो जातः । प्राच्यामपि भारतस्य क्वचित् क्वचित् तत्कम्पोऽन्वभूयत । पञ्चनदे लाहोरादिनगरे महती क्षतिरेतेनोत्पन्ना । भूकम्पस्य किं कारणमित्यत्र मतभेदोऽस्ति । अस्मच्छास्त्रेषु तावद् बृहत्संहितायां ३२ अध्याये वराहमिहिरेणोक्तम्—

"क्षितिकम्पमाहुरेके बृहदन्तर्जलनिवासिसत्त्वकृतम् ।
भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये ॥ १ ॥
अनिलोऽनिलेन निहतः क्षितौ पतन् सस्वनं शब्दं करोत्येके ।
केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः" ॥ २ ॥

इत्युक्त्वा वर्णितं यत्—पुराकिल पृथ्वी सपक्षैः पर्वतैः प्रपतनोत्पतनाभ्यामाकम्पिता सती ब्रह्माणमात्मखेदं न्यवेदयत् । तत्र ब्रह्मा इन्द्रमिदमाह—

"मन्युं हरेन्द्र धाऽयाः, क्षिप कुलिशं शैलपक्षभङ्गाय" ।
सोऽपि-"शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह ॥ ६ ॥
किंत्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम् ।
प्राग्द्वित्रिचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति" ॥७॥ इति

अतः परं वायव्यादि भूकम्पस्य कीदृशं लक्षणं फलं चेति वर्णितम् । अद्भुतसागरे नाम ग्रन्थेऽपि दिग्गजकूर्मपन्नगानां चलनादेव भूकम्पो जायत इत्युक्तम् । यथा—

मेषे वृश्चिकभे गजः प्रचलति व्यासादिभिः कथ्यते,
चापे मीनकुलीरभे च वृषभे सत्यं चलेत् कच्छपः ।
यूके कुम्भधरे मृगेन्द्रमिथुने कन्यामृगे पन्नगः,
तेषामेकतमो यदि प्रचलति क्षौणी तदा कम्पते ॥इति॥

पाश्चात्यानां मतं तु नातिचिरं सन्दर्भान्तरेणैव प्रकाशयिष्यते ।

संस्कृतपरीक्षा—वाराणसीस्थराजकीय संस्कृतपाठशालायाः १९०५ ई० वर्षस्य प्रथममध्यमोत्तमपरीक्षाः मार्चमासस्य २७ सप्तविंशतिदिवसमारभ्य निर्विघ्नेन सम्पन्नाः । तत्र प्रायः त्रिशतपरिमिताः संस्कृतविद्यार्थिनः परीक्ष्या आसन् । युक्तप्रदेशेषु अयमेवैकः प्रधानसंस्कृतविद्यालयः । परीक्षोत्तीर्णैः छात्रैः राजकीयमुद्रांकितं प्रशंसापत्रमधिगम्यते ।

सारनाथे आविष्कारः—पाठकैर्विदितमेव प्राक् यदत्र वाराणस्यां सारनाथनामकस्थाने भूमध्यात्प्राचीनगृहादिकं प्राप्यतइति । साम्प्रतम् प्रायएव तत्स्थानस्य खननकार्यंसुसम्पन्नं जातम् । तत्र बह्व्यः प्राचीना बौद्धमूर्त्तयः, विशालं गृहम्, प्रस्तररचितानि हस्त्यश्वध्वजातप-

नादीनि, अतिप्राचीनाः लेखाश्च प्राप्यन्ते । सर्वैरनुमीयते पुरा तत्र बौद्धानां विहार आसीदिति । अग्रे यद्भविष्यति तत् पाठकेभ्यो निवेदयिष्यामः ।

अद्भुतात्मग्लानिः—इतः पूर्वं वाराणस्यां कस्यापि धनिनो वंशकरीरः कस्यामपि वारवनितायामासक्तोऽभवत् । वारविलासिन्यपि सा न केवलं तद्गतप्राणाऽसीत् इति तु निश्चितमेव । परन्तु एकदा तेन सा अन्यस्मिन्नासक्तेति समनुभूता । एतेन तस्य खलु महापुरुषस्य आत्मग्लानिः समुदपद्यत । तेनैव च क्षोभेण स चिराय संसारस्यासारे सुखभोगे जलांजलिं समर्पयन् आत्मनो हननमकरोत् । युक्तमेवैतत्तादृशानाम् । नास्त्यत्र किमप्यद्भुतत्वमिति मन्यामहे वयम् ।

वाराणस्यां ग्रन्थिविसर्पः (प्लेग)—महदेवाश्चर्यं यदधुनापि नाऽग्रीष्मः समापतितः । यत्र सौरचैत्रादेव नराः ग्रोष्मर्तुमनुभवन्ति । भगवान् पर्जन्यदेवोऽपि न खलु वर्षणाद्विरमति । मन्ये भारतस्य शोकेन तस्य नयनाश्रु विगलतीति । अन्यथा कथमकाले जलदोदयः सम्भवेत् ? एतेन ग्रन्थिविसर्पस्यापि प्रकोपः समधिकएव संजातः । सर्वत्रैव दारुणो हाहाध्वनिरुत्पद्यते । न जाने परमपुरुषस्य कीदृगभिलाषो वर्त्तते । न केवलं वाराणस्यामपितु सर्वत्रैव इयमेवदशा सञ्जाता । एतावतापि कालहतकस्य दुरन्ता पिपासा न परितृप्ता । दैवमेवास्माकं विरुद्धमस्ति तत्कं खलु उपालभेमहि ।

# मित्रगोष्ठी-पत्रिका ।

## ( मासिकं संस्कृतपत्रम् । )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् " ।

ऋग्वेदः ।

द्वितीये वर्षे } १८२७ शकाब्दाः, ज्यैष्ठः । } द्वितीयसंख्या

### संस्कृतभाषा ।

यद्यपि देववाणी उक्तपूर्वैरलौकिकै रनेकैर्गुणैः सम्पन्ना, यद्यपि सा वैदेशिकैरपि विद्वद्भिर्विशेषेणाद्रियते, यदि च सेदानीमपि जरादिभिर्दोषैर्न विकृता, देवीव नित्यस्थिरयौवना च, तथापि निदाघे गङ्गायाः स्रोतसइव तस्या अध्ययनाध्यापनयोर्ह्रासः कलौ भवत्येव, तथाहि नवद्वीपादिष्वपि विद्याया लीलाभवनेषु पञ्चविंशतेर्वर्षेभ्यःप्राक् यावन्तोविद्यार्थिन आसन्, सम्प्रति तावतामर्द्धेऽपिच्छात्राः पठन्ति नवेति संशय्यते, एवं मिथिलासु, वाराणस्यामपि किमुतान्यत्र विद्यास्थाने । तदयमध्ययनाध्यापनयोर्ह्रासः कथंप्रवर्तते इतिचेत्, उच्यते—संस्कृतपण्डितानां यथेष्टं धनार्जनं नास्ति, धनार्जनं विना जीविकापि दुष्करा भवति किमुत प्रयोजनान्यन्यानि तथाहि ब्राह्मणपण्डितानां धनार्जनोपायाः शुचयस्त्रयएव शास्त्रकारैर्विहिताः ते च उपाया याजनाध्यापनप्रतिग्रहाः । तेषांमध्ये याजनेनार्जनं विरलमेव क्रमेण जायते यजमानान् विना कंवा याजयेत् पुरोधाः न च कश्चिद् यष्टुमिच्छति ।

अश्वमेधादयोयागास्तु सर्वथा नष्टाः । दुर्गापूजनादयोऽपि दिनेदिने लोकैस्त्यज्यन्ते । यस्य पित्रा वर्षवर्षे दुर्गादेवी पूजिता तेन सम्प्रति दुर्गाप्रतिमां पुत्तलिकामात्रं मत्वा तत्पूजनं निरर्थकं क्षतिकरंचेति

परित्यक्तम् । केनचिद्वा "अहंवैष्णवः" अन्यान् देवान् न भजेयमिति कृत्वा परित्यक्ता पित्रादिभिः कृतापि वार्षिकी दुर्गापूजा । पितृपितामहान् अज्ञातवैष्णवधर्मान् कथयन् स प्रकारान्तरेण पूर्वपुरुषान् मूर्खान् मन्यते । अन्ये च निर्धनाजाताः व्ययाशक्त्या पूजायज्ञादिकं परित्यजन्तीति यजमाना ह्रसन्ति कं याजयित्वा पुरोधा धनमर्जयेत् । येऽपि यजन्ते तेपि पुरोधसां दक्षिणां बहुमत्वा तां ह्रसयन्ति; एकरजतस्थाने अर्द्धरजतं पादोनरजतं वा कुर्वन्ति एवं दक्षिणापि क्रमशो ह्रसति । याजनस्यैतादृत्यवस्था जाता अध्यापनाया अपि अवस्था सम्यग् हीना, अल्पे एव विद्यार्थिनः संस्कृतं पठन्ति, स्वयं व्ययेन पठितुं न शक्नुवन्ति दरिद्रबालकाहि संस्कृतं पठन्ति येतु समर्थास्ते आङ्गलभाषामधीयते । सुतरां संस्कृतविद्यार्थिनः स्वव्ययेन भोक्तुमप्यसमर्थाः कथंकारं दक्षिणां दद्युः । यदिवा ददति तदा द्विन्त्राणि रजतान्येव इति अध्यापनाया अवस्था जाता । किं तया धनार्जनं कुर्युरध्यापकाः । प्रत्युत जीविकार्थं भैक्ष्याणि उपार्जयितुं धावन्तः कचिदर्द्धचन्द्रं कचिद्वा तिरस्कारं प्राप्नुवन्ति । पुरा दशसहस्राण्यपि विद्यार्थिनामन्नदानेन पुष्णन् मुनिः कुलपतिरासीत् । प्रतिग्रहोऽपि प्रायेण विरलएव यदि कश्चिद्ददाति तदा प्रतिग्रहःसम्भवेत् परन्तु दानमेवं कश्चिन्न करोति कथं दानपात्रं प्रतिगृह्णीयात् ।

तथाचोक्तं कविना—

दानं नो कुरुते करोति यदिवा श्रद्धाविहीनं तदा
श्रद्धाढ्यं यदिवा करोति तदपि प्रायोऽनुतापावहम् ।
दत्त्वा नाप्यनुतापमृच्छति यदि श्लाघां विधत्ते तदा
दाता दोषविनाकृतोन सुलभोयाच्ञालघुत्वेन किम् ॥

सुतरां दोषशून्यस्य दातुर्दुर्लभत्वात् प्रतिग्रहोऽपि दुर्लभइति । अथ वङ्गेषु धनिनोऽभ्युदयकाले अंत्येष्टिकाले वा ब्राह्मणपण्डितान् निमन्त्र्य किञ्चित् किञ्चिद्ददति परन्तु तद्दानमपि पूर्वापेक्षया अल्पतरं जातं क्रमेणाल्पतममपि भवेदिति शङ्कामहे वयम् । तथापि पुरा नवद्वी-

वाध्यापकानां विसर्जनं द्वित्रशतान्यासीत् इदानीं तु तत्र पञ्चाशदेव प्रभूतं विसर्जनं मन्यन्ते दातारः। अपिच पूर्वं यावन्तो ब्राह्मणपण्डिता निमन्त्रिता अभवन् सम्प्रति तावता मद्धेऽपि निमन्त्रिता न भवन्तीति कष्टः खलु प्रतिग्रहः। इत्थं पण्डितानां जीविकाकष्टं विलोक्य विद्यार्थिनः संस्कृताध्ययनमवज्ञाय आङ्ग्लीविद्यामधीयतइति। यद्यपीदानीमनेके धनिनः संस्कृतविद्यार्थिनां भोजनादीनि दत्त्वा, अध्यापकेभ्यश्च वृत्तिं दत्त्वा विद्यालयांश्च संस्थाप्य छात्रानध्यापयन्ति तथापि पण्डिता भूत्वा ते किंकुर्वन्तु इति कोऽपि न भावयति। तदहं मन्ये यदि पण्डितानां कश्चित् द्रव्यार्जनोपायो जायते तदा बहवएव छात्राः संस्कृतं पठेयुरिति। स चोपायः पण्डितानां वृत्तिशालिनि कस्मिंश्चित्कर्मणि नियोजनमेव। पुरा हि हलायुधभट्टादयः पण्डिताः केचन सान्धिविग्रहिकाः केचन गणनाध्यक्षाः अन्येचान्यस्मिन्नुन्नतपदेऽधिकृता आसन्निति न तादृशे कर्मणि दास्यशङ्का कर्त्तव्या।

यद्यपीदानीं तादृशा राजानो न सन्ति तथापि यादृशाधनिनो राजान उच्यन्ते तादृशैरेव निजामात्यपदेषु पण्डिता नियोजयितुं शक्यन्ते। ये ये धनिनो विद्यालयान् संस्थाप्य संस्कृतविद्यामध्याप्य विद्यार्थिनः पण्डितान् कुर्वन्ति ते यदि स्वतः परतोवा तेषां वृत्त्युपायं किञ्चित् कर्म तेभ्योदत्त्वा दापयित्वा वा तान् सुस्थितान् कुर्युस्तदा संस्कृतविद्याया उन्नतिः संस्कृतपण्डितानाञ्च स्थितिः सम्भवति। यदा पण्डिताः पञ्चदश विंशतिं वा रजतानि मासिकीं वृत्तिं प्राप्य विद्यालयेषु शिक्षकत्वं कुर्वन्ति तदा धनिनः पञ्चदश विंशतिं वा रजतानि तेभ्योदत्त्वा कर्म कारयितुं न शक्नुवन्तीति दूरापेतमेतत्।

परन्तु ते विद्यार्थिनः यथा गणनां विषयकर्माणिच विद्यालयेषु शिक्षितुमर्हन्ति तथाव्यवस्था कर्तव्या अपिचाङ्गल भाषामपि यथा अध्येतुं पारयेयुस्तथा यत्नोऽपि कर्त्तव्यः। आङ्गलविद्या यदि सखीव संस्कृतविद्यायाः सहकारिणी स्यात् तदा मणिकाञ्चनयोगइव संस्कृत-

विद्यापि परमशोभना भवेदित्यस्माकं मतम्। जीविका च तया संस्कृतविद्यया सुकरा भवेत् । (क्रमशः)

श्रीमहेशचन्द्रतर्कचूडामणिः ।

——:o:——

## मत्सुयामस्य मुकुरः । *

( जापानीयोपकथा )

बहुपूर्वम् 'इचिगो' विषये 'मत्सुयाम' नगरे कश्चिदनुगुणः परिवारोऽन्यवसत्; तस्मिन्नेको भद्रो गृहपतिः, तत्सहधर्म्मिणी, तयोश्चैका शिशुर्दुहिता आसन् ।

अयं खलु परिवारकर्त्ता कदाचित् कस्मैचिदवर्जनीयाय कर्म्मणे तन्नगरं परित्यज्य गन्तुं प्रयतोऽभवत् ।

साम्प्रतं तत्र पर्यटनस्य लौहवर्त्मादयो बहवः सुखोपाया विद्यन्ते परन्तु पुरातनसमयेषु नैतादृशं पर्यटनसौकर्यमासीत् । तदानीं किल 'इचिगो'-विषयात् तस्य तदानीन्तनी राजधानी 'क्योटो' नगरी बहुभिर्दिवसैः पद्भ्यां गन्तव्याभूत् । अतो न केवलः पथिकः स एव, किन्तु तद्वियोगमापद्यमाना तस्य पत्नी कन्यका चेति सर्वेऽपि ते चित्तोद्वेगपरीता अभवन् ।

पतिरवोचत्—"यथासम्भवं त्वरितमहं प्रत्यावर्त्तिष्ये, सर्वमेवाहं ममास्यामनुपस्थितौ तुभ्यं विसृजामि आशंसे च—त्वं तथा प्रयतिष्यसे, यथास्माकं बहुमतेयं वत्सा न क्लिश्यत इति" ।

दयिताया नयने अश्रुभिः प्लवमाने संवृत्ते । उक्तं तया "प्रियस्यात्मनः कृते त्वया यावत् सम्भाव्यं यत्नः समास्थेयः, अन्यच्च कर्म्मणः सम्पत्त्यनन्तरं नैकमप्यधिकं दिनं तत्र त्वयावस्थेयमिति" ।

* "The Mirror of Matsuyama" ( Jwaya's Fairy Tales Old Japan. इत्यस्यानुवादः ।

अथ तद्वियोगदुःखं सर्वथानवबुध्यमाना तयोः सा मुग्धस्वभावा शिशुकन्यका अपरापरशिशुरिव पितुः परिच्छदान्तं गृहीत्वा परिष्वजमाना तं तदानीमवदत्—"तात, तवेह वियोगसमये काममहं सुशीला तिष्ठेयं, तत् त्वया मदर्थं किञ्चिदुपायनमानेयम्" ।

पतिर्गृहादगन्तुमुदयुङ्क्त । पत्नी तनयामङ्के निधाय प्रवेशद्वारपर्यन्तं तमन्वगच्छत्, अपश्यच्च यावत्तदुष्णीषं दूरकुहेलिकया नाम्रियत ।

माताकथयत्—"भद्रं वत्से, पिता तावत् ते प्रयातः, त्वमिदानीं जनन्या सह सुशीलशिशुरिव गृहं रक्षिष्यसि" ।

"एवं, परन्तु प्रत्यावृत्ते ताते, उपायनमेकं मे प्रदातुं न त्वं जननि तं प्रार्थयिष्यसे ?"

"नूनमहं प्रार्थयिष्ये; कांचिन्मनोरमां शालभञ्जिकामानेतुं दृढसङ्कल्पार्थं माता ते पितरं याचितवती; स तां त्वत्कृते ध्रुवमानेष्यति"।

"अहो कथमिदं शोभनं ! कथमिदं शोभनम् !" दुहिता विलसत् स्ववदनमण्डलं पश्यन्त्या मातुर्द्विगुणं प्रियासीत् । सा खल्ववकाशसमये सुतया सह कदाचित् केलिपुत्रकेभ्यो भोजनोत्सवप्रदानेन कदाचिद्वा तस्यै चेतोरञ्जनेन प्राचीनकथाकथनेन गच्छत्सु विप्रयोगदिवसेषु आत्मानं विनोदयितुं किञ्चिदालम्बन मिवाध्यगच्छत् ।

पतिः स्वकृत्यं सम्पाद्य 'क्योटो' नगरात् त्वरितं प्रत्यावर्त्तत । दूरपर्यटनेन तस्य पाणिपादं वदनं च सूर्यकिरणेन तथा दग्धमिवाभूद् यथा यदा स प्रत्यागतः, तदा तत्सम्बन्धिनो जनान् विना नान्यः कोऽपि प्रथमं तं प्रत्यभिज्ञातुमशक्नोत् । तावन्तं दीर्घकालं सानुरागं चिन्तयन्ती तु तस्य पत्नी कन्यका च निसर्गतस्तत्क्षणमेव तमभ्यजानीताम् । स तयोरेकां दक्षिणतः, अपरां च वामतः संस्थाप्य कुशलप्रश्नमपृच्छत् । तेऽपि तस्मै तस्य स्वास्थ्यं, विघ्नविरहं चाजिज्ञासताम् । अथ स ताभ्यां विश्रामगेहमविशत् ।

तत्र क्षणं विश्रम्य स समानीतां चर्मपेटिकामपावृत्य काञ्चिद् रुचिरां शालभञ्जिकां बहिरकरोत्, अददाच्च कन्यकायै इदं कथयि-

त्वा—' वत्से, त्वदर्थमियमानीता; पुरस्कारोऽयं ते, यत्त्वं मदनुपस्थितौ गेहार्थे शोभनं यत्नमास्थितवतीति'।

तादृशीमुत्तमां पुत्तलीं तत्र तत्पूर्वं जात्वपि अनालोकितवती सा कन्यका पितरं प्रत्यतितमां सन्तुष्यन्ती कराभ्यां तां गृहीत्वा तत्सौन्दर्यवशीकृतेव अभिष्यन्दमानेनेवानन्दरसेन तस्मिन् स्थाने उपाविशत्।

ततः स तच्चर्मपेटिकातो गृहीतैकमुकुरः प्रियामुपसृत्य "तवायमुपहार" इति समार्पयत्। सापि समुचितादरपूर्वकं स्वीकृत्यैनमपश्यत्। परन्तु सा खल्वजाताभ्युदयेषु दिवसेषु "इचिगो" प्रदेशे (अनुन्नते) लालिताभवदिति नैतत्पूर्वं मुकुरमिव पदार्थं कदाचिदैक्षत। अतोऽत्यन्तमौत्सुक्येन किमेतेन क्रियत इति दयितमजिज्ञासत। हसन् स प्रत्यवोचत्—"अयं मुकुरो नाम, लोकैरयं स्वप्रतिबिम्बदर्शनार्थं व्यवह्रियते; अस्मिन्निव प्रदेशे यावन्न किमेषोऽभिलष्यताम्, परन्तु न कथमपि लभ्यते। नियतमहमश्रौषं यत् 'क्योटो' प्रदेशेऽयं प्राप्यते; अचिन्तयं च तदानीं तत्र वर्त्तमानोऽहं यत्तत्संग्रहार्थं स एवावसर इति; तेन चाहमेनमानयम्, आशंसे त्वमेतत्कृते यत्नमाधास्यसीति"।

पत्नी मुकुरागमवृत्तान्तमाकर्ण्य परं प्रमोदमापन्ना "यतोऽयं महार्घः, ततोऽहमेनम् आत्मानमिवावधारयिष्यामि, तथा च करिष्यामि यथायं न क्षीयत" इत्युक्त्वा असकृन्मूर्द्धनि निधाय (आचारोऽयं जापानीयानां कृतज्ञत्वप्रदर्शने) सयत्नं तं पेटिकायामरक्षत्।

अथास्मात्प्रख्यातात् पर्यटनात् कानिचिद्वर्षाण्यतीतानि, महार्घो मणिरिव चाद्रियमाणा तयोर्दुहिता बाल्यमत्यवर्त्तत।

दुःखाकरमिदं वर्णयितुं यत्तस्या जननी सपदि प्रकामं व्याधिमापन्ना।' सा हि प्रकृत्या नितान्तं स्नेहशीलेति जनन्यां पीडितायामतितमाम् उत्कण्ठामभजत। दिवा वा रात्रौ वा न जातु सा मातुः शय्यापार्श्वमत्यजत्। सा हि मातरं भेषजपानार्थं प्रेरयन्ती, मन्दमन्दं पृष्ठे करतलपरामर्शेन व्याधिवेदनोपशमनार्थं प्रयतमाना, अन्यांश्च

विविधान् स्नेहोचितानुपायान् अनुतिष्ठन्ती निद्रालाभार्थं सर्वथाऽसमर्थाभवत् । तथैवं यथाशक्ति कृतायामपि मातुः परिचर्यायां क्रमेणामयो मन्दतरो भवितुमारभत, भिषग्भिर्व्यवस्थापितं भेषजं च सम्यग् निष्फलमदृश्यत ।

यदा ते प्रत्यक्षीकर्त्तुमारभन्त यत् सर्वे खलु चिकित्सकैर्विहिताः प्रतीकाराः, सर्वाश्च परिचर्यास्तयोः,—यौ हि रुग्णां तां नितरामाद्रियेते, वैफल्यमभजन्त, तदैकस्मिन् दिवसे जननी कन्यकां स्वोपधानसमीपे आकृष्य, गृहीत्वा च तस्याः करं क्षणं निःस्पन्दमाना, निर्निमेषाभ्यां नयनाभ्यां तद्वदनमण्डलमालोकयन्ती आसीत्; अथ सकष्टं निःश्वस्यावादीत्—"वत्से, जानेऽहं साम्प्रतं स्वल्पापि ममाशा नास्ति; उपरतायां मयि, अहमिच्छामि, स्वपितरं प्रीणयितुं सुखयितुं च यावत्सम्भाव्यं त्वमितोऽप्यधिकं प्रयतिष्यस इति" । ततः सा काञ्चित्क्षुद्रमञ्जूषां या हि नियतमेव तस्याः शिरः समीपेऽविद्यत, आकृष्य 'मया किञ्चित्ते देयमस्तीति' कथयन्ती पूर्वोक्तं मुकुरं ततो बहिष्कृत्यावदत्—"अहमिमं मुकुरम् उपहार इति पूर्वं ते पितुः सकाशात् प्राप्नवम्—यदा स 'क्योटो' नगरमगच्छत् । मह्यमेव समर्पयितुमनसा तेनेदं दुर्लभतरं वस्तु समानीयत । अहं ते पश्चिमदानत्वेनेदं ददामि । यदि त्वं कदाचिन्मामालोकयितुं बलवदिच्छेः तदेदं गृहीत्वा द्रष्टव्यम्; एवं कृते नियतमेव त्वं मां यत्र क्वापि समये द्रष्टुं शक्ष्यसि" ।

एवमुक्त्वा सा तं मुकुरं दुहित्रे समार्पयत्, अचिन्तयच्च यत् नान्यत् किञ्चित्तस्याः परित्यज्यमानेषु शोचनीयमस्तीति । एतदनन्तरमेव शावसीदन्ती अपरं किञ्चन कथयितुमसमर्थाम्रियत ।

भर्त्तुः, विशेषतस्तु दुहितुस्तद्दुःखं व्यावृत्तमभवत् । कञ्चित् कालं तौ शोकतापेनात्मानमप्यजानन्तौ । तच्छवोपरि अरुदताम् । अथ क्रमेण हृदयं पर्यवस्थाप्य तौ तस्या अन्त्येष्टिसंविधानं समपादयताम् ।

कालो गन्तुमारभत परन्तु बालिकाया जननीं प्रत्यनुरागातिरेको

न मनागप्युपशान्तः । यथा तथास्तु, सर्वावस्थायामेव सा प्रियां मृतां मातरमस्मरत्, स्मृत्वा चाविश्राममरोदीत् ।

एकदा सा सपदि स्वमनसि मातुश्चरमं वचनमस्मरत्—यत् यशो-त्सरदानत्वेन जननी मे तं मुकुरमदात्, तयोक्तमासीत्—यदानीमेवाहं तां द्रष्टुमिच्छेयं, नियतमेव तत्र समर्था भवेयं—यद्यस्य मुकुरस्याभ्य-न्तरमालोकयेत, दुःखाक्रान्तहृदयया तु मया सर्वमेवेदं विस्मृतम् । यथास्तु, अहमेनं वहिष्कृत्य वारमेकं तत्र प्रयतिष्य इति । अथ सा तं पेटिकातो वहिरानीय निर्निमेषमवालोकयत् । तत्र चाद्भुतं यत् तया तरुणे वयसि वर्त्तमानाया आत्मनो जनन्या वदनमण्डलं तस्यै किञ्चित् कथयितुमुन्मुखमिवादृश्यत । चित्रीयमाणापि साचिन्तयत् "अस्मि-न्नादर्शे मे मृताया मातुरात्मा विद्यते, सा मदर्थं करुणामनुभवति; यदा यदाहं तां द्रष्टुं न क्षमेयं, तदा मदिच्छया सैवमां द्रष्टुमागमि-ष्यति अहो, धन्यास्मि; अयमेवानन्द इति"। एवं सा प्रमोदस्य सी-मानमत्यगच्छत् ।

ततः प्रभृति प्रतिदिनं प्रभाते प्रदोषे च सा तन्मुकुरतलं विलोक-यन्ती स्वस्यैकं विनोदनमवाप्नोत् ।

काले तन्मातुर्मृत्योः सांवत्सरिको विधिः पर्यावर्त्तत । पिता च स्वबान्धवानामुपदेशमनुसरन् पुनर्दारानग्रहीत्; सापि तपस्विनी क-न्यैकं विमातरमलभत । सपत्नीतनयापि मधुराकुटिलप्रकृतिः सा विमातरं प्रति नासूयामपुष्यत्; अपि तु आत्ममातेति तस्या निदेशानु-वर्त्तिनी मङ्गलानुष्ठायिनी चाभूत् । परिवारेषु न कश्चिद् विसंवाद उत्थित इति पिता तस्याः परां निर्वृतिमलभत वस्तुतत्त्वानुसारेण तु तत् क्षणिकमेवाभवत् ।

स्त्रियः खलु नियमेन नोदारहृदया भवन्ति । समयेन विमाता सा सपत्नीतनयायां दुर्व्यवहारमाचरितुं प्रावर्त्तत; काले काले च भर्त्तुः सकाशे सर्वप्रकारेण तां प्रत्यभियोगमानयत् दयितस्तु विमातुर्नैसर्गिकीं वैरवृत्तिं पर्यालोच्य न तत्रावधानमदात्, प्रत्युत दुहितर्येवात्मनोऽनु-

कल्पां प्रदर्शयन् पूर्वाधिकं तामाद्रियत। सोऽयं भर्तुर्व्यवहारो दयितायाः नितान्तमसुखावहो जातः। वाचाऽकथितेऽपि तयेदृशो स्वहृदयभावे सेदमैच्छद् यद् यथाकथमप्यस्तु, सा कन्यका तस्याः स्वकीयगृहेऽवस्थानादवश्यं विरमेदिति।

कदाचिद् विमातासौ छद्मना नयनयुगलमार्जनपूर्वं रुदती भर्त्तारमुपगम्य कामं कातरावसन्नेन प्रकारेणावोचत्—"प्रार्थये, अद्य प्रभृति भवन्तं परिहातुं मामनुजानीहीति"।

तथेदमतर्कितमभूद् यथा तदाकर्ण्य तस्या दयितः सर्वथा चकितः सन्नवादीत्—"किं कथयसि—तथेदमनभिमतं नाम ते मद्गृहावस्थानं, येन त्वमेकमपि दिवसमविलम्ब्य मां परित्यक्तुमिच्छसि?"

प्रत्युक्तं तया "न तादृशं किञ्चित्" "त्वया सार्द्धमवस्थानं स्वप्नेऽपि मे नानभिमतम्, किन्तु वर्त्तमानायामवस्थायामस्मिन् निवासे विपन्नं मे जीवनम्; अतः सर्वं विविच्य साम्प्रतत्वामापृच्छ्यगमनमेव युक्ततरमिति चिन्तितवती"। उक्तिरियं रोदनाश्रुसलिलैरनुगता; पतिश्च तामवज्ञातुं नाक्षमत।

सोऽकथयत्, "किं जीवनं ते विपन्नम् नन्वेतत् सर्वं विवरीतुमर्हसि"।

"एवं, विवृणुयामहम्", तदानीमपि रुदती सावदत् "अहं ते दुहितुः केवलं विमातेति सा मामात्मनः सुखप्रतिबन्धं मन्यते। सा मां कदाचिद्विनाशयिष्यति। तदर्थं च सा पूर्वप्रभृत्येव नियतमात्मनः प्रकोष्ठमध्यासीना तत्रैकस्मिन् दारुणि मन्मूर्त्तिमुत्कीर्य आभिचारिकान् मन्त्रान् पठन्ती वर्त्तते। सम्भावयामि तदन्ते सा मां मज्जीवनतो वञ्चयिष्यत इति"।

पतिः साभिनिवेशमिदमशृणोत् विद्वेषमूलकमेवेदमिति तदालोचनमनिच्छतोऽपि तस्य सर्पादि मनस्युत्थितं यत् यतः कुतश्चित् कारणाद् भवतु—दुहिता तस्य सर्वदैव स्वमातुर्गृहे तिष्ठन्ती प्रायो नान्यं जनमवालोकयदिति। अतो विमातुर्वचनानि न निष्फलान्या-

सन्, पितापि ततः प्रभृति कन्यां प्रति सन्दिग्धहृदयः सञ्जातः।

अस्यामवस्थायां, यथा कथञ्चिदस्तु, तद्गृहमुपगम्य स्वयमेवैनं विषयं सम्यक् परीक्ष्य निश्चेतुमिच्छुः स यावत्सम्भाव्यं निःशब्दं तत्रोपगन्तुं समकल्पयत्।

दुहिता तु सा तत्त्वतो विमातृत्वेऽपि मातरमेव तामम्यन्यत, ततश्च तयोर्मध्ये वैरोत्पत्त्यनुगुणं न किञ्चिदन्ववर्तिष्ठत्। एवं तस्यां विमातुः स्नेहमभिलषन्त्यामपि, सा तु विमाता न तामदयत। नैतावदेव, परन्तु यदा साबुध्यत यद्विमाता पितुः सकाशे तस्याः परीवादान् कीर्त्तयति, तदानीं तस्या निर्दयत्वं चिन्तयन्ती दिवानिशमरोदीत्।

एवं सर्वथा जननीस्नेहविनाकृता विषीदन्ती सा न केवलं प्रभाते प्रदोषे वा, किन्तु क्षणमवकाशे लब्ध एव स्वगृहमुपेत्य मुकुरं गृहीत्वा हृदयेन निर्निमेषां दृष्टिं तत्र पातयन्त्यतिष्ठत्।

कदाचिदेवमुन्मनायमाना सा यदा स्वस्थानमागत्य दर्पणतलं पश्यन्त्यासीत्, तिरस्करणी तु गृहस्य प्रमादपावृतैवाभवत् तदा कश्चित् तद्गृहं प्राविशत्। कोऽयमिति लोचने परावृत्य अतर्कितागमनेषु लोकेषु पितरमेवागतं विलोक्यासौ तु मुग्धहृदया मुकुरं तं स्वपरिच्छदवाससा आच्छादयितुमत्वरत; पिता च नयनदुःखावहेनाकारेण "किं त्वमिह नियतमेकाकिनी करोषी"त्यब्रवीत्।

तयोक्तम् "किमिति" ?

अतिकठोरेण स्वरेण सोऽजिज्ञासत—"यत्तदस्तु, किं त्वमत्र वसनेनाच्छादयसि" ?

भीतिविधुरा सा न तावत् किञ्चित् प्रतिवक्तुमशक्नोत्। मौनं तस्याः पितुः क्रोधमवर्द्धयत्। स च तां प्रकामं निरभर्त्सयत्। अथोच्चैः स तामवदत्—"पत्न्या मे वचनं सत्यमेव प्रतिभाति तन्मरणसाधनार्थं रहसि त्वमाभिचारिकीं क्रियामनुतिष्ठसि। यद्यपीयं न ते वस्तुतो माता, परन्तु नियतमेवाहं त्वामवोचं यत्तद्वदेव त्वमस्यामा-

वेशानुवर्त्तनेन सम्मानप्रदर्शनेन च वर्त्तेथा इति । आः । अकार्यंज्ञे, कथं त्वमीदृशी दुवृ'त्तासि सञ्जाता ॥"

सा तु तद्दुहिता अस्मिन् विषये सर्वथा निरपराधासीदिति न तूष्णीं स्थातुमपारयत् । अग्निरिव पितास्याः क्रोधेनाज्वलत् सा तु करयुगलेन तच्चरणं गृहीत्वावादीत्—"ननु तात, न मां निर्दयमधिक्षेप्तुमर्हसि । यावत् किं नाहं मूढा भवेयं, परन्तु नाहं स्वप्नेऽपीदृशं भीषणं वृत्तमचिन्तयम् । अयं मे निश्चयो यत् त्वं केनापि निर्मूलमेव किञ्चित् कथयित्वा वञ्चितोऽसि" । नाङ्गीकृतमिदं तस्याः स्वापराधक्षालनं जनकेन । सोऽवदत् "तर्हि किमिति त्वमेतावन्ति दिनानि स्वगृहे आत्मानं गोपयन्ती तिष्ठसि ? न चैतदेव । साम्प्रतमेव त्वं मामालोक्य, मन्ये, त्वरितं किञ्चिद् वाससा प्रच्छादितवत्यसि; किं तद् ? बहिष्कृत्य प्रदर्शय" ।

सा खलु तदानीमप्यात्मनि पितुः संशयमवबुध्य विविच्य च यदामूलतः सर्ववृत्तान्तप्रकाशनमन्तरेण नान्यत् तत्र किमपि साहायकायास्तीति तदेव वरमिति वसनमध्यान्मुकुरं बहिष्कृत्य पितुः पुरतः स्थापयित्वाकथयत्—"तात, तदिदं यदालोकयन्ती यावदद्य सर्वान् कालानहमयापयम्" ।

श्रुत्वैतज्जनकस्तस्या विरुद्धतर इवाभवत् । उक्तं तेन—"तदयं मुकुरः, यो हि मया क्योटोनगरादानीय उपायनमिति त्वन्मात्रे समर्पितः । परमेतदालोकनेन कालातिवाहने ते किं कारणम् ।"

"अस्त्येव तत्र कारणमिति" सा एकमपि वर्णमपरित्यज्य जनन्युक्तं सर्वं वृत्तान्तं तस्मै अश्रावयत् ।

एवमप्यजातनिश्चयेन जनकेनोक्तम्—"सर्वथेदमप्रत्ययार्हं यत्ते मातुरात्मा मुकुरेऽस्मिन् वर्त्तते, त्वं च यदा यदेच्छसि, तदा तत्रैव तन्मुकुरदर्शनेन तां द्रष्टुं शक्नोषीति" ।

"तात, अहं ते निश्चयेन दृढं कथयामि यन्नेह मया मिथ्योच्यते । अथास्मिंस्ते संशयः, ननु स्वयमेवायं दृश्यताम्"—इत्युक्त्वा

सा मुकुरमात्मसाम्मुख्येन (यथा तन्मुखप्रतिबिम्बस्तत्र निपतेत्) धारयन्ती पुनरपि दार्ढ्यनावदत्—"सेयं मे जननी, इतोऽपि ते संशयः स्यात् ?"

आकर्ण्यैतद् आनन्दोल्ललितो जनकः करतालिकया अवदद्—भद्रं वत्से- अहं कथयामि भक्तिमता चारित्रेण त्वमत्यादरणीयासि। दर्पणफलके प्रतिबिम्बितं वदनन्तु तवैव, न पुनस्तव मातुः। स्पष्टमिदं, ततश्च यज्जनन्या सह ते महत्सादृश्यमस्तीति; सा यदैवेच्छेः तदैवेह मुकुरे मां पश्येरिति तुभ्यं कथयित्वा तथा कौशलमिदमारचितवती यथा त्वमद्यापि तत्र श्रद्दधाना मातुरेवेदं मुखं मुकुरे दृश्यत इति सन्तुष्यन्ती दिवानिशं तदालोकनेन मातरं प्रत्यात्मनो गरीयसीं भक्तिं प्रकाशयसि। वत्से, काममहं त्वां प्रशंसामि। विमातुस्ते वचस्यवधानेन निष्कारणमेव त्वामवजानन्, अभियुञ्जानश्चाहं नितान्तं जिह्रेमि वत्से, प्रसन्ना त्वं पितरं क्षन्तुमर्हसि" उक्त्वेदं स स्त्रीजन इवारोदीत्।

कियत्क्षणपूर्वमेव तत्र कथं तद् वृत्तं सम्पद्यत इति दिदृक्षुर्विमाता गृहजवनिकावृतशरीरासीत्। सा तु तत्सर्वं तथालोक्य नाहमिदं पूर्वमज्ञासिषमिति चिन्तयित्वा द्रुतपदं गृहाभ्यन्तरमुपागमत्। तत्र च करण्डं सबहुमानं दुहितुः पुरतः स्थापयित्वा सौत्सुक्यमवादीत्—"अहो वत्से काममहं वस्तुत एव लज्जितास्मि। अहं ते धर्म्यां प्रकृतिमन्यथैवाजानाम्। असत्येव ते दुष्कृते, असत्यपि च दुरभिलाषे तथाहं त्वयि सासूयहृदयाभवं, यथा त्वां सम्यगवज्ञातवत्यस्मि। दर्पणफलके मायाविन्या इव ते स्थिरदृष्टिपातदर्शनेनैवाहं तत्सर्वं विरुद्धं चिन्तयन्ती पितुः सकाशे ते परीवादानुद्घुष्य तस्यापि चेतोविकृतिमनयम्। स्वीकरोमि—अहमेवास्मि दुर्वृत्तेति। परं त्वितः क्षणादारभ्य मे प्रकृतिः परिवर्त्तेत। स्वात्मजामिवातिप्रीत्या त्वामादरिष्ये। अतीतं वृत्तमिदं कृपया समुद्राम्भसि निक्षिप। स्वकीयामिव मातरं मां मन्यस्व। अहमपि च ते तादृश्येव जननी स्यामिति"।

पत्न्यास्तादृशेन स्वापराधस्य मर्षणप्रार्थनेन पतिः समतुष्यत्, माता दुहिता च ततः प्रभृत्यन्योन्यमैकमत्यमवलम्ब्य एकस्मिन्नेव गृहे अवसताम्, परिवारश्च सोऽभ्युदयमध्यगच्छत् ।

---

## प्रतीच्यविज्ञानविन्दुः ।

१। कुहेलिकाया निवृत्तिः—कुहेलिकाया बहवो दोषाः—शरीरस्वास्थ्यहानिः, स्थले अश्वादिशकटानामन्योन्यमाघातः, जले दिग्विभ्रमः,पोतनिमज्जनं, लण्डनादिषु च स्थानेषु कदाचिन्मध्यन्दिनेऽपि अतिनिबिडत्वात्तस्या दीपालोकं विना गतागतसौकर्य्याभावः ।

अतस्तस्याः प्रतीकाराय कानिचिद्वर्षाणि पण्डितैः सविशेषं तत्त्वमन्विष्यते । तत्फलेनेदं ज्ञातं—जलीयः बाष्पः शैत्यसंयोगात् कुहेलिका भवति । वायौ स्थिता धूमधूलिकणाः कुहेलिकोत्पत्तौ सहायाः—न्यूनशैत्यसंयोगेऽपि धूमधूलिकणाश्रयेण जलीयबाष्पं कुहेलिकारूपेण परिणमते । नगरापेक्षया ग्रामपल्लीषु धूमधूली अल्पे इति तत्र कुहेलिकापि नगरतोऽल्पा भवति ।

अमेरिकावासी पण्डितः 'लज्'-महाशयः कुहेलिकानिवृत्तेः कमप्युपायं निर्णीतवान् ।

पूर्वं किल इंलैण्डीयपण्डितेन "टिण्डाल"महाशयेन दृष्टम्—धूलिमये वायौ, कुहेलिकायां वा रक्षितस्य अत्युष्णीकृतस्य वस्तुनश्चतुःपार्श्वेषु धूलिर्वा कुहेलिका वा न तिष्ठतीति । अत्र हेतुं निर्णेतुं न कश्चित् तदानीं सम्यक् प्राभवत् । अनुमीय तु कैश्चिदुक्तं यत् तद्वस्तुनस्तापेन सन्निकृष्टा धूलिः, कुहेलिका वा दह्यत इति ।

. नातिचिरं लड्-रेले, 'लज्' च इत्येताभ्यां तत्कारणं निर्णीतम्,—तप्ते वस्तुनि समुत्पन्ना तडित् कुहेलिकां स्वसमीपादपसारयति । प्रसिद्धमेवेदं—सजातीयतडित्पूर्णे वस्तुनी परस्परतो दूरं गच्छत इति । एतत्परीक्षार्थं लघुरयमुपायः सर्वैः कर्त्तुं शक्यते—कौशेयव-

सङ्घर्षणेन लाक्षावर्त्तिकायां तडिदुत्पद्यते। ईदृशी कापि तडिद्युक्ता लाक्षावर्त्तिका क्षुद्रक्षुद्राणां पत्रादिखण्डानामुपरि धार्यते चेत्, पत्रखण्डानि तडित्प्रभावेण लाक्षावर्त्तिकायां संसक्तानि स्युः। इत्थं संसर्गेण पत्रखण्डान्यपि तडिद्युक्तानि भवेयुः। अथलाक्षावर्त्तिकातोऽपाकृत्य तानि पत्रखण्डानि पुनस्तद्वर्त्तिकासमीपे नीयेरंश्चेत् तर्हि दृश्येत—पत्रखण्डानि वर्त्तिकातो दूर एव स्थातुं चेष्टन्त इति। एवं, धूलिः, कुहेलिका वा तस्य तस्य वस्तुनः संसर्गेण तडितोऽशमादाय ततश्च सजातीयतडिद्युक्ता सती तत्समीपाद् दूरं गच्छति। अतएव तत्तद्वस्तुसमीपे धूलिः, कुहेलिका वा स्थातुं न शक्नोति।

एतन्मूलमवलम्ब्य 'लज्'—महाशयेन कुहेलिकानिवृत्त्यर्थं यन्त्रमेकं निर्मितम्। एतेन शयनादिगृहतो धूलिकुहेलिकापसारणं सुष्ठु सम्पद्यते। अमेरिकायां यन्त्रकार्यालयेषु नियतमुद्यतैर्धूमैः कार्यनिर्वाहकाणां स्वास्थ्यं नश्यतीति तेष्वपि त्रिचतुरेषु तद्यन्त्रेण धूलि धूमश्चापसार्यते।

---

२। ज्योतिस्तत्त्वम्—अनन्तेऽस्मिन् वियन्मण्डले क्षुद्राणि च महान्ति च बहूनि नक्षत्राणि सन्ति; नैतानि गणयितुं शक्यन्ते। मनस्युदेति—किं तर्हि अम्बरस्यास्य सर्वत्रैव नक्षत्रं विद्यते? पण्डितैः प्रत्युच्यते—नाकाशस्य सर्वं स्थानं व्याप्य नक्षत्रमस्ति; तथा सति दूर-दूरतरस्थानस्थितैः असंख्यैर्नक्षत्रैर्गगनमण्डलं नियतमुज्ज्वलितं दृश्येत। यथा वने अन्योन्यव्यवधानस्थिता अपि वृक्षाः दूरस्थस्य संहता इव दृश्यन्ते, तद्वत्।

एभिर्नक्षत्रैर्वियन्मण्डलस्य कियत्स्थानमधिकृतं 'निउकम्ब'-महाशयेन तन्निर्दिष्टम्। तेनोच्यते-वत्सराणां त्रिशद्भिर्वर्षैरालोको यावद्दूरं गन्तुं शक्नोति, तावत्स्थानं गगनस्य नक्षत्रमण्डलैरधिकृतमिति। आलोकः एक-'सेकेण्ड' समयेन (होरायाः षट्त्रिंशच्छततमभागमितेन)१३,००० क्रोशान् गच्छति। अतस्तत्स्थानं कियदिति चिन्तयन्तु भवन्तः।

एतेनेदं ज्ञायते यदतिबहुत्वेऽपि नक्षत्राणां संख्या परिमिता, तद्-धिकृतस्थानंच परिमितम् ।

अत्रायमनुयोगः सम्भवति—किं त्रिचतुराणि विना सर्वाण्येव नक्ष-त्राणि स्थिराणि ? अत्रापि तेनैवोक्तम्—

अम्बरमण्डले परिभ्रमत्सु नक्षत्रेषु केषांचिदपरैर्नक्षत्रैः प्रतिबन्धो नासंभाव्यः । कदाचिद्भवत्येवेदम् । दूरवीक्षणयन्त्रेण स्वस्वकक्षासु भ्रमतां नक्षत्राणां गतिः, कदाचिच्च तेषु कयोश्चिदन्योन्यमाघातो दृश्येत एवेति ।

३ । एन्-रे ( N-Rays ) फ्रान्सदेशीयेन पण्डितेन ब्लुँद्लो-महा-शयेनोच्यते केभ्यश्चित् प्रस्तरेभ्यो नियतमेव किमपि तेजो निर्गच्छति; मृण्मये काचमये च पात्रेऽप्याहृते तत्तेजो दृश्यते, किमधिकं पत्रखण्डे-ऽपि तत्तेजोलक्षणमालोक्यते । अस्यैव तेजसो नाम 'एन्-रे' ।

एतत्सर्वमालोच्य ज्ञायते यत् पदार्थपरमाणूनामाघातेन चाञ्चल्ये सम्पादित एव तत्तेजो बहिर्गच्छतीति ।

एतेन किञ्चित् प्रयोजनं साधयितुं केचिद्यतन्ते । शरीरेषु स्ना-यूनां कृत्यं दुर्विज्ञेयम्; कदा नाम सहसोद्दीप्ता का स्नायुः किं करो-तीति नाद्यापि केनापि सम्यङ् निर्णेतुं शक्यते । कैश्चिदुच्यते यदि तेजस्त्यागं प्रति तत्पदार्थस्योत्तेजनमेव हेतुः, तर्हि कथञ्चित् स्नायूनां चित्रे ( Photograph ) गृहीते सहैव तत्तेजस्त्यागप्रकारस्यापि चित्रं गृहीतं भवेत् । ततस्तच्चित्रदर्शनेनैव का नाम स्नायुः कथं कियत्कृत्यं करोतीति विज्ञायेत । 'एन्-रे'-तेजस इहैवोपयोगश्चिन्त्यते ।

जर्म्मनि—इंलण्ड-देशीयैः पण्डितैस्तु नैतत्सत्ता स्वीक्रियते । अत्र जर्मनि-पण्डिताः तत्तेजो दृष्ट्वापि कथयन्ति यत्र केवलं दर्शनेनै-वास्य सत्त्वं स्वीकर्त्तुं शक्यते, भ्रान्तमपि तद् भवेत् कामं सम्भाव-यामः अस्मद्दृष्टिदोष एवास्य भ्रमस्य कारणमिति ।

श्रीजगदानन्दरायः ।

——:o:——

# यत् किञ्चित् प्राप्तकालम् ।

विदितं सर्वैः साम्प्रतं खलु शिक्षासंस्कारमधिकृत्य कानिचिद्दिनानि जनानां चेतःसु कीदृशं महदस्थैर्यमुत्पन्नमिति । परन्त्विदमति दुःखाकरं यत् तपस्विन्याः संस्कृतशिक्षायाः कृते न कश्चित् किमपि कुर्वन्नद्यापि केनचिन्निरीक्ष्यते । ये हि संस्कृतभाषायाः प्रधानावलम्बभूताः तेषामेवास्मदीयानां पण्डितमहोदयानां परमौदासीन्यमत्रालोकयामः; अन्यतस्तु विस्मयावहं प्रमोदकरञ्चेदं यद् यैः सार्द्धमस्य नवीनः संस्तवः, त एवास्या अभ्युन्नतये यतन्ते । किं बहुना सर्वथा अस्मत्कृत्यजातं विधिना तेषामेवोपरि विन्यस्तम् । वयन्तु केवलं व्यर्थैरभिमानैरापूरित हृदयकन्दराः चापलवचनप्रपञ्चैर्दिगन्तरं ध्वनयामः।

अध्ययनाध्यापनाभ्यां सर्वमप्यायुःकालं संस्कृतार्थं नियोजितवद्भिरपि तत्रभवद्भिः पण्डितमहाशयैः केनोपायेन तच्छिक्षादानं पुष्कलाय पारलौकिकाय लौकिकाय वा लाभाय भवेदिति न मनागपि चिन्त्यते । साम्प्रतं जनानामायुर्ह्रसति, विषयास्तु वेद्याः क्रमेणैव वर्द्धन्ते । पूर्वं यद्धि सूत्रस्वरूपन्यायादिदर्शनं कियद्दिनपाठ्यमासीत्, तत्रैवेदानीं परःशता ग्रन्था उत्पन्नाः, उत्पद्यन्ते, काले चोत्पत्स्यन्ते। इत्थं निखिलेनाप्यायुः समयेन न्यायदर्शनमप्येकमामूलाग्रम् अधिकर्त्तुं कश्चित् न शक्नुयात्, किमुतान्यत् । अन्येषामपि शास्त्राणामियमेव गतिः

किमत्र विधेयमिति विचार्यम् । यद्येकः स्वजीवितकालमेकस्यैव शास्त्रस्याधिगमायातिवाहयेत्, न चापराणि शास्त्राण्यालोचयेत्, तर्हि स वस्तुतः पण्डितपदमर्हन्ति न वेति बहव एव संशेरते । दृश्यते साम्प्रतं न्यायशास्त्रमधीयाना विद्यार्थिनः, तदध्यापयन्तः परां प्रतिष्ठामधिगता अध्यापकाश्च, ये हि सर्वमायुर्न्यायशास्त्रकृते यापयन्तोऽपि किंप्रयोजनकं न्यायशास्त्रमिति न सम्यग् जानन्ति । नहि अनुमानमात्रनिर्णय एव प्रयोजनं न्यायशास्त्रस्य, न वा केवलं समितिसमरेषु सिंहनादोच्चारणम् प्रायो हीदानीं न्यायशास्त्राध्येतारो व्याप्त्यादि-

कतिपयपदार्थनिर्वचनपूर्वम् अनुमाननिर्णयमेव न्यायशास्त्रस्य परं पुरुषार्थं मन्यमानाः, तन्मात्रज्ञानेनैव त्रिभुवनमेवास्माभिर्ज्ञातमिति प्रौढाहङ्काराः सर्वमन्यच्छास्त्रं तृणमिवावगणयन्तो भ्रमेणाऽपि शास्त्रान्तरादानं कर्त्तव्यमिति नावबुध्यन्ते । किं बहुना कार्यकारणभावादिसाधनं यदनुमानस्यप्रयोजनं तदपि तैरसुलभम् । न हि ते कस्मिंश्चिदद्भुतेवस्तुनि दृष्टे केन द्रव्येण कथं तन्निर्मितमित्यादि पाश्चात्यविद्वांसइवानुमातुं शक्नुवन्ति महदद्भुतं—येषां हि तस्य शास्त्रस्य कृते जीवनमेवातिक्रान्तं तेऽपि तस्मिन् शास्त्रे कियन्तः, कीदृशाः, किंकर्तृकाश्च ग्रन्थाः सन्तीत्यपि न जानन्ति । अपरेषां शास्त्राणां तु कथैव नास्ति । शास्त्राध्येतॄणामिमामेवावस्थामालोक्य सार्द्धद्विशत वत्सरेभ्यः पूर्वं मनस्विना श्रीमता वेङ्कटाध्वरिणा विश्वगुणादर्शे कृशानुनाम्नोगन्धर्वस्य मुखेन नैयायिकान् प्रत्युक्तम्—

न जिघ्रत्याम्नायं, स्पृशति न तदङ्गान्यपि सकृत्;
पुराणं नाधीते, न गणयति किञ्चित् स्मृतिगणम् ।
वदन् शुष्कं तर्कं परपरिभवार्थोक्तिभिरसौ
नयत्यायुः सर्वं निहतपरलोकार्थमधनः" ॥ इति ॥

अतएव चान्येनापि केनचिदुक्तम्—

मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः,
श्रीमच्छङ्करभाष्यतो भगवती गीताप्यधीता न यैः ।
सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वापि किञ्चित्ततो
भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते" ।

जानीमो वयं न्यायगुणान् दुरपह्नवाश्च ते । यथा वेङ्कटाध्वरिणैव विश्वावसुमुखेनोक्तम्—

"मोहं रुणद्धि, विमलीकुरुते च बुद्धिम्,
सूते च संस्कृतपदव्यवहारशक्तिम् ।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति,
तर्कश्रमो न तनुते किमिहोपकारम्" ।

परन्तु यदि निरुद्धमोहप्रसरया विमलया बुद्ध्या कर्त्तव्यं न क्रियते, तर्हि किं तया प्रयोजनम्। समुद्दीप्तत्वेऽपि दीपस्य यद्यसौ पदार्थोद्भासनाय न विनियुज्यते, तर्हि किं तेन स्थितेनास्थितेन वा?

नास्माभिर्नैयायिका निन्द्यन्ते, अपितु प्रचलन्ती संस्कृतशिक्षापद्धतिरेवेति पाठकैर्न विस्मर्त्तव्यम्। यथा नैयायिकाः, तद्वदपरेऽपि दार्शनिकाः अन्येच वैयाकरणादयः। प्रायो ह्येकदर्शनाध्यायी दर्शनान्तरं नालोचयति। सत्स्वपि वेदान्तदर्शनस्य बहुषु भाष्येषु एकाधिकभाष्यानुशीलयिता विरलप्रचार एव तत्रापि बहवश्चतुःसूत्रीमात्राभ्यासकृतिनः। बौद्ध-प्रत्यभिज्ञादिदर्शनकथा तु समुद्रोदरं प्रविष्टा। नास्तिकत्वेन बौद्धजैनादिदर्शनमसेव्यमित्ययं वादस्तु बालप्रलाप इव सर्वथा विचारासहः। किंच जैनेभ्योबौद्धेभ्योवा द्रव्यलाभे सर्वथा तेषां मतमनुशीलनीयं नान्यथेति सांप्रतिकविदुषां सिद्धान्तः।

लोके संस्कृतमेवैकं वेद्यं नापरमिति को नाम वक्तुं साहसमादध्यात्। अस्त्येवैतद् यत् संस्कृतभाषा भाषान्तराणां जननीभूता श्रीमतां मोक्षमूलारभट्टादीनां मतेन लाटिनादिभाषाणां ज्यायसी स्वसा वेति। न तावता संस्कृतमात्राध्ययनेनैव सर्वं विदितं भवति, तस्या एव वा वस्तुतो रसास्वादो जायते, तन्मुखेन च तस्याः श्रेयस्त्वं वा गम्यते। नहि दुग्धसम्भूतानामपि दधिघृतनवनीतादीनां रसनमन्तरेण तेभ्यो दुग्धस्य माधुर्यं प्रशस्यतरं नवेति ज्ञायते; न वा केवलं दुग्धास्वादमात्रेणैवं दधिघृतनवनीतादीन्यवबुध्यन्ते। अतो यदि केनचित् संस्कृतसाहित्यं कियन्मनोरममिति सम्यग् ज्ञातुमिष्यते, अवश्यं तेनापरभाषीयमपि साहित्यमालोच्यम् उभयो र्हि साहित्ययो र्विवेचनेनान्यतरस्य उत्कृष्टापकृष्टतरत्वं निश्चीयते। तदकृत्वापि अस्मत्साहित्यमेव जगत्यां सर्वातिशायीति महाभिमानेन कथयन्तोऽपि वयं न जिह्नीम इति चित्रमेतत्।

आस्तां तावद् भाषान्तरानुशीलनं, तेन च स्वसाहित्यस्योत्कर्षा-

पकर्षविवेचनम्, बहुकालापेक्षं दुष्करं च तत्। परं प्रकाममिदमद्भुतं, (यथा न्यायदर्शनमधिकृत्य पूर्वमेवोक्तम्) यत् स्वसाहित्यमपि सम्यङ् नालोचयामः। बहवः साहित्यग्रन्थाः संस्कृतभाषायां सन्ति, परं विद्यार्थिभिः कियन्तो नाम तेष्वालोच्यन्ते? कियतां कवीनां ते नामानि जानन्ति? परीक्षायां ये ग्रन्था निर्दिष्टाः, तेभ्यस्त्वतुराण्यप्यधिकानि काव्यानि कश्चिदालोचयति न वेतिसंशयास्पदम्। दृश्यते—प्रायेण हि विद्यार्थिनः परीक्ष्यकाव्यान्यधीयानाः, तेषां पदपदार्थालङ्कारनिर्णयमात्रेणैव तुष्यन्ति। वस्तुतः काव्यस्य क वैचित्र्यमिति ज्ञातुमिच्छापि तेषां न जायते। अभिज्ञानशकुन्तलं सर्वोत्तमं रूपकेष्विति कर्णाकर्णिकाया कथञ्चिज्जानन्तोऽपि ते कथं तदित्यनुयुक्ता मौनमेव सेवन्ते। तत्रभवत आदिकवेर्वाल्मीकेः श्रवणरसायनं रामायणं भगवतो व्यासस्य च अधरितामृतं महाभारतं साहित्यविद्यार्थिभिः स्पृश्यते न वेति को ब्रवीतु। अस्मदधन्यतया तिसृणां (वाराणसी—पञ्चनद—कलिकातास्थितानां) राजकीयानाम्, अपरासां च (नवद्वीपादिस्थानीयानां) संस्कृतपरीक्षाणां नैकस्यापि साहित्यपरीक्ष्यपुस्तकेषु रामायणस्य वा महाभारतस्य वा नामधेयमधिगम्यते। धन्यवादार्हाः काशिक-रणवीरसंस्कृतविद्यालयाध्यक्षाः यैः सर्वासु परीक्षासु रामायणभारतयोरंशा अध्येयत्वेन निर्णीताः।

धर्मशास्त्राध्येतारः न्यायविवादबहुलान् रघुनन्दनशूलपाण्याद्यर्वाचीनविद्वद्भिरचितान् निबन्धानेव प्रायेणालोचयन्ति। अनधिका अपि मन्वादिसंहिताः, आश्वलायनादिश्रौतगृह्यसूत्राणि मीमांसादर्शनं च प्रायः खलु तैर्नाधीयन्ते। नवीनग्रन्थनिबद्धदृष्टयस्ते प्राचीनशास्त्रोक्तानविकृतान् धर्मान् बोद्धुं न क्षमन्ते। तेषु तेषु समयेषु कथं केनाचारेण वा समाजेन वा तेऽस्मत्पूर्वपुरुषा उन्नतिमवनतिं वा प्रतिपेदिरे इति केवलं तत्तच्छास्त्रपाठेनैव ज्ञातुं शक्यम्, न त्वर्वाचीननिबन्धपाठतः। धर्मशास्त्रवेत्तार एव केवलमपक्षपातमामूलं सर्वं विवेच्य तत्तत्स्थानेषु यथोचितं व्यवस्थापयितुमर्हन्ति न केवलं

पञ्जरशुकैरिव केषाञ्चिदभ्यस्तानामक्षराणामुच्चारणेनैव धर्म्मवेत्तृण कृतकृत्यत्वमिति मन्यामहे ।

"वेदोऽखिलो धर्ममूलम्" इत्यस्माकम् उच्चैराघोषः । तदध्ययनमिदानीं विलुप्तम् । कालिदासेनोक्तं "श्रुतौ तस्करता स्थितेति," वयन्त्वद्य ब्रूमः "श्रुतौ वेदज्ञता स्थितेति" । समग्र भारतमन्विष्यताम्, पञ्चषा अपि वेदव्युत्पन्नाः पण्डिताः लभ्येरन् न वेति महान् संशयः । जानीमो वयं वाराणस्यादिषु वेदज्ञा दृश्यन्त एवेति । परन्तु प्रायेणैव ते स्वरमात्रं जानन्ति । सुदुर्लभा अर्थज्ञा नराः । भस्मनि हविर्विसर्जनमिव विनार्थज्ञानमध्ययनं निरर्थकमेव । एतदेवोक्तं यास्कधृतया श्रुत्या—

"स्थाणुरयं भारहारः किलाभू-
दधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञइत् सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ॥
यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" ॥ *

पस्पशायां पतञ्जलिनोक्तं ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति । अद्यत्वे तु परमब्राह्मणा वेदमधीयानाः तदर्थं जानन्तश्च बहव उपलभ्यन्ते; न तु वयं ब्राह्मणा अथवा ब्राह्मणब्रुवाः । पूर्वम् † श्रीमदहिफेनानन्दविद्याम्बुधिना "यक्षयुधिष्ठिरसंवाद"-नामके प्रबन्धे उक्तं यत् प्रतिशतकं नवतिरेव वेदविषये इयदनभिज्ञाः, येन ते धर्मशास्त्रवेत्तारः, संस्कृतज्ञा ब्राह्मणा इति विज्ञाय विस्मय एवोत्प-

---

* इयं श्रुतिः पस्पशायामपि धृता ।

† गतवर्षीयाश्विनमासीय पत्रिकायां । श्रोत्रियत्वं कथं भवतीति यक्षप्रश्ने युधिष्ठिरमुखेन "वेदाश्चत्वार इत्येतावन्मात्रज्ञानेनैव श्रोत्रियत्वं भवतीति" प्रकाशितम् । अवितथमुक्तं तेन । अयमस्मद्विश्वासः निर्मूलक एव स्याच्चेत्, परं प्रमोदावहं भवेत् ।

यते। कोमन्त्रः, किं ब्राह्मणं, किमारण्यकं, कोपनिषत्, किं श्रौतसूत्रं किं धर्मसूत्रम्, कियती वैषां संख्येति प्रश्ने बहूनामेवाधरोष्ठौ निःस्पन्दं तिष्ठति। किं तेषु वर्णितमित्यादिज्ञानस्य तु कथैव नास्ति।

गुणगृह्याः पाश्चात्त्या विपश्चितो वेदार्थमालोचयन्तो गौरवमधिगच्छन्ति, न तु वयं येषां वेदो नित्यमध्येय इति नियमः। धिक् कष्टम्, यदद्य भारतीयाः पाश्चात्यानां वचनमाकर्ण्य वेदस्य गौरवमवबुध्यन्ते; न तु संस्कृतपण्डितानां, वेदपुस्तकान्यपि तैरेव प्रकाशितानि पश्यन्ति। न स्वयमालस्येन ते लिखितुं प्रकाशयितुं वाशक्नुवन्ति ये हि समाजस्य संरक्षणाय तच्छिरस्थानमध्यारोहिताः। साधुवादास्तेभ्यः मोक्षमूलरप्रभृतिभ्यः प्रतीच्यसंस्कृतज्ञेभ्यः, येषां प्रयत्नेन बहवो वैदिकग्रन्थाः प्रकाशमापन्ना दिशि दिश्याचार्याणां कीर्त्तिगाथामुद्गायन्ति, श्रीमता मोक्षमूलरेण वेदार्थमधिगत्य भारताकृष्टहृदयेन सता भारतं प्रति निर्मूलकदुरभिप्रायं पोषयतां प्रतीच्यानां हृदयस्थां बुद्धिं तिरस्कर्त्तुं कियान् प्रयत्नः कृत इति "भारतं किमस्मान् शिक्षयितुं शक्नोतीति" ( India : What can it teach us. ) ग्रन्थे निबद्धैस्तदीयैर्व्याख्यानैः सुष्ठु प्रतीयते। एतद्विषये विस्तरं प्रकाशयिष्यामः। अत्र तु कीटैर्भक्षणमेवपुस्तकस्यपरममुद्देश्यम् नविद्यार्थिभ्योपि तस्यप्रकाशनम्। 'मूर्खान्धकूपपतनादिवपुस्तकानां व्यर्थं गतं बत परोपकृतिव्रतत्वम्' नैषधे।

यथा चैतत्कर्मार्थं पाश्चात्त्या विद्वांसोऽस्माभिः प्रशस्याः, तथा वेदाद्यर्थविषये अस्मन्मतविरुद्धवादित्वात् नूनं ते निन्द्याइति ध्रुवं भवन्तो वदेयुः। पाश्चात्त्यानां शिक्षाप्रकारः साधीयस्त्वेन प्रसिद्धतरः। उत्तमं वा अधमं वा, यत् ते कुर्वन्ति, तत्रैव प्रायेण जनानां श्रद्धा जायते। भारतीया अपि तेषामेव मतं युक्तमिति स्वीकुर्वन्ति, तेन च भारतीयसंस्कृतज्ञेषु शिथिलश्रद्धा जायन्ते। अत्र न तेषामपराधः। वयमेव सर्वथापराध्यामः। स्वयमेवास्माभिर्वेदार्थो नावबुध्यते, कथं नु खल्वत्र तेऽवबोध्यन्ताम् पाश्चात्या यद्वदन्ति, हेयमपि

स्याच्चेत्तत्, तस्य प्रत्याख्यानायास्माकं शक्तिर्नास्ति । अतोऽस्मत्तः प्रतिवचनमलभमानास्ते किं कुर्वन्तु ।

पाश्चात्त्येषु रोथ- (Roth) नामकेन केनचिद् ऋग्वेदस्य व्याख्यानं कृतम् । तत्र का रीतिरवलम्बितेति तद्वचनमेव श्रूयताम्—

"Therefore we do not believe, as H. H. Wilson does that Sáyana better understood the expressions of the Veda than any European exegete; on the contrary we believe that a conscientious European exegete may understand the Veda much more correctly and better than Sáyana."

"विलसन इव न वयं विश्वसिमो यत् सायणः युरोपीयव्याख्याकारापेक्षया वेदार्थं सुष्ठुतरमबुध्यतेति । अयं चास्माकं विश्वासो यद् विचारक्षमः कश्चिद् युरोपीयव्याख्याकारः सायणादपि शुद्धतरम् उत्कृष्टतरं च वेदार्थं बोद्धुं शक्नोतीति" ।

अन्यदपि श्रूयताम्—"We do not consider it the immediate purpose to obtain that understanding of the Veda which was current in India some centuries ago, but we search for the meaning which the poets themselves gave to their songs and phrases. We consequently hold that the writings of Sáyana and of the other commentators must not be an authority to the exegete, but merely one of the means of which he has to avail himself in the accomplishment of his task."—Rudloph Roth's Preface to his great Sanskrit Wurterbuch.

"भारते कियद्वत्सरपूर्वं वेदस्य योऽर्थः प्रचलितः, न वयं तं प्रार्थयामहे, परन्तु वैदिकैः ऋषिभिर्येनार्थेन वेदो विरचितः, स एवास्माभिरनुसन्धीयते । अतः सायणादिव्याख्याकाराणामुक्तिः प्रामाणिकत्वेनावश्यं स्वीकार्येति नास्माभिर्ग्रहीतुं शक्यते । तास्तु व्याख्याः अस्मद्व्याख्याकाले केवलं किञ्चित् साहाय्यं करिष्यन्तीति" ।

अवितथमिदं—यद्यत्त्वे आलोच्यमानां शास्त्राणां यादृशं प्राचुर्यं जातं, तत्र तत्र च यादृग् गम्भीरोऽर्थश्चिन्तितः, तेन एकस्मिन् जन्मनि सविशेषं सर्वशास्त्राधिगमो न कस्यापि सम्भावयितुं शक्यत-

इति । तथापि नैतावन्मात्रं शास्त्रान्तरानधिगमे हेतुर्भवितुमर्हति । इदमस्माभिरभिप्रेयते—सत्यं साम्प्रतम् एकैकस्मिन्नऽपि शास्त्रे बहवो ग्रन्थाः उत्पन्ना उत्पद्यन्ते चेति परन्तु सर्वेऽपि ते ग्रन्थाः सविशेषं पठनीया इति न सम्भवति, कथमनादृत्य,वात्स्यायनपतञ्जलिप्रभृतीन् शिरोमणिनागेशाद्यआदर्तव्याः । अवश्यं हि ग्रन्थेषु केचिदुत्तमाः केकेचिद्वा अधमाः सन्ति । तत्रोत्तमेभ्योऽधमा विभज्यानुपादेयाः । शिष्टेषूत्तमेषु पुस्तकेषु यदि सर्वाण्यपि सम्यगालोचयितुं न शक्येरन्, तथापि तेषां साराकर्षणं नातिदुष्करं भवति । दुर्भेद्यतर्काशानां परित्यागपूर्वकं सिद्धान्तावगमो नात्यायासकरो भवेदिति सम्भावयामः ।

कथं पठनीयमिति सांप्रतिकविज्ञानमूलप्रवर्तकेन पाश्चात्येन बेकनमनीषिणोक्तम्—

"Some books are to be tasted, others to be swallowed, and some few to be chewed and digested."—Bacon.

"कानिचित् पुस्तकानि आस्वाद्यानि, कानिचिद् गलाधःकरणीयानि, अन्यानि तु चर्वयितव्यानि जीर्णीकर्त्तव्यानि च; स्पष्टार्थस्तु कानिचित् पुस्तकानि भागतः पठनीयानि, अपराणि पठनीयानि परंतु न तथा कौतूहलेन, अन्यानि तु सामग्र्येण साभिनिवेशं सश्रमं च पठनीयानि"।

अनादृते चास्मिन् प्रकारे ग्रन्थबहुले वर्त्तमाने किमिवान्यद् गत्यन्तरमस्तीति न ज्ञायते । इदन्त्वत्र बोध्यम्-यदेकेन तावदेकतमं शास्त्रमवश्यं यथोचितमध्येयम्, तत्र च समीचीना व्युत्पत्तिः साधनीया, अपरापरं शास्त्रं तु यावच्छक्यमुपादेयमिति । परं पाठारम्भप्रभृत्येवेदमवश्यं सङ्कल्पनीयं यद् यथा न्यायाद्यैकशास्त्रचिन्तनं, तथैवापरशास्त्रालोचनमपि च अवश्यकर्त्तव्यमेवेति । इदं च लक्षणीयं यत् सर्वमायुरेकस्यैव शास्त्रस्यागमे नात्येतीति । निरर्थकशुष्कतर्कप्रपञ्चेषु परित्यक्तेषु साम्प्रतं दुर्विगाहत्वेन प्रसिद्धानामपि शास्त्राणामधिगमः कामं सुगमो भवेदित्युक्तमेव । तथाच तदर्थमपि नातिबहुकालस्यापेक्षा स्यात् ।

"दार्शनिका" इति प्रसिद्धैरप्यस्माभिर्यदि दर्शनान्तरवार्त्तायामुपस्थितायां तूष्णीमेव स्थीयेत न किं तर्हीदमस्माकम् अतितमां गौरवहानाय भवेत् । वस्तुतो दर्शनान्तरतत्त्वमजानद्भिरपि यद्यस्माभिः केवलं प्रौढिवादमाश्रित्य सभामण्डपेषु तद्दर्शनाधिकारिणो वादिनो विजयाय प्रगल्भ्यते, किं तन्नाम भवद्भिर्युक्ततमं विविच्येत ? संस्कृतविद्वांसो वयमिति सर्वेऽस्मान् यथोचितं मानयन्ति । परन्तु कीदृशी आर्याणां जीवविद्या आसीत्, कीदृशं तेषां रत्नतत्त्वम्, किंविधा शिल्पविद्या, का वस्तुविद्या, किं भाषाविज्ञानं, किम्प्रकारम् मनोविज्ञानमित्यादिकं पृष्टैरस्माभिर्यदि न किञ्चित् प्रत्युत्तरयितुं शक्यते तर्हि किमस्माकं यावज्जीवं संस्कृतपाठेन ? प्रागुक्ता अपरे च बहवो हृदयविन्यासोचिता विषया अस्मदीयैः प्राचीनैराचार्यैः सुपरिशीलिता उपनिबद्धाश्च तेषु तेषु ग्रन्थेषु । केवलमनन्वेषणदोषादेव न तान् वयं ज्ञातुं प्रभवामः । यथा वेदशाखासु विप्रकीर्णा धर्माः स्मृतिकारैः स्वस्वसंहितासु संगृहीताः, तद्वद् इदानीमपि यदि तत्र तत्र निगमागमेषु विप्रकीर्णास्ते ते विषया इतिवृत्तरूपेणैकत्र संगृह्येरन् यदि वा साहित्यदर्शनधर्मशास्त्राणां नातिबहुसमालोचनपूर्वम् इतिवृत्तरूपेण संग्रहो विधीयते, यदि वा वैदिकग्रन्थानां तेषां तेषामवश्यविज्ञेयानां विषयाणां सरलसन्दर्भेण इतिवृत्तविधयैव संक्षेपो विरच्येत, तर्हि संस्कृतशिक्षायाः कियानुपकारो भवतीति भवन्त एव विचारयन्तु । यावच्चेत्थं न क्रियते, तावद् वस्तुतः संस्कृतभाषाया अभ्युदयाशंसा न कर्तुं शक्यते ।

श्रीमन्तः, इतोऽपि नामान्यत् श्रोतव्यमस्ति ? परन्तु किं केवलं श्रवणेन । सकृदप्यनधीतसभाष्यऋग्वेदः कथं नाम कोपि भारतीयः शतशोऽभ्यस्तसमस्तवेदतन्त्रानालोचितानेकभाष्यनिरुक्तादीन्सर्वाङ्गीणवैदिककोशप्रणेतॄनेतान्पाश्चात्यविदुषः किमपि प्रतिवक्तुं प्रभवेत् ।

पाश्चात्या अस्माकं धर्मसमाजशास्त्रादिविषये यद् यद्वदन्ति प्रकाशयन्ति च वसुमत्येवेयं समग्रा तत्सर्वमाकर्णयति । तेन चास्माकं

साधुत्वमसाधुत्वं वा निर्णीयते जनैः । कः सन्देहः तेषामेव प्रभावेण प्राचीनभारतगौरवमद्य दिगन्तेष्वपि श्रूयते इति ।

दौर्भाग्यं चेदमतितमामस्माकं यद् वेदार्थग्रहणाभिलाषे उत्पन्नेऽपि कैश्चित्, वेदग्रन्थ एव नोपलभ्यते । 'मुम्बई' नगरादिषु द्वित्रेषु स्थानेषु ऋग्वेदो मुद्रितः, श्रीमता मोक्षमूलरेणापि स प्रकाशितः । परं न स सर्वसुलभः । ६० षष्टिरूप्यकव्ययं कर्त्तुं कियन्तो नामास्मासु ईशते । सामादिवेदविषयेऽपि इयमेव वार्त्ता । यावद् ग्रन्थसौलभ्यं न जायते, तावत् वेदानुशीलनाशा भारते पराहता । दृश्यते सर्वैः साम्प्रतं भगवद्गीतालोचनं भारते कथं प्रसृतमिति । दशवत्सरपूर्वं नेत्थमासीत् । विविधप्रकारेण गीताग्रन्थस्य मुद्रणं, तस्य सौलभ्यसम्पादनम्, प्रथमं किञ्चित्प्रयासेन लोकेषु तस्या उपादेयत्वबोधनञ्चेति त्रिभिः कारणैरेव गीताध्ययनमित्थं समृद्धप्रचारमिति सम्भावयामः । वेदविषयेऽपीयं पद्धतिरनुसरणीया । तथास्य सौलभ्यं विधातव्यं येन नितान्तं दरिद्राणामपि गृहं तेन खलु रत्नेनालङ्कृतं भवेत् ।

विधुशेखरशर्म्मा ।

---

# पाश्चात्यदर्शनम् ।

समवासनगरे एव परमानन्दस्य शिष्यो मालीशनामा (Melissus) बभूव । प्रकृतिवादिनां प्रत्याख्यानपरोऽस्य यत्नः । एकमखण्डममूर्त्तमचलं सदैव तत्त्वम् । अनेकप्रतीतिरिन्द्रियजन्योभ्रम इतिचास्य मतम् । एलेय (Elea) वासी जिनाख्यः (Zeno) कश्चिद्धीरोनीतिज्ञ आसीत् । अयं वादवित्सु प्रथमः । प्रतिवादिनां मते विरोधं प्रदर्श्य स्वमतं व्यवस्थापितवान् । बहुत्वस्य, भूतानां, गतेश्च स्वीकारे व्याहतत्वं तेन दर्शितम् । बहुत्वस्य वास्तवत्वस्वीकारे एकमेव वस्तु परिच्छिन्नमपरिच्छिन्नं च स्यादिति विरोधः संख्ययाहि तदन्येभ्यः परिच्छिन्नं स्यात् असंख्यभागसमवेतत्वाच्चापरिच्छिन्नम् । भूतानां भावस्य वास्तवत्वेऽपि स भावः सदृशात्सदृशो-

त्पत्ति रूपोवा विसदृशाद्विसदृशोत्पत्तिरूपोवा। प्रथमपक्षे कार्योद्भवो-भ्रममात्रं सर्वथा सादृश्ये कार्यकारणयोर्भेदाभावात्। वैसादृश्ये त्वसंभा-व्यस्यासत्कार्यवादस्य प्रसङ्गादभावाद्भावोत्पत्तिस्वीकारः* । एवं गते-ऽपि वास्तवत्वासंभवः गच्छन्नपि हि बाणोवस्तुतः प्रतिविन्दु वियति स्थिर एव। किंचाकाशस्यैव गमनाधिकरणत्वं स्वीकार्यम् विनाह्याकाशं गतेरसंभवः तच्चाकाशमसिद्धं, किमधिकरणकं हि तदाकाशं स्यात्। आकाशान्तराधिकरणकं चेदनवस्थाप्रसङ्गः। अनाधारं च न संभवति तादृशस्य वस्तुन उत्प्रेक्षाया अप्यसंभवात्। एवं विभागस्य निरोधहेतूनामभावात्परमाणवन्तो विभाग इत्यपि भ्रममात्रम्। परमाणूना-मपि परतोविभागस्यावश्यंभावित्वात् विभागस्य चापरिच्छिन्नत्वात्।

इत्थं द्रव्याद्रव्यविभागः पृथुगौरीयैरेकानेकविभागरूपेण ऐलेयैश्च भावाभावरूपेण स्वीकृतोऽभूदिति स्फुटम्।

अयमत्र संग्रहश्लोकः—

संख्यां पृथुगौरीया जनफणिपरमानदौ सत्ताम्।
प्रतिपेदाते तत्त्वं मालीशजिनौ सदैवैकम्॥

इत्थं केपि यवनदार्शनिकाः प्रकृतिवादिनः परेचात्मवादिनइति व्याख्यातम्। ततोऽप्यन्ये यवनदार्शनिका बभूवुर्ये उभयवादित्वेन द्वैतवादित्वेन वा प्रसिद्धाः। एषां प्रथमोहरकलिताख्यः( Heraclitus )सम-भूत्। कूटस्थसत्तावादिनामैलेयानां प्रतिपक्षीभूय परिवर्तनशीलं भावाभावस्वरूपं सकलं जगदिति प्रथयाम्बभूव प्रथमोऽयं द्वैतवादिना-म्। परस्परविरोधरूपं सर्वं जगत्। शान्तिः केवलं मृतौ संभाव्या। सूक्ष्माणां भेदानां विरोधानां चाप्रमेयत्वात् इन्द्रियजन्यं ज्ञानं हरकलित-स्य मते सर्वदाऽनिश्चितं प्रायश्चाश्रद्धेयम्। काले सर्वं जगत्प्रतिष्ठितं दाहशक्तिरेव च मुख्या जगति तस्यैव सकलपरिवर्त्तसंभवात्। अन्यश्च वैज्ञानिकः संपदाकराभिधानः ( Enpedocles ) सुशैलप्रदेशेषु

* सांख्यानां वेदान्तिनां च सत्कार्यवादप्रपञ्चोत्रानुसंधेयः।

( Sicily) जातः। पेलेयैः सममसौ कूटस्थां सत्तां स्वीकरोति। किं तु बहुत्वं द्रव्यस्य, भावरूपत्वं च सत्तायाः प्रथयन्नयं कूटस्थानि चत्वारि तत्त्वान्यङ्गीचकारेति भेदः। मैत्रीविरोधाख्यशक्तिद्वयेन सर्वं जगदेभिरेव चतुर्भिस्तत्त्वैर्निर्मितम्। नियत्या दैवेन वा तच्छक्तिद्वयमितरेतरेण नियतसम्बद्धम्। प्रथममिदं सर्वं जगच्चक्रमेकं सद्रूपमासीत्, अनेनैव चोपरिवर्णितेन शक्तिद्वयेनेदं वर्तमानं रूपं प्रापितम्। सर्वथा द्रव्याभावश्चास्य मतेऽसंभाव्यः। सर्वं जगन्नित्यं द्रव्यमयं च।

ततः परं केचित्परमाणुवादिनो दार्शनिकाबभूवुः। एषां प्रथमो-लवकृपाभिधानः ( Leucippus ) अभूत् किं तु तस्य लेखादि नोपलभ्यतइति द्यामक्रीताभिधस्य ( Democritus ) तच्छिष्यस्यैव मतं प्रथममुपन्यस्यते। अयं महता व्ययेन सर्वेषु ज्ञातप्रदेशेषु गत्वा तत्रत्यं विज्ञानमादाय स्वदेशमेत्य महतीं प्रतिष्ठामासादितवान्। परमाणुवादिनां द्रव्यमविभाज्यैरखण्डैः सूक्ष्मपरिमाणैः परमाणुभिर्निर्मितम्। अनन्तमाकाशं सर्वं जगद्व्याप्य तिष्ठति। अस्मिन्नाकाशे शून्यरूपे असंख्यानां जगतां स्थितिः। इमानि च जगन्ति वर्णैः पुस्तकानीव परमाणुभिर्ग्रथितानि सन्ति। एषामणूनां मध्ये न गुणकृतः कोपि परस्परंभेदः। केवलं परिमाणकृतआकृतिकृतश्च भेदोस्ति। शून्यं विना परिवर्तस्यासंभवात् जगतो नित्यत्वापत्तेरेभिःपरमाणुवादिभिः शून्यरूपमाकाशं स्वीक्रियते। परिवर्ते हि संयोगविभागाभ्यामेव सर्वं जगत्परमाणुभ्यः समुद्भवति। एतौ च संयोगविभागौ नियत्या नियमितौ।

क्रमशः

पाण्डेयः श्रीरामावतारशर्म्मा।



# साहित्यरत्नावली ।

## माधवः ।

चतुर्दशशतके विजयनगरेश्वरस्य वीरबुक्कनृपतेस्तदनन्तरं हरिहरस्य च सभायां समस्तवेदवेदाङ्गपारगोमाधवाचार्यआसीत् । तस्य भ्राता सायनाचार्यइति प्रसिद्धः। उभयोर्बहवो ग्रन्था उपलभ्यन्ते । अयं सर्वज्ञविष्णोः शिष्यआसीदिति सर्वदर्शनसंग्रहे दृश्यते । माधवस्य चतुर्थाश्रमे विद्यारण्यनाम्ना प्रसिद्धिः संजाता । अनेनैव माधवेन वेदान्तगुरोर्भगवतः शंकरस्य * चरितं शंकरविजयाभिधं प्राणायि । ग्रन्थशैलीसमालोचनेन शंकरविजयस्य प्रणेतामाधवः कोऽप्यन्य एवेति केचित् । अस्य ग्रन्थस्य प्रणयने माधवेन 'अभिनवकालिदास' नाम्ना स्वस्य व्यपदेशः कृतः । प्राधान्येन दार्शनिकत्वादस्य कवितायां बहवो दोषाद्दृश्यन्ते तथापि विषयस्यापूर्वत्वाद्बहूनां गुणानां च सद्भावादस्य काव्यं प्रायोतीव मनोरमम् । अस्य ग्रन्थशैली च प्रायोनवीना । न कस्याप्यनुकरणमस्य बहुमतम् । एकाक्षराणां खादिशब्दानां प्रयोगैः शंकरमण्डनयोः शास्त्रार्थेऽश्लीलादिदोषेण ईदृशैरन्यैश्च दोषैः क्वचित्क्वचिन्नातिरम्येऽपि शंकरविजये प्रसादादिगुणैः प्रायोहृदयमाकृष्यते बलात्पठितुं प्रवृत्तिर्भवति । आनन्दज्ञानेन ( आनन्दगिरिणा ) अन्यः शङ्करविजयाख्यःप्रबन्धःप्राणीयत । गद्यपद्योभयात्मकस्य तस्यैव प्रबन्धस्य विषयः केवलपद्यैर्माधवेन ग्रथितः । प्रायश्चानन्दगिरीयप्रबन्धानुसार्येव सकलं माधवीयं काव्यम् । अत्र च शंकरमण्डनयोर्वादः परमरमणीयइति सएवात्र विनोदाय सहृदयानां विन्यस्यते ।

शङ्करविजये—

अथप्रतस्थे भगवान्प्रयागात्तं मण्डनं पण्डितमाशु जेतुम् ।
गच्छन्खसृत्या पुरमालुलोके माहिष्मतीं मण्डनमण्डितां सः ॥
अवातरद्रत्नविचित्रवप्रां विलोक्य तां विस्मितमानसोसौ ।

---

* श्रीशंकराचार्यः केरलेषु ष्टमशतके संजातः ॥

पुराणवत् पुष्करवर्तनीतः पुरोपकण्ठस्थवने मनोज्ञे ॥
प्रफुल्लराजीववने विहारी तरङ्गरिङ्गत्कणशीकरार्द्रः ।
रेवामरुत् कम्पितशालमालः श्रमापहृद्व्याध्यकृतं सिषेवे ॥
तस्मिन्सविश्रम्य कृताह्निकः सन् सस्वस्तिकारोहणशालिनीने ।
गच्छन्नसौ मण्डनपण्डितौको दासीस्तदीयाः सददर्श मार्गे ॥
कुत्रालयो मण्डनपण्डितस्येत्येताः सपप्रच्छ जलाय गन्त्रीः ।
ताश्चापि हृष्टाद्भुतशंकरं तं सन्तोषवत्यो ददुरुत्तरं स्वम् ॥
स्वतःप्रमाणं परतःप्रमाणं कीराङ्गनायत्र गिरः किरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा अवेहि तन्मण्डनपण्डितौकः ॥
फलप्रदं कर्म फलप्रदोऽजः कीराङ्गनायत्र गिरः किरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा अवेहि तन्मण्डनपण्डितौकः ॥
जगद्ध्रुवं स्याज्जगदध्रुवंस्यात् कीराङ्गनायत्र गिरः किरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा अवेहि तन्मण्डनपण्डितौकः ॥
पीत्वातदुक्तीरथतस्य गेहाद्गत्वा बहिः सन्नकपाटगुप्तम् ।
दुर्वेशमालोक्य सयोगशक्त्या व्योमाध्वनावातरदङ्गणान्तः ॥
तदा सलेखेन्द्रनिकेतनाभं स्फुरन्महध्वजलकेतनाभम् ।
समग्रमालोकत मण्डनस्य निवेशनं भूतलमण्डनस्य ॥
सौधाग्रसंछन्ननभोवकाशं प्रविश्य तत्प्राप्य कवेः सकाशम् ।
विद्याविशेषात्तयशःप्रकाशं ददर्श तं पद्मजसंनिकाशम् ॥
तपोमहिम्नैव तपोनिधानं सजैमिनिं सत्यवतीतनूजम् ।
यथाविधि श्राद्धविधौ निमन्त्र्य तत्पादपद्मान्यवनेजयन्तम् ॥
अथोपसंस्पृश्य जलं सशान्तः स संभ्रमं मण्डनपण्डितोपि ।
व्यासाज्ञया शास्त्रविदर्चयित्वा न्यमन्त्र्ययद्भैक्षकृते महर्षिम् ॥
सचाब्रवीत्सौम्य विवादभिक्षामिच्छन्भवत्संनिधिमागतोस्मि ।
सान्योन्यशिष्यत्वपणा प्रदेया नास्त्यादरः प्राकृतभक्तभैक्षे ॥
मम न किंचिदपि ध्रुवमीप्सितं श्रुतिशिरःपथविस्तृतिमन्तरा ।
भवहितेन मखेष्ववधीरितः सभवता भवतापहिन्दुगतिः ॥

जगति संप्रति तं प्रथयाम्यहं समभिभूय समस्तविवादिनः।
त्वमपि संश्रय मे मतमुत्तमं विवद वा वद वास्मि जितस्त्वति
इति यतिप्रवरस्य निशम्य तद्वचनमर्थवदागतविस्मयः।
परिभवेन नवेन महायशाः स निजगौ निजगौरवमास्थितः॥
अपि कदाचिदुदेष्यति कोविदः सरसवादकथापि भविष्यति
इति कुतूहलिनोमम सर्वदा जयमहोयमहो स्वयमागतः॥
ततः समादिश्य सदस्यतायां सधर्मिणीं मण्डनपण्डितोपि।
सशारदां नाम समस्तविद्याविशारदां वादसमुत्सुकोभूत्॥

श्रीरामावतारशर्मा।

---

## उदानवर्गः।

उदानवर्गोहि भगवता बुद्धेन कथितानां नीतिमालानां संग्रहरूपोबौद्धोग्रन्थः। एषखलु भागचतुष्टयेन विभक्तः ऊननवत्यधिकनवशतश्लोकमयश्च (९८१)- तद्यथा प्रथमभागे द्वादशाध्यायाः षष्ट्यधिकद्विशतश्लोकाः (२६०)। द्वितीयभागे द्वादशाध्याया ऊनपञ्चाशदधिकद्विशतश्लोकाः (२४१) तृतीयभागे षडध्यायाअष्टचत्वारिंशदधिकद्विशतश्लोकाः (२४८) चतुर्थभागे च द्वात्रिंशदधिकद्विशतश्लोकाः (२३२) वर्त्तन्ते। श्लोकोगाथावेति "उदान" इत्यस्य अभिधेयम् क्वचित्तु स्तोत्र मित्यस्मिन्नर्थेऽपि पदमिदं व्यवहृियते। ग्रन्थेऽस्मिन् यादृशाः श्लोका दृश्यन्ते, भगवता गौतमेन कथितानामुपदेशमालानां शेषभागे तादृशा एवावलोक्यन्ते, अनुमीयते चैतेन यद्धर्मश्रोतॄन् प्रति कथितोपदेशानां स्थिरांशं बोधयितुं लीलयैव स्मरणार्हैः कतिपयैः श्लोकैरुपदेशानां सारनीतीर्भगवान् बुद्धः संग्रथितवानिति बौद्धधर्मप्रतिष्ठापयित्रा श्लोकानामेतेषामतीव प्रयोजनीयता शिष्येभ्योदर्शिता समर्थितश्च सविशेषं लौकिकेषु कर्मसु तेषां प्रयोगः। तेनैतदनुमीयते यद् बौद्धमनीषिणोबोधप्रकर्षोत्पादकान् बौद्धसम्प्रदायस्याभिमततमांश्च बुद्धकथितानुपदेशान् संकलयितुं सोद्यमा आसन्, इत्थमेव कालेन उत्तरमहायानदक्षिणमहायान (Northrn and Southern

mons ) नामकानि बहूनि पुस्तकानि समपद्यन्त । उत्तरमहायान-
ङ्कलितेषु ग्रन्थेषु द्विचत्वारिंशदध्यायात्मकं सूत्रम्, उदानवर्गः, कति-
ान्यन्यानिच पुस्तकानि प्रसिद्धानि, दक्षिणमहायानसंग्रथितानां
थानां च धर्मपदं (धम्मपद), सूत्रनिपातश्चेतिग्रन्थद्वयं प्रख्यातम् ।
धर्मपदस्थैः श्लोकैरुदानवर्गस्य त्रिशतमितानां(३००)श्लोकानां प्रायै-
करूपता, सार्धशतस्यच समधिकं सादृश्यं लक्ष्यते । पुनरुदानवर्गस्य
शतिःश्लोकाः सूत्रनिपाते दृश्यन्ते । अपिच प्रायस्तत्संख्यकानामे-
श्लोकानां सूत्रनिपातस्थेन श्लोकनिवहेन सह भागतो ऽभेदः सम-
ाम्यते । तेनहि उदानवर्गस्य प्रायेणार्द्धसंख्यकाः श्लोकादक्षिणमहा-
नान्तर्भूते धर्मपदे सूत्रनिपाते च प्राप्तव्याइति सिद्धान्तितम् ।
तेन पुनरेतदनुमीयते यत्स्थाविरगाथा-स्थाविरोदानप्रभृति-
पुस्तकेषु परीक्षितेषु तिब्बतीयपुस्तकस्य (Tehd-du-brjod-pai tro-
es नामकस्य ) बहवः श्लोकास्तेष्वेव प्राप्तव्या इति ।

अनूदिते तिब्बतीयग्रन्थे पालिपुस्तकेन तुलिते प्रथमपुस्तकस्य
सर्वतएव पालिग्रन्थादीषत् प्रभेदोलक्ष्यते । अनुवादकस्य पालि-
भाषायां सम्यग् व्युत्पत्तेरभावप्रयासस्य मूलमित्युपपन्नम् चीनदेशीय-
पुस्तकेऽपि उदानवर्गस्य श्लोकादृश्यन्ते ।

उदानवर्गस्य संकलयिता धर्मत्रातोनामेति चीनग्रन्थस्य मतम् ।
अपि च धर्मत्रातोवसुमित्रस्य पितृव्यइति सएवग्रन्थो वर्णयति ।

कनिष्कस्य शासनसमये या बौद्धपरिषत् समाहूता, अयमेव वसु
मित्रः परिषदस्तस्याः सभापतिश्चेद् भवेत् तदासौ खृष्टजन्मनः
प्राक् प्रथमशताब्द्यामेव ( First Century B. C. ) वर्त्तमान आसीदि-
त्यनायासेन स्थिरीक्रियते । तारानाथेन तु"वैभाषिकनायकानां कश्चित्
स्थविरधर्मत्रातोनामाग्रणीरासीद्, अयं स्थविरधर्मत्रात उदानवर्गस्य
संकलयिता धर्मत्रातश्च द्वावेतौनाभिन्नपुरुषाविति" मतमुपन्यस्य सरलं
तत् समाधानं कुटिलीकृतम् । चन्द्रकीर्तिनापि "स्थविर" "भदन्त"
ति विशेषणद्वयेनान्वितौ द्वावेव धर्मत्रातौ निर्णीतौ । सम्भाव्यं यद्-

द्वावेतौ पुस्तकानि रचितवन्ताविति । यथावा भवतु परमेत अस्मन्मतं खृी० पू० ७५ तमाब्दे उदानवर्गोविरचित इति ।

इंलण्डदेशवासिना उलियम् रक्हिल नाम्ना केनचिद् बौद्धधा तत्त्वानुसन्धायिना स्वभाषाया मनूदितस्योदानवर्गस्य भूमिकायाः स क्षिप्तोनिष्कर्षोयम् ।

अतः पर मस्माभिः पाठकानां चित्तविनोदनाय आंगलभाषाय मनूदितेषु उदानवर्गश्लोकेषु केषांचित् संस्कृतानुवादा इह लिख्यन्ते-

(१) फलानां परिपक्कानां यथा पातभयं सदा ।
जातानां खलु जीवानां भयं मरणतस्तथा ॥ उ०व० ३ पृ ११ श्लो

(२) कामादुत्पद्यते दुःखं कामादुत्पद्यते भयम् ।
न जानाति भयं दुःखं, काममुक्तस्तु यो नरः ॥ १ पृ० २ श्लो०

(३) अप्रियैः सह संयोगाद् वियोगाच्च प्रियैः समम् ।
यावज्जीवं जनो दुःखं जनयत्यात्मनो महत् ॥ २५ पृ० ६ श्लो०

(४) कायेन मनसा वाचा धर्ममाचरतीह यः ।
स जनः सुखमाप्नोति परत्रेह च जन्मनि ॥ ३४ पृ० ६ श्लो०

(५) भूतले गगने वापि सिन्धौ वा गिरिगह्वरे ।
न स्थानं, यत्र कर्त्तारं नागच्छेत् कर्मजं फलम् ॥ ४ पृ० ५ श्लो०

(६) पुण्यं कर्माथवा पापं, यत् किञ्चित् कुरुते नरः ।
नैकमप्यनयोर्वन्ध्यं शुभाशुभकरं हि तत् ॥ ४० पृ० ८ श्लो०

(७) धर्मे प्रवृत्तिः परमा च निष्ठा, वदान्यता लोभ-विहीनता च
अमी गुणा यस्य जनस्य सन्ति, सर्वत्र सर्वैः खलु पूज्यते सः ॥
४४ पृ० ८ श्लो०

(८) जयेत् कोपमकोपेन, शुभेन चाशुभं जयेत् ।
औदार्येण जयेल्लोभं सत्येन चानृतं जयेत् ॥ ८१ पृ० १८ श्लो०

(९) वार्य्यते मरणं येन मरणं च निषिध्यते ।
संसारान्मुच्यते येन तज्ज्ञानं ज्ञानमुच्यते ॥ ४१ पृ० ३ श्लो०

श्रीहरिचरणविद्याभूषणः,

संस्कृताध्यापकः ब्रह्मचर्याश्रमः, ( बोलपुर )

# मित्रगोष्ठी-पत्रिका ।

( मासिकं संस्कृतपत्रम् । )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् " ।

ऋग्वेदः ।

द्वितीये वर्षे } १८२७ शकाब्दाः, आषाढः । { तृतीयसंख्या

## काव्यपरिमलः ।

मानस्थापनयाय नम्रशिरसः शम्भोर्जटाप्रस्खलत्-
सर्पाधीशशिरोमणिद्युतिशिखानीराजनाराजितम् ।
देव्याः श्रीचरणारविन्दयुगलं त्वां पातु साधो चिरम्,
प्रातस्त्यारुणरागरञ्जित मिव प्रह्वानुराग प्रदम् ॥ १ ॥

महतां विरहे क्षुद्रोऽप्युपास्यः कार्यसिद्धये ।
निशायां नष्टसूर्य्येन्दौ प्रदीपोऽपि तमोपहः ॥ २ ॥

कृष्णः पक्षो निशेयं घनतिमिरमुखो क्वापिलीनः शशाङ्कः
शङ्के ध्वान्तात् सशङ्कः शरणमुपगतः सूर्यदेवस्य पादान् ।
तारा निद्रालसा चोर्नयनदशशतीचावृतामेघपत्रै-
राराध्यो योऽयदीपश्चलति यदि मरुत् सोऽपि लोपेत तर्हि ॥३॥

उदये कृशतां याति पुष्टिं गच्छति च क्षये ।
छायेव सवितुः पत्युर्गृहिणी व्यभिचारिणी ॥ ४ ॥

जलाशयोऽप्येष तवानुवत्सरं,
प्रवर्त्तितोऽद्भिः परिरक्षति प्रजाः ।
पयोद तस्मिन् विमुखस्त्वमद्य चेत्,
निरागसस्तर्हि हताः शरीरिणः ॥ ५ ॥

मण्डूक मूकीभव लम्फझम्पम
विमुञ्च, किञ्च व्यपयाहि तूर्णम्।
सृक्कद्वयं लेलिहदुज्ज्वलाक्षः
सर्पोऽयमेति त्वयि बद्धलक्ष्यः॥ ६॥

श्रीमहेशचन्द्र तर्कचूडामणिः।

दिनाजपुरम्

---

## इत्-सिं।

साम्प्रतं मि० ताकाकासुर्नाम "इत्-सिं"-नामकस्य कस्यचिच्चीनदेशीयस्य पर्यटकस्य भ्रमणवृत्तान्तं प्रकाशितवान्। "फाहियान्"—"हुयेन्-सां"-प्रभृतीनामिवास्य नाम नास्माभिः परिचितमासीत्। परन्त्वनेन भारतवर्षस्य तस्मिन् समये प्रचलितानां रीतिनीतिव्यवहारानुष्ठानादीनां यादृशमविकृतं चित्रमङ्कितं तेन तद् बौद्धकालस्येतिवृत्तसंग्रहार्थं महामूल्यम्। सुप्रथितस्य परिव्राजकस्य "हुयेन सां" इत्यस्य मरणानन्तरं खी० ६७३ तमेऽब्दे 'इत्-सिं'-महाशयो भारतमाजगाम। तदानीं सुप्रसिद्धायां भागीरथीतटवर्त्तिन्यां 'ताम्रलिप्ति'-नगर्यां पोतादवतीर्य्यायं बहुना क्लेशेन "नालन्द"-नाम्ना प्रख्यातं बौद्धविहारमुपागच्छत्। तदा भारते नालन्दविद्यालय एवैकः सर्वोत्कृष्ट आसीत्। प्रायो दश सहस्राणि विद्यार्थिनोऽत्र बौद्धशास्त्रग्रहणार्थमतिष्ठन्। न केवलं भारतस्य निखिलप्रदेशेभ्यः, अपितु चीनेभ्यो यवसुमात्रादिभ्यो द्वीपेभ्यश्च बौद्धशास्त्राध्ययनार्थिनोऽत्रागच्छन्। 'इत्-सिं'-महाशयोऽस्मिन् षोडश वत्सरान् संस्कृतं पालिं च भाषामधीत्य 'विनयपिटक'-प्रभृतीनां बौद्धधर्मग्रन्थानां प्रायः ५०,००० पञ्चाशत् सहस्राणि श्लोकान् संगृह्य स्वदेशमनयत् चीनभाषया च तेषामनुवादमकरोत्। अस्मिन् सन्दर्भे तेन स्वयं लिखिताद् भ्रमणवृत्तान्तात् तत्कालप्रचलितं श्रमणानामतिथिसत्कारप्रकारमुद्धृत्य पाठकेभ्य उप-

हूयते । इत्-सिं महाशयः समाजव्यवहारादौ भारतमेव आदर्शीकृत्य प्रचलितव्यमिति स्वदेशीयान् शिक्षयितुं भारतीयानामाचारादिप्रकारं सविशेषमवर्णयत् । अस्मिन् ग्रन्थे सर्वत्रैव भारतं प्रत्येतस्य महाननुरागो दृश्यते । सोऽयमस्माभिरुपजिहीर्षितस्तल्लिखितः अतिथिसत्कारप्रकारो भारतस्य "परिचितो वा अपरिचितो वा, शिष्यो वा विद्यार्थी वा, वयसा ज्येष्ठो वा, कनिष्ठो वा, यः कोऽप्यस्तु, आगन्तुं दृष्ट्वा भिक्षुरभ्युद्गम्य स्वागतं पृच्छेत् । समायाते अतिथौ भिक्षुः तत्करात् भिक्षापात्रं, जलपात्रं च गृहीत्वा नवदीक्षितं तं क्वापि निर्जने स्थाने, वृद्धन्तु वहिःस्थिते गेहे उपवेशयेत् । अभिवादनार्हस्यातिथेः पादग्रहणं, देहे करतलपरामर्शनं च, अतादृशस्य कनीयसः पथक्लमापनोदनार्थं पृष्ठे मन्दं मन्दं पाणितलेनाघातं च भिक्षुः कुर्य्यात् । सवयसा सह व्यवहारे तु न कश्चिन्नियमः ।

शिक्षार्थी आगन्तुको दूरीकृते पथश्रमे, पाणिपादं प्रक्षाल्य पूजनीयस्य जनस्य पादग्रहणं कुर्यात् । सोऽपि विद्यार्थिनः पृष्ठे स्कन्धे च करं स्थापयित्वा कुशलं पृच्छेत् । विद्यार्थी तं प्रश्नमुत्तरयित्वा सविनयं तदेकपार्श्वं उपविशेत् । * * * * घृतेन, मधुना अपरैश्चाहार्य्यैः पानीयैश्चातिथेः सत्कारः करणीयः । * * * पथि जनसंघे वा साक्षात्कारे मस्तकं मनागवनम्य "वन्दे" इत्युच्चार्य्यमिति"।

'इत्-सिं'-वर्णिता भारतस्यापरेऽपि वृत्तान्ता यथाकालं प्रकाशयिष्यन्ते ।

कश्चिद् अध्यापकः,
ब्रह्मचर्याश्रमः, ( बोलपुर )

———o———

## शुक्तिरजतम् ।

( पूर्वानुवृत्तम् )

किं नाम व्यावहारिकं वस्तु किं वा प्रातिभासिकमिति पूर्वमुक्तम् । व्यावहारिकस्य पदार्थस्य यादृशमुपादानं प्रातिभासिकस्य न तादृशं

भवति। समाने हि उपादाने, व्यावहारिकत्वेन प्रातिभासिकत्वेन च न्योन्यं भेद एव न स्यात्, यदि घटस्येव पटस्यापि मृदेवोपादानं भवेत न तर्हि तौ अन्योन्यं भिद्येयाताम्। अतो व्यावहारिकात् प्रातिभासि कस्य भिन्नमेवोपादानं वक्तव्यम्।

उक्तमधस्तात्—शुक्तिरजतस्थले चाकचिक्यादिसन्दर्शनसमुद्बोधित-पूर्वदृष्टरजतसंस्कारसहित शुक्तित्वरूपविशेषांशस्य अज्ञानमेव रजतरूपेण परिणमत इति। अतः अज्ञान मेव प्रातिभासिकस्य तस्य रजतस्योपादानम्। यद्धि येनात्मना परिणमते तदेव तस्योपादानम् यथा घटरूपेण परिणममाना मृत् घटस्योपादानम्; यथा वा दधिरूपेण परिणममानं दुग्धं दध्न उपादानम्। अज्ञानम्, अविद्येति नार्थान्तरम् अविद्या हि विचित्रशक्तिः—अघटनघटनपटीयसी। न किञ्चित् तस्य दुष्करं नाम। तस्मात् प्रातिभासिकपदार्थोत्पत्तौ सर्वत्रैव अज्ञानम्—अविद्यैवोपादानम्।

अथ द्रष्टव्यं शुक्तिरजतस्य कतमस्मिन् पदार्थेऽन्तर्भाव इति। यद्वस्तु न जातु केनापि ज्ञानेन बाध्यते (विनाश्यते), तत् सत्, यथा—संसारदशायां घटपटादिकम्; न हि संसारदशायामस्ति किञ्चित् तादृशं ज्ञानम्, येन घटपटादिकं बाध्येत। * न तावत् शुक्तिरजतं सद्वस्तु, 'इदं रजतम्' इति ज्ञानोत्तरं भाविना 'नेदं रजतम्' इति ज्ञानेन तस्य बाध्यमानत्वात्। नहि "नेदं रजतम्" इति ज्ञानोत्पत्तौ रजतस्य तत्र सत्त्वोपलभ्यते।

यस्य खलु अतीतानागतवर्त्तमानरूपेषु कालत्रितयेषु न क्वापि सत्त्वम्, तद् वस्तु असत्; यथा—गगनकमल-वन्ध्यापुत्र-शशशृङ्गादयः; नहि कदाचिद् गगनकमलादय आसन्, सन्ति, भविष्यन्ति वा। न

* यद्यपि एतन्मते ब्रह्मभिन्नं नापरं किञ्चित् सद्वस्तु, तथापि संसारावस्थायां घटपटादीनामपि ज्ञानान्तरेण बाध्यत्वादर्शनात्। तेऽपि सद्वस्तुत्वेन प्रथमत एव व्यपदेष्टुम् अतएव अध्यासव्याख्यानावसरे वाचस्पतिमिश्राः—"परत,—शुक्तिकादौ परमार्थवती" त्याहुः।

वास्माकं शुक्तिरजतं तथा, कियन्तं कालं तस्योपलम्भात्। अतो न तदसत्।

नापि सदसत् तेजस्तिमिरयोरिव सत्त्वासत्त्वयोर्युगपद् एकत्र विरोधात्।

ये किल वदन्ति—'इदं रजतम्' इत्यादौ रजतत्वांशे देशान्तरीय-रजतस्य स्मृतिः; इदन्त्वांशे तु इन्द्रियादिदोषेण पुरोवर्त्तिपदार्थस्य सामान्यांशग्रहो भवतीति।

तन्मतेऽपि शुक्तौ परिदृश्यमानं रजतं, शुक्तिर्वा भवेत्, देशान्तर-स्थं रजतं वा भवेत्, नैतयोर्द्वयोरन्यत्। यदि तावत् शुक्तिरेव स्यात्, तदा 'शुक्तिकेयम्' इत्येव ज्ञानं स्यात्, न तु 'इदं रजतम्' इति। अथ देशान्तरस्थं रजतम्; तर्हि 'देशान्तरे रजतम्' इति ज्ञानं स्यात्, न तु 'अस्मिन् रजतम्' इति। अथ कथयसि देशान्तरस्थितत्वेऽपि रजतस्य तद्देशान्तरं न स्मर्यत इति। तथापि न युज्यते, तथा सति 'रजतम्' इत्येव ज्ञानं स्यात्, न तु 'अस्मिन् रजतमिति'।

अतः शुक्तिरजतं न सद्वस्तुत्वेन, न असद्वस्तुत्वेन नापि सदसद्वस्तुत्वेन निर्वक्तुं शक्यत इति तद् "अनिर्वचनीयम्" एव किमपि पदार्थान्तरमिति ज्ञेयम्। *

सम्भवतीह केषाञ्चित् संशयावकाशो यद् यदि नामैतन्मते ब्रह्मैव सत्, तद्भिन्नं तु निखिलमेव असत् स्यात् कथं तर्हि जगद् 'अनिर्वचनीय' सम्भवतु इति। अत्र पञ्चपादिकायां श्रीपद्मपादाचार्यैरेव प्रयुक्तम्—"ननु सर्वमेवेदम् असदिति भवतो मतम्? (उत्तरयति)

---

* एतन्मते शुक्तिरजतमिव निखिलोऽपि जगत्प्रपञ्चः 'अनिर्वचनीय' एव। यदि नाम जगत् सत् स्यात्, न तदा तस्य बाधा भवेत्; "तत्त्वमसी"त्यादि वाक्योत्पन्न-निर्विचिकित्सज्ञानोदये तु तदपि बाध्यत एव। नापि जगद् असद् भवितुमर्हति, गगनकमलादिवद् अत्यन्ताप्रतीत्यापत्तेः। न च वा सदसत् तयोर्विरोधात्। तस्माद् अनिर्वचनीयम् एवेति युक्तम्। अतएवेदं मतम् "अनिर्वचनीयवाद" इत्युच्यते। अयमेव वेदान्तिनां सिद्धान्तः।

क एवमाह अनिर्वचनीयादन्यविद्यात्मकम् इत्युद्घोषितमस्माभिः। अ
पुनर्विद्योदये अविद्याया निरुपाख्यतामङ्गीकृत्य असत्त्वमुच्यते, काम
मभिधीयताम् इति"।

कथितम्— इन्द्रियेण पुरोवर्त्तिपदार्थस्य सन्निकर्षे सति इन्द्रियदोष हेतुना अधिष्ठानस्य सामान्यांशमात्रं गृह्यतइति। अत्र बहवो बहुध विप्रतिपद्यन्ते। केचिद् अध्यासं प्रति अधिष्ठानज्ञानस्य कारणत स्वीकुर्वन्ति, अन्ये न। केचिद् अधिष्ठानारोप्ययोः सादृश्यमपेक्षणीय मेवेति वदन्ति; अपरे न। इत्येवमन्येऽपि केचन किञ्चित् विभिन्नमे स्वस्वाभिमतं पुरस्कुर्वन्ति। एतदपि समासतो दर्शयिष्यते।

उक्तपूर्वं— शुक्तिरजतस्य अज्ञानमेव उपादानमिति। शुक्तेः इद न्त्व-शुक्तित्वांशयोर्मध्ये इदन्त्वांशस्य ज्ञानात्, तदंशस्यैवाज्ञानं विनिव र्त्तते, न तु शुक्तित्वांशस्यापि। यद्विषयकं ज्ञानं, तद्विषयकमेवाज्ञान नश्यति; न तु अन्यविषयकाद् ज्ञानादन्यविषयकमज्ञानम् इति नियमः ततश्च शुक्तित्वांशस्य अज्ञानमेव रजतस्योपादानकारणम्। अनुभव एवात्र प्रमाणम्, दृश्यते हि शुक्तिज्ञाने न रजतमध्यस्यते, तदभावे तु अध्यस्यत एवेति। अतः शुक्तित्वांशाज्ञानमेव रजतोपादानम् इति युक्तम्।

अतएवामी वदन्ति— रजतस्य शुक्तित्वांशोऽधिष्ठानम् इदन्त्वांश आधारः रजतादिसम्पादकस्य अज्ञानस्य विषयः अधिष्ठानम्। यत पुनः रजतादिभिन्नमपि तदभेदरूपेण प्रतीयते, स आधारः। प्रकृते च तादृशस्य अज्ञानस्य विषयः शुक्तित्वांश एवेति सोऽधिष्ठानम्। इदन्त्वांशस्तु भिन्नोऽपि रजतात् तदभेदरूपेण प्रतीयत इत्याधार इति केचित्।

अस्ति तावत् शुक्तौ रजताध्यासे 'इदं रजतम्' इति ज्ञानं भवती ति। तस्मिंश्च ज्ञाने इदन्त्वांशे रजतत्वांशेन अभेदेन प्रतीयत इति इदं त्वांशाज्ञानमेव रजतस्योपादानकारणं वक्तव्यम् अत्राऽयं बालस्यापि अनुयोगः सम्भवति—यदि प्रथमम् इदन्त्वांशस्य ज्ञानमेव उत्पन्नं,

कुतस्तदा तद्विषयकमज्ञानम्। नहि ज्ञानाज्ञानयोः सामानाधिकरण्यं भवति। अत्रेदं प्रतिवचनं—पुरोवर्त्तिनि पदार्थे नयनसन्निकर्षे सति अन्तःकरणे इदमाकारा काचन वृत्तिर्जायते। सा च वृत्तिरिदन्त्वांशाज्ञानस्य आवरणशक्तिं विनाशयन्त्यपि विक्षेपशक्तिं विनाशयितुं न प्रभवति। ( नयनस्य काच-कामलादिदोष एवात्र कारणम्। ) अत इदन्त्वांशविषयकस्य अज्ञानस्य विक्षेपशक्तिरेव रजतस्योपादान कारणमित्यन्ये। *

क्रमशः।

विधुशेखरशर्म्मा।

———:o:———

## बौद्धानाम् आमेरिकाविष्कारः।

यस्य खलु विविधयशोदुन्दुभिध्वानेनाद्य समग्रमपि दिगन्तरालमापूर्य्यते, आमेरिकाभिधेयस्य तस्य महादेशस्य नामापि पञ्चशतवर्षपूर्वं केनापि नाज्ञायत। अथ खी० १४१२ तमाब्दे अङ्गीकृतसमुद्रयात्राखेदेन श्रीमता 'कलम्बस्'-महाशयेन प्रथमं तमाविष्कृत्य तद्यशोमालिकया स्वोरःप्रदेशः परिशोभित इति सर्वेऽपि जानन्ति। तिरोभूतमिवेदानीं तस्य तद् गौरवम्। अध्यापकेन श्रीमता फ्रायर-( Fryer ) महाशयेन आमेरिकायाः कस्मिंश्चिन् मासिकपत्रे "बौद्धानामामेरिकाविष्कार" इति प्रबन्धे † सुष्ठु प्रतिपादितं यत् कलम्बसतोऽपि बहुपूर्वं—१४०० वत्सराणामपि प्राक् बौद्धाचार्य्यैः उत्तरामेरिकाप्रदेश

---

* अज्ञानस्य द्वे शक्ती—आवरणशक्तिः विक्षेपशक्तिश्च। यथा रज्ज्वम्बुदः अस्थिततया प्रतीसीरया स्वाभ्यन्तरस्थम् अभिनेतृगणम् आवृणोति; तदपसारणेन च स प्रकाशते; अज्ञानमप्येवं शक्तिविशेषद्वारा ज्ञानमावृणोति; अज्ञानस्येयं शक्तिः 'आवरणशक्तिः' इति गीयते। अपरया च कयाचित् शक्त्या अज्ञानस्य रजतत्वाभावेऽपि शुक्तिकायाः, सा रजतरूपेण प्रतीयते। अज्ञानस्येयं शक्तिः 'विक्षेपशक्तिः' इति प्रसिद्धा।

† "The Buddhist Discovery of America" Harper's magazine

आविष्कृतः । वृत्तान्तोऽयं पाठकानां चित्तं विनोदयेदिति "बौद्धधर्म नामके ग्रन्थे संगृहीतस्तत्सार एवात्रोद्ध्रियते । विशेषतो बुभुत्सुभिस्तत्पत्रमानीय द्रष्टव्यम् ।

पाठकैर्मानचित्रे दृष्टं स्याद् 'आसिया' महादेशस्योत्तरपूर्वस्थित कामट्कास्का-( Kamatschaska ) प्रदेशतः, आमेरिकायाः पश्चिमोत्तरस्थित आलास्का-( Alaska ) प्रदेशो 'वेरिं' ( Berhing strait ) प्रणाल्या व्यवधीयते । एतन्मध्ये 'एल्युसियादयः' द्वीपश्रेणयः ( Aleutian Isles ) क्रमेणैता द्वीपश्रेणीरतिक्रम्य नातिक्लेशेन आसियाभागाद् अमेरिकायां गन्तुं शक्यत इति बहुभिः प्रमाणैर्ज्ञातं यत् पुरा बौद्धभिक्षवः प्रागुक्तेन पथा प्रशान्तमहासागरमुत्तीर्य्य आमेरिकामगमन् । मेक्सिको-( Mexico ) वासिनां तत्सन्निहितानाञ्च प्राचीनाधिवासिनाम् इतिवृत्तं, धर्म्मः, आचारः, प्राचीनकीर्त्तिचिह्नादिकं तद्वृत्तस्य सत्यत्वं प्रमाणयति । पुरातनेषु चीनग्रन्थेषु "फुसम्" नामकस्य कस्यापि पूर्वदिक्स्थितस्य देशस्य नाम ज्ञायते, तद्देशोत्पन्नस्य वृक्षविशेषस्य नाम्ना तस्य देशस्य तदभिधेयम् । वर्णनतः 'फुसम्' वृक्षस्य आमेरिकायां 'मेक्सिको'-प्रदेशीयस्य 'आगुये'-('मागुवा') नामकस्य वृक्षस्य भूयः सादृश्यमधिगम्यते ।

चीनेषु 'हुइसेन-भ्रमणवृत्तान्तो' नाम कश्चिद् ग्रन्थोऽस्ति तत्र ज्ञायते हुइसेनः कावुल-नगर-( आफगानिस्थान )-वासी आसीत् ४११ तमे खीष्टाब्दे 'यु आन' नामकस्य सम्राजः साम्राज्यसमये 'फुसं'-देशतः किञ्चेन राजधानीमगमत् । तेन 'फुसं'-देशतो बहुविधानि द्रव्याण्यानीतानि, तत्र किमपि क्षौमवस्त्रमासीत्, तस्य सूत्रमतिदृढं बहुभारसहनं च । मेक्सिको प्रदेशस्य 'आगुये' वृक्षस्य सूत्रमपि तादृशमेव भवति । अपरेषु द्रव्येषु तेन कोऽपि दर्पण आनीतः, यस्यानुरूपो दर्पणः मेक्सिको-प्रदेशे व्यवह्रियते । हुइसेनस्य भ्रमणवृत्तान्ते अन्यदपि ज्ञायते ।

पुरा किल 'फुसं'देशीया बौद्धधर्म्मं नाजानन्। अथ खी० ४५८ तमाब्दे सुं वंशीयस्य 'ता-मिं' नामकस्य सम्राजः समये काबुलनगरात् पञ्चबौद्धभिक्षवः 'फुसं'-देशमुपगम्य बौद्धधर्म्मं प्रचारयामासुः। तत्र बहवस्तस्मिन् धर्म्मे दीक्षिता आसन्। तत्कालप्रभृति च तेषामाचारादिशुद्धिरारभत। ते खलु परिव्राजका भिक्षवः कामट्काष्कातः कथं केन पथा तत्रोपगताः तत्रत्यानाञ्च कीदृशो व्यवहारः, इत्येतत्सर्वं तस्मिन् ग्रन्थे वर्णितमस्ति। फुसं वृक्षस्य गुणदोषौ, तद्वल्कलतः सूत्रनिर्म्माणं, तेन च वसनवयनं, लिखनार्थं पत्रनिर्माणं चापि तत्र सम्यग् वर्णितम्। तस्मिन् देशे द्राक्षाफलस्य प्राचुर्य्यमिति च लिखितम्। किञ्च तत्र ताम्रं प्राप्यते, लौहखनिर्नासीत् स्वर्ण रूप्यकं च न व्यवाह्रियत विक्रेयद्रव्याणां मूल्यस्थैर्य्यं च नाभवत्। तत्रस्थानां राज्यतन्त्रम्, रीतिः, नीतिः, विवाहः, अन्त्येष्टिक्रिया, नगरम्, दुर्गम्, इत्येवमादीनां विषयाणां यादृशं वर्णनमस्ति, तेन तेषां प्राचीनामेरिकायाः, विशेषतस्तु-मेक्सिको-प्रदेशस्य तैस्तैर्द्रव्यैः सह विस्मयावहमैक्यमुपलभ्यते।

मेक्सिकोप्रदेशे कापि जनश्रुतिरस्ति—कश्चित् श्वेतकायः शुभ्रवसनो दीर्घकञ्चुको वैदेशिकः पुरुषः तत्रागमत्। तेन तत्रत्येभ्यः पापपरिहाराय, न्यायसत्यव्यवहाराय, शिष्टमिताचाराय च धर्म्मोपदेशाः प्रदत्ताः। अथ कदाचित् स साधुः पुरुषः लोकैरुत्पीडितो जीवितभयेन सपदि क्वापि जगाम। नातः परं केनापि तत्र तद्दर्शनं लब्धम्। कस्यचित् पर्वतस्य पाषाणखण्डे तत्पदचिह्नं निपतितमासीत्। तत्स्मृतिरक्षणार्थं 'भ्याग्डालिना'-नामके ग्रामे तस्यैका पाषाणमूर्त्तिर्निर्मिता। तन्नाम 'उइ-सि-पेकोको'। सम्भाव्यतेऽयं शब्दः 'हुइ-सेन-भिक्षुः' इत्यस्यापभ्रंशः। अन्येऽपि केचिद् वैदेशिका भिक्षवः स्वानुचरैस्तत्र प्रशान्तमहासागरतीरमागमन्। त एते,प्रागुक्ताः पञ्च भिक्षव एव भवेयुः। तैर्भिक्षुभिस्तत्र यो धर्म्म उपदिष्टः, भूयः साम्यं तस्य बौद्धधर्म्मेण। 'स्पेन'-(Spain) देशीयैः आमेरिकाविज-

यसमये तस्य देशस्य मध्ये भागे मेक्सिकोप्रदेशे च यो धर्म्मः, यन्मतं, यादृशं शिल्पं, गृहनिर्म्माणकौशलं, मासगणनपद्धत्यादीनि च निरीक्षितानि, तैः सार्द्धम् आसियादेशवासिनां धर्म्मस्य, सभ्यत्वस्य चात्यन्तं विस्मयावहं सादृश्यमुपलभ्यते। एतच्च तयोर्वंशयोः परस्परं समागमं विना न कथञ्चित् सम्भवति।

अन्यदपि किञ्चित्प्रमाणमधिगम्यते—भाषाविषयकं हि तत्। भगवान् बुद्धदेवः किञ्च 'गौतम' इति 'शाक्य' इति च नाम्ना प्रसिद्ध आसीदिति सर्वेषां विदितम्। तावेतौ शब्दौ, तदपभ्रंशश्च मेक्सिकोप्रदेशे प्रचलिताः सन्ति। तदेतदुपरिष्टात् स्पष्टीभवति।

तस्मिन् देशे 'ग्वातेमाला' 'हुयातामो' इत्यादयः शब्दाः, स्थानविशेषबोधकाः। तत्र 'ग्वातेमाला' शब्दः गौतमालय इति शब्दस्यापभ्रंश इति स्पष्टमेवावबुध्यते; 'हुयातमो' शब्दोऽपीदृश एव। सन्ति तत्र 'शाकाटापेक' 'ओयास्काका' 'जाकाटेकास' 'शाकापुलास' इत्यादयः शब्दाः। एषां मध्ये "शाक्य" इति पदस्य भूयः सादृश्यं दृश्यते। 'मिकस्टेका' स्थानीयस्य प्रधानपुरोहितस्य नामधेयम्—शाय-साक्का' इति; 'शाक्यमनुष्य' इति तदर्थः। 'पालेङ्क' नामके स्थाने बुद्धस्य मूर्त्तिरेका विद्यते; तन्नाम "शाक्-मोल" ( शाक्यमुनिः )। कोलोरोडा-नदीसमीपे क्वापि क्षुद्रद्वीपे कश्चित् पुरोहितो न्यवसत्, तस्य नाम 'गोतु-शाक्का' ( गौतम-शाक्यः ) आसीत्। मेक्सिको-देशीयस्य पुरोहितस्य नाम 'त्लामा', तिब्बतदेशे बौद्धपुरोहितस्य नाम 'लामा', इत्येतयोः सादृश्यम्। 'मेक्सिको' इति देशस्य नाम तत्रत्यस्यैव कस्यचित् पादपस्य नाम्ना जातम्; अतो यदि 'हुइ-सेनः' तद्देशोपगतः स्यात्, तर्हि तस्यापि फुसं वृक्षस्य नाम्ना तद्देशस्य नामकरणमपि युज्यत एव।

अन्यच्च आमेरिकायां केचित्पदार्था उपलब्धाः, यैः स्पष्टमेव तत्र बौद्धधर्म्मप्रचारः प्रमीयते। यथा ध्यानस्थस्य बुद्धदेवस्य, समागतो बौद्धभिक्षोः, हस्तिनश्च ( न आमेरिकादेशीयस्यैव ) मूर्त्तिः;

चीनदेशीय-'पागोडा'-( Pagoda-देवालयः ) सदृशो देवालयः, प्राचीरगात्रेषु चित्रम्, उट्टङ्किता शिला, स्तूपो, विहारः अलङ्कारादयश्च।

एभिः प्रमाणैः श्रीमता फ्रायर-महाशयेन प्रतिपादितं यत् १४०० वत्सराणामपि पूर्वं बौद्धभिक्षवः आमेरिकामगमन्निति।

विधुशेखरशर्म्मा।

——:o:——

## बौद्धवृत्तान्तः।

१

### भूमिका।

अद्यत्वे प्राच्यप्रतीच्यानामुभयेषामपि शिक्षितानां समाजेषु बौद्धानां धर्मस्य साहित्यदर्शनादीनां चानुशीलनं सविशेषं प्रवृत्तम्। सहृदयानां हृदयरञ्जनसमर्थानि बहूनि तत्त्वानि तेनाविर्भूतानि आविर्भवन्ति च। अस्माकं संस्कृतपण्डितमहोदया नाद्यापीह तदनुशीलनमिच्छन्तो दृश्यन्ते अतोऽस्मिन् सन्दर्भे तान् प्रति समासतो द्वित्राणि वचनानि वक्तुमुचितानीति तत्र प्रवृत्ताः स्मः। किमितीहास्माभिरुदास्यत इति न वयं तत्कारणं जानीमः। साहसेनेदं शक्यते कथयितुं यत् सन्ति खलु बौद्धग्रन्थेषु तादृशं साहित्यम्, तादृशो नीतिवादः, तादृशं दर्शनतत्त्वं, तादृशाश्चापरे शिक्षणीया विषयाः, यत्र तत्तदध्ययनशीलानां सर्वेषामेव मानसमतितमां प्रीणितं स्यात्। बौद्धानां साहित्यमश्वघोषप्रणीतं बुद्धचरितं कालिदासकाव्यप्रतिस्पर्द्धि; एतद्ग्रन्थविषये कैश्चिदिदमप्युच्यते यत् कालिदासेन बुद्धचरिताद् बहवः श्लोकाश्चोरिता इति। तद्विचारस्य नेदंस्थानमिति यातु तत्। बौद्धानां दर्शनं कीदृग् गम्भीरमिति अस्माकं दर्शनग्रन्थेषु तत्र तत्र कणशो विक्षिप्तं क्षणभङ्गवादं * शारीरकभाष्यादौ मात्रया विज्ञानवादं चालोच्यैव आसा-

* सर्वदर्शनसंग्रहे, आत्मतत्त्वविवेके, कुमारिलवार्त्तिके, प्रशस्तपादभाष्यादौ च।

कीनैर्दार्शनिकैरवबोद्धु' शक्यते। प्रतिपक्षैरस्मदाचार्य्यैर्बौद्धदर्शनस्य दुर्बला भागा एव उद्धृत्य दूषिताः, तानेवावलोक्य बौद्धदर्शनं न किञ्चिदिति वयं गणयामः; परं चित्रमिदं यत्तस्य तावतोऽपि चातुर्य्यस्योपलम्भेऽपि न वयं तस्य अपरानंशानवलोकयितु' भ्रमेऽपीच्छामः। तेषां नीतिवादोऽपि अस्मन्नीतिवादतो मापि नाम श्रेयस्त्वं भजतां परं तु स खलु यम्भितान्तमानन्दमुत्पादयति, न तत्र लेशतोऽपि सन्देहः। धर्म्मपदादयो ग्रन्थाः सुष्ठु अत्र साक्ष्यं दद्यात्।

श्रीशङ्करभगवत्पादानां विज्ञानवादेन बौद्धविज्ञानवादस्य कीदृशमतिमहत् सादृश्यमस्तीति तदालोचयितॄणां नाविदितम् बौद्धानां धर्मेण अस्मद्धर्म्मस्य मात्रैव विसंवादः। हिंसाप्रधानवैदिकयागादीनां प्रत्याख्यानेन वेदप्रामाण्यास्वीकारादेव बौद्धधर्म्मस्योपरि कुमारिलभट्टपादैः श्रीशङ्करभगवत्पादैश्च भीषणो मुद्गरो निपातितः। अथ भगवता बुद्धेन वेदप्रामाण्यमङ्गीकृत्यैव साङ्ख्यदर्शनवत् वैदिकयागादयो न्यषेधिष्यत, तर्हि मन्यामहे, बौद्धधर्म्मस्य स्वोत्पत्तिस्थानाद् भारतान् निर्वासनदण्डो नाभविष्यत्। वैदिकधर्म्मविषये अस्मद्दार्शनिकैर्युक्त', वैदिकयागादिकं निषिध्यापि भगवता बुद्धदेवेन न किञ्चित् ततोऽधिकं कथितम्। तथाहि—यदि ईश्वरतत्त्वस्यापलापकमपि, देवतानां मूर्त्तेस्तिरस्कारकमपि मीमांसादर्शनम्, विशुद्धसत्वस्य केवलं ज्ञानेनैव मोक्षः, न तस्य वैदिककर्म्मापेक्षेति क्वचित् क्वचिद् वैदिकयागादीनामविधायकमपि शाङ्करदर्शनम्, स्पष्टमेव ईश्वरस्याभावं, वैदिककर्म्मणामफलोपधायकत्वं च कथयदपि साङ्ख्यदर्शनम्, वेदपुराणेतिहासप्रसिद्धम् इन्द्रस्य वृत्रासुरेण युद्धं न वास्तवम्, अपितु रूपकमात्रम् इति कण्ठत एव प्रकाशयदपि निरुक्तशास्त्रं च यदि नामास्माकं सादरं समालोचनीयं स्यात्; तर्हि बौद्धशास्त्रं नात्यन्तमपराध्यति अस्माभिरेव स पन्थाः प्रदर्शितः। इदन्तु तदाविष्कारकेण स्खलितं यत्तेन स्वधर्म्मः वस्तुतो वेदमूलकोऽपि कण्ठतस्तत्प्रामाण्यम् अनङ्गीकृत्य प्रतिष्ठापितइति। वस्तुतस्तु अस्मद्धर्मेण बौद्धधर्म्मस्य यादृशं

भूयः साहश्यमस्ति, तेनासौ बहुष्वंशेषु असमञ्जसस्य परिपोषक एव। जिज्ञासवस्तत् स्वयं परीक्ष्य ज्ञातुमर्हन्ति।

किञ्च यदि विषादपि अमृतम्, अमेध्यादपि काञ्चनम्, बालादपि सुभाषितं, अमित्रादपि च सद्वृत्तं ग्राह्यमिति यत् किञ्चिन्मनुरवदत्, तद् भेषजम्" इति श्रुतिप्रख्यापितमाहात्म्यस्य धर्मशास्त्रकारस्य भगवतोमनोरादेशः स्यात्, * तर्हि तत्रभवतां कुमारिलभट्टानां श्लोकवार्त्तिकोक्तं वचनमिदमस्माभिः नयने निमील्यैव कथञ्चित् श्रोतव्यम्, न त्वनुसरणीयम्। तद्यथा—मीमांसादर्शनकृता "शिष्टाकोपेऽविरुद्धम्", "न शास्त्रपरिमाणत्वात्", "अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" इति त्रीणि सूत्राणि ( मी० द० १अ० ३पा० ५-७ ) उक्तानि। अस्यार्थं भाष्यकारः शबरस्वामी आह—"वेदं कृत्वा वेदिं करोतीति" श्रूयते; † इत्येवमादिषु स्थानेषु क्षुतादिनिमित्ते प्राप्ते "आचान्तेन कर्त्तव्यम्", "यज्ञोपवीतिना कर्त्तव्यम्", "दक्षिणाचारेण कर्त्तव्यम्" इत्येवमादीनि स्मृत्या विधीयन्ते। अत्र वेदं कृत्वा वेदिं करोतीति श्रुत्या वेदवेदिकरणयोरानन्तर्य्यं प्रतीयते; यदि हि एतन्मध्ये पुनराचमनादिकमनुष्ठीयेत, तर्हि श्रुत्युक्तकालबाधः स्यात्। तस्मात् पूर्वोदाहृता स्मृतिः ('आचान्तेने'त्यादिः) अप्रमाणम्—इति पूर्वपक्षे प्राप्ते उच्यते—यथा वेदवेद्यादयः पदार्थाः श्रुत्युक्ताः एवमाचमनादयः स्मृत्युक्ताः। वेदवेदिकरणक्रमस्तु पदार्थनिष्ठो धर्म्मः। न च धर्म्मार्थं धर्म्मि-( आचमनादि ) बाधो युक्तः। तस्माद् वेदवेदिकरणमध्ये क्षुतादिनिमित्ते जाते कर्त्तव्यमेवाचमनम्। तस्मात् स्मृतिः प्रमाणमेव।

---

* श्रद्दधानः शुभां विद्यामाददीतावरादपि। अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि॥ विषादप्यमृतं ग्राह्यं, बालादपि सुभाषितम्। अमित्रादपि सद्वृत्तम्, अमेध्यादपि काञ्चनम्॥ स्त्रियो रत्नान्यथो विद्या धर्म्मः शौचं सुभाषितम्। विविधानि च शिल्पानि समादेयानि सर्वतः॥" मनुसंहिता।

† "वेदो नाम दर्भमयं सम्मार्जनसाधनम्, वेदिः आहवनीयगार्हपत्यमध्यवर्त्तिनी चतुरङ्गुलखाता भूमिरिति" न्यायमालाविस्तरे माधवाचार्य्याः।

वार्त्तिककारः कुमारिलभट्टस्तु तेषां सूत्राणां तात्पर्य्यमित्थमाह-
"ब्रह्मचर्य्यम्, अहिंसां च, अपरिग्रहं च सत्यं च यत्नेन रक्षेत्" इति श्रुत्या विधीयते। "बौद्धा" अपि ब्रह्मचर्य्याहिंसादीनि तथैव कर्त्तव्यत्वेनामनन्ति। न च एतादृश्या बौद्धस्मृत्याः श्रुतिविरोधः। तस्मात् को दोषस्तस्या बौद्धस्मृतेः प्रामाण्ये—इति पूर्वपक्षे प्राप्ते आह यथाहि गङ्गोदकं (केचित्तु गोक्षीरमित्याहुः) पवित्रमपि श्वदृतिस्थं (कुक्कुरचर्म्मपुटकमध्यगतम्) अग्राह्यं भवति, एवमेव अहिंसादिकमुपादेयमपि बौद्धस्मृतिसम्बन्धेन अग्राह्यमेव। न प्रमाणमस्ति बौद्धशास्त्रोक्तो धर्म्मः फलं साधयेदिति। अस्माकन्तु "वेदोऽखिलो धर्म्ममूलम्" इत्यादि बहुप्रमाणमस्तीति।

माधवाचार्य्यकृत-शङ्करदिग्विजयपाठकानां नैतदविदितं यद् बौद्धानां समूलोन्मूलनार्थमेव कुमारिलभट्टस्यावतार इति। बौद्धान् प्रत्यस्य कीदृशो विद्वेष आसीदिति प्रागुक्तमीमांसासूत्राणां शबरस्वामिकृतस्य एतत्कृतस्य च व्याख्यानस्यालोचनादेव स्पष्टीभवति। बौद्धसिद्धान्तो महता प्रतापेन विचूर्णितस्तेन। अतएव माधवाचार्य्य आह—

"कुमारिल मृगेन्द्रेण हतेषु जिनहस्तिषु।
निष्प्रत्यूहमवर्द्धन्त श्रुतिशाखाः सहस्रशः" ॥इति॥

कृतमतिविस्तरेण। बौद्धशास्त्रमस्माकमनुशीलनार्हं न वेति मन्यामहे, एतद्विषयेऽस्माभिः संगृह्य क्रमेण प्रकाश्यमानैः सन्दर्भैः सचेतसोऽस्मत्पाठकमहाशया विज्ञातुं प्रभवेयुः।

अथ बुद्धदेवस्य नीत्युपदेशः।

२

भगवता बुद्धदेवेन स्वानुचरान् प्रति कीदृशा नीत्युपदेशाः प्रदत्ताः, तदेवाद्य समासतोऽस्मत्पाठकमहाशयेभ्य उपहर्त्तुमिच्छामः।

तत्र पञ्च धर्म्मोदेशाः—("सुत्तनिपात"स्य "धम्मिकसुत्ते-सूत्रनिपातस्यधार्मिकसूत्रे) १ प्राणिहिंसा न कर्त्तव्या, २ अदत्तं द्रव्यं न ग्राह्यम्, ३ कामेषु मिथ्याचारात् (व्यभिचाराद्) विरमणीयम्; ४ अनृतं

न भाषणीयम्, ५ मद्यं न पेयम् एते पञ्च धर्म्मादेशाः "पञ्चशीलम्" इत्यपि कथ्यन्ते। "पञ्चशील"मिदम् अविशेषेण भिक्षुकैर्गृहस्थैश्चानुष्ठेयम्।

अत्रैव अपरस्मिन् नियमत्रये संयोजिते सर्वं मिलितम् "अष्टशीलम्" इति गीयते। अयमत्र विशेषः—पञ्चशीलमध्ये तृतीयनियमे व्यभिचारो निषिद्धः। अत्र तु अष्टशीले तृतीयनियमे मैथुनं सर्वथा निषिद्धम्—"अब्रह्मचरिया वेरमणी"—अब्रह्मचर्य्याद् विरमाणीति। एतन्नियमत्रयं यावच्छक्यं सर्वैरनुष्ठातुं यतनीयम् तद्यथा—१ विकालभोजनं न भोक्तव्यम्, २ माल्यं गन्धद्रव्यं च न धार्य्यं, ८ उच्चशयने महाशयने वा ( उच्चपल्यंके, तूलगर्भादिशय्यायां वा ) न शेतव्यम्।

अत्रापरे नियमद्वये योजिते, तत् सर्वं "दशशीलम्" इति नाम्नाख्यायते। यथा—१ नृत्य-गीत-वादित्रोत्सवदर्शनं न कर्त्तव्यम्, २ स्वर्णं रजतं च न धार्य्यं।

'दशशीलम्' भिक्षुभिरवश्यानुष्ठेयम्, गृहस्थानां 'पञ्चशीलम्' एव अवश्यानुष्ठेयत्वेन विहितम्, अन्यत् सर्वं तु यथाशक्ति कर्त्तव्यम्*

दुतियम्पि—( द्वितीयमपि ) अहं भन्ते, पञ्चसीलं धम्मं याचामि, अनुगाहं कत्वा शीलं देथ मे भन्ते"।

---

* अत्र प्रसङ्गात् पञ्चशीलादिकं बौद्धैः कया परिपाट्या गृह्यते इति किञ्चिदुच्यते।

गृही भिक्षुसमीपं गत्वा त्रिः प्रार्थयेत—अहं भन्ते, तिसरणेन सह पञ्चसीलं धम्मं याचामि। अनुगाहं कत्वा सीलं देथ मे भन्ते।

स०—अहं प्रभो, त्रिशरणेन सह पञ्चशीलं धर्म्मं याचामि। अनुग्रहं कृत्वा शीलं देहि मे प्रभो।

बौद्धैः प्रतिदिनं बुद्धस्य, बुद्धप्रवर्त्तितस्य धर्मस्य, तद्धर्म्मानुसारिणां च संघ' इति प्रसिद्धानां स्तुतिः क्रियते। एतत्त्रयं "त्रिशरणम्" इति च गीयते। तदिदम्—बुद्धं शरणं गच्छामि, धर्म्मं शरणं गच्छामि, संघं शरणं गच्छामि अत्र विस्तरो वक्ष्यते।

ततियम्पि-( तृतीयमपि ) अहं भन्ते, पञ्चसीलं धम्मं याचामि अनुगाहं कत्वा सीलं देथ मे भन्ते ।

अष्टशीलादिप्रार्थनासमयेऽपि इयमेव रीतिः । केवलं "पञ्चसीलम्" इत्यत्र यथा प्रयोजनम् "अष्टशीलम्", "दशशीलम्" चेति पाठ्यम् ।

भिक्षुः— यदहं वदामि, तं वदेहि । ( स० यदहं वदामि, त वद )। गृही—आम भन्ते । आं प्रभो ।

अतः परं गृही भिक्षुमनु वदेत्—

१ । "पाणातिपाता वेरमणी सिक्खापदं समादियामि" ।

स०—प्राणातिपाताद् विरमाणीति शिक्षापदं समाददामि ।

२ । "अदिन्नादाना वेरमणी सिक्खापदं समादियामि" ।

स०—अदत्तादानाद् विरमाणीत्यादि ।

३ । "कामेसु मिच्छाचारा वेरमणी सिक्खापदं समादियामि" ।

स०—कामेषु मिथ्याचाराद्-इत्यादि ।

४ । "मुसावादा वेरमणी सिक्खापदं समादियामि" ।

स०—मृषावादाद् ... इत्यादि ।

५ । "सुरा-मेरय-मज्ज-पमाद ट्ठाना वेरमणी सिक्खापदं समादियामि" ।

स०—सुरा-मैरय-मद्य-प्रमादस्थानाद् विरमाणीत्यादि ।

६ । "विकालभोजना वेरमणी सिक्खापदं समादियामि" ।

स०—विकालभोजनाद् ( असमयभोजनात्-रात्रिभोजनात् ) विरमाणीत्यादि ।

७ । माला-गन्ध-विलेपन-धारण-मण्डन विभूसन-ट्ठाना-वेरमणी सिक्खापदं समादियामि । ( स्पष्टम् )

८ । उच्चासयन-महासयना वेरमणी सिक्खापदं समादियामि ।

९ । नच्च-गीत-वादित-विसूक-दस्सना वेरमणी समादियामि ।

स०—नृत्य-गीत-वादित्रोत्सवदर्शनाद् विरमाणीति ... ।

१० । "जातरूप-रजत-पटिग्गहणा वेरमणी सिक्खापदं समादियामि ।
सं०—जातरूप-रजत-प्रतिग्रहणाद् विरमाणीत्यादि ।

अथ भिक्षुर्वदेत्—"तिसरणेन सह पञ्चसीलं धम्मं साधुकं सुरक्खितं कत्वा अप्पमादेन सम्पादेतब्बम्"—त्रिशरणेन सह पञ्चशीलं ( एवमष्टशीलं दशशीलं वा ) धर्म्मं साधु सुरक्षितं कृत्वा अप्रमादेन सम्पादयितव्यम् ) गृही—"आम भन्ते" । ( आं प्रभो । )

प्रागुक्तम् अष्टशीलं वक्ष्यमाणाभ्यां पालिगाथाभ्यां संगृहीतम्:—

"पाणं न हाने, न चादिन्नमादिये,
मुसा न भासे, न च मज्जपो सिया ।
अब्रह्मचरिया विरमेय्य मेथुना,
रत्तिं न भुञ्जेय्य विकालभोजनम् ॥
मालं न धारे, न च गन्धमाचरे,
मञ्चे छमायं व सयेथ सन्थते । ... " ॥

सं०—प्राणिनं न हन्यां, नचादत्तमाददीयाम्, मृषा न भाषेय, न च मद्यपः स्याम् ।
अब्रह्मचर्य्याद् विरमेय मैथुनाद्, रात्रौ न भुञ्जीय विकालभोजनम् ॥
मालां न धरेयं न च गन्धमाचरेयम्, मञ्चे क्षमायां वा शयीय सन्ततायाम् ॥

शीलप्रशंसापरा बहवः श्लोका विद्यन्ते । तेभ्यो मनोरमतमा द्वित्रा उदाह्रियन्ते—

"न तं सजलदा वाता, न चापि हरिचन्दनं ।
नेव हारा न मणयो न चन्द्रकिरणङ्कुरा ॥
समयन्तीह सत्तानं परिलाहं, सुरक्खितं ।
यं समेति इदं अरियं सीलं अच्चन्त सीतलम् ॥

सं०—न तं सजलदा वाता, न चापि हरिचन्दनं ।
नैव हारा, न मणयो, न चन्द्रकिरणाङ्कुराः ।
शमयन्तीह सत्त्वानां परिदाहं, सुरक्षितम् ।
यं शमयति इदम् आर्य्यं शीलमत्यन्तशीतलम् ॥

सुरक्षितमिदमार्य्यं शीलं जनानां यं दाहं शमयति, जलदपवनचन्द्र-चन्दनहारादयो न तं शमयितुं प्रभवन्तीति तदर्थः। एतदकरणे दोषोऽपि प्रदर्शितो यथा—

यो पाणमतिमापेति मुसावादं च भासति।
लोके अदिन्नं आदियाति परदारं च गच्छति॥
सुरामेरयपानं च यो नरो अनुयुञ्जति।
इधेऽवमेसो लोकस्मिं मूलं खनति अत्तनो॥

स०—यः प्राणमतिपातयति मृषावादञ्चभाषते।
लोके अदत्तमाददाति परदारांश्च गच्छति॥
सुरामैरयपानञ्च यो नरो ऽनुयुनक्ति।
इह एवमेष लोकेऽस्मिन् मूलं खनति आत्मनः॥

धम्मपदं-मलवग्गो।

"सिगलोवद सुत्त"-नामके * (शृगालवादसूत्रे) ग्रन्थे गृहस्थानां बहवो नियमाः प्रपञ्चिताः। पित्रादीनां प्रति पुत्रप्रभृतिभिः कथं व्यवहर्त्तव्यम् इत्यादिकं तत्र सुष्ठु प्रदर्शितम्। तत एव किञ्चित्प्रदश्यंते।:—

१। पितरौ पुत्रश्च।

पितरौ—१। पुत्रान् पापेभ्यो रक्षेताम्, २। तेभ्यो धर्म्मानुशासनं कुर्य्याताम्, ।३। तेभ्यो विद्यां विज्ञानं च शिक्षयेताम्; ४। अनुरूपया पत्न्या (कन्यापक्षे भर्त्रा) तेषां विवाहं सम्पादयेताम्, ५। तेभ्यः स्वधनादेरुत्तराधिकारं दद्याताम्।

पुत्रस्तु—प्रतिजानीयादिदम्—

१। याभ्यां पोषितोऽस्मि तावहं पुष्णीयाम्; २। पारिवारिकं

---

* बुद्धदेवो यदा राजगृहान्तर्गते (राजगृहं मगधदेशस्य प्राचीना राजधानी) 'वणुवने' आसीत्, तदा कस्मिंश्चिदहनि भिक्षाटनार्थं गच्छन् पथि "शृगाल"नामानं कमपि द्विजं प्रयामेन पितॄन् तर्पयन्तं गृहस्थं याजुपदेशान् प्रादात् ते सर्वे 'शृगाल सूत्रे' निबद्धाः सन्ति।

कृत्यं, यत् खलु तयोरुपरिस्थितं, तदहं सम्पादयेयम्; ३। तयोः सम्पत्तिं ( धनादिं ) रक्षेयम्; ४। तयो र्दायादीभवितुमहमात्मानं तदुचितं कुर्य्याम्; ५। उपरतयोस्तयोः स्मरणानुबन्धेन तावहं सम्मानयेयम् ॥

२। अध्यापकः, अन्तेसदश्च ।

अन्तेसदः स्वाध्यापकमित्थं सम्मानयेत्—१। अध्यापके समागते आसनादुत्थानेन, २। तदपेक्षितसम्पादनेन, ३। तद्वचनानुवर्त्तनेन, ४। तदुपदेशे मनोऽभिनिवेशदानेन, ५। तस्य परिचर्य्यया च।

अध्यापकोऽपि अन्तेसदाय स्वस्नेहमित्थं प्रदर्शयेत्—

१। सर्वेषु साधुविषयेषु तस्यानुशासनेन, २। त्वरितं ज्ञानमुपार्जयितुं तस्मै शिक्षाप्रदानेन, ३। ज्ञान-विज्ञानशिक्षया, ४। तस्य सुहृदनुचरादिसमीपे तस्य साधुवादकथनेन, ५। सर्वाभ्यो विपद्भ्यस्तस्य रक्षणेन च।

३। पतिः, पत्नी च।

पतिः पत्नीं पालयेदित्थम्—१। ससम्मानव्यवहारेण, २। सदयव्यवहारेण, ३। तां प्रत्यात्मनो विश्वास्यत्वेन (परदारागमनेन), ४। यथा तामन्येऽपि सम्मानयन्ति, तथा करणेन, ५। तस्यै अनुरूपवस्त्राभरणदानेन च।

पत्न्यपि पतिं प्रत्यात्मनोऽनुरागं प्रकाशयेदित्थम्:—१। गृहसामग्रीणां यथास्थानं सन्निवेशनेन, २। पातिव्रत्येन, ३। नात्यधिकव्ययेन गृहकर्म्मसम्पादनेन, ४। सर्वेषु गृहकृत्येषु श्रमाङ्गीकारेण कौशलप्रदर्शनेन च, ५। परिवारेषु तदुचितसत्कारविधानेन।

४। बन्धवः, सहचराश्च ।

बन्धुजनः स्वसहचरानित्थं सेवेत—१। उपहारप्रदानेन, २। मधुरसम्भाषणेन, २। तेषां कल्याणसाधनेन, ४। तान् प्रत्या-

त्मसमानत्वेन व्यवहारेण, ५। तैः सार्द्धं सौभाग्यभोगसेवनेन च। इमेऽपि तं प्रति स्वहृदयानुरागमित्थं प्रदर्शयेत्—१-२ सति तस्य प्रमादे तत्पर्य्यवेक्षणेन, तस्य धनसम्पत्तिरक्षणेन च ३-४। समागतायां विपत्तौ तस्मै आश्रयप्रदानेन, तत्पक्षावलम्बनेन च, ५। तत्परिवारेषु प्रीतिप्रदर्शनेन च।

५। प्रभुर्भृत्यश्च।

प्रभुस्तदाश्रितानां भृत्यानां मङ्गलमित्थं साधयेत्—१। तेषां तत्सामर्थ्योचितेषु कर्म्मसु विनियोगेन, २। अनुरूपाहार्य्यवेतनप्रदानेन, ३। व्याधिसमयेषु तेषामुपचरणेन, ४। तेभ्योऽसुलभस्वाद्वन्नभागप्रदानेन, ५। अन्तरान्तरा कर्म्मणोऽवकाशप्रदानेन च।

तेऽपि प्रभुं प्रति स्वानुरागमित्थं दर्शयेयुः—१। प्रभोः पूर्वमेव शयनादुत्थानेन, २। प्रभोः परं शयनेन, ३। यत्तेभ्यो दत्तं तेनैव सन्तोषाधिगमेन, ४। सानन्दं कर्म्मणां सम्यक् सम्पादनेन, ५। प्रभोः प्रशंसावादेन च।

६। गृहस्थः (अदीक्षितः) सन्न्यासी च।

गृहस्थो जनो भिक्षून् ब्राह्मणांश्चेत्थं सेवेत—१ १-२-३। कर्म्मणा मनसा वाचा च तेभ्यो भक्तिप्रदर्शनेन, ४। तेषां सद्यः स्वागतप्रश्नेन, ५। जीवितार्थापेक्षितद्रव्यदानेन च।

इमेऽपि तस्मै स्वानुरागमित्थं प्रकाशयेयुः—१। तस्य पापान्निवर्त्तनेन, २। सदाचारे प्रेरणेन, ३। तं प्रति करुणानुभवेन, ४। धर्म्मोपदेशेन, ५। संशयनिरसनपूर्वं स्वर्गपथप्रदर्शनेन च।

श्रीमन्तः पाठकाः, तत्रभवता बुद्धदेवेनोपदिष्टान् गार्हस्थ्यधर्म्मानेतान् समालोच्य कस्य नाम हृदयं नानन्दस्फीतमुपजायते? पित्रोस्तनयस्य विद्या-धर्म्म-नीति-सुख-सम्पादनार्थं प्रयासः, पुत्रस्य च पित्रोः परिपोषणं, सम्मानन, स्मृतिसंरक्षणं च, अध्यापकान् प्रति अन्तेवासिनां सबहुमानो व्यवहारः, अध्यापकानां च तान्प्रति स्नेहानु-

न्ध्यः । पत्युः पत्न्यां सम्मानः, सकरुणः, सस्नेहश्चाचारः, पत्न्या-
पि च तस्मिन् पातिव्रत्यं, दृढानुरागः, गृहकर्म्मनैपुण्यादिकं च,
न्धूनामन्योन्यं तादृशः समुदारः सदाचारः, प्रभुभृत्ययोस्तादृक्
रस्परं सदयः सानुरागश्च व्यवहारः, गृहस्थप्रव्रजितयोश्च मिथस्तद्-
मनोज्ञं वृत्तं न कस्य मानसमाकर्षेयुः । सर्वेऽप्येते मनोरमा आचा-
बौद्धधर्म्मशास्त्रेषु असकृद् दृश्यन्ते । तत एवैते संगृहीता बौद्ध-
शास्त्रेष्वपि इदं सर्वमवलोक्य मन्दमतिरपि बौद्धधर्म्मस्य हृदयङ्गम-
ं वेत्तुं प्रभवति । ( शिष्टमग्रे )

कश्चित् पत्रिकाप्रियः ।

---

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

स्त्री शिक्षा—कतिचिद्दिवसानि भारते शिक्षासंस्कारालोचनेन
जनानां चित्तं व्यापृतम् । न केवलं विश्वविद्यालयशिक्षैव तदालोचन-
विषयः, अपितु शिल्पविज्ञानशिक्षामप्यधिकृत्य सर्वत्रैव भारते जनानां
चिन्तनं दृश्यते । नूनमिदं साम्प्रतं भारतस्य प्रमोदावहम् । अयं च
महानानन्दो यत् तत्रभवान् धर्म्माधिकरणिकः श्रीसारदाचरणमित्र-
महोदयः स्वचिन्तितं स्त्रीशिक्षाप्रकारं पुरस्कृत्यास्मिन् क्षेत्रे समुप-
स्थित इति । कलिकातायां महाकाली पाठशालेति प्रसिद्धस्य बा-
लिकाविद्यालयस्य बालिकाभ्यः पुरस्कारप्रदानावकाशे स्त्रीशिक्षा-
विषये स खलु मधुरं व्याख्यानमकार्षीत् । तच्चिन्तितः स्त्रीशिक्षा-
प्रकारः वर्त्तमानस्य समाजस्य समुचितः । अद्य यावत् ये वा स्त्री-
शिक्षा नाधिकृततराणां जनानां हृदयमाकष्टुं समर्था, इदमेव तस्य
कारणं यत् स्त्रीणां शिक्षया यज्जनैरभिलषितं, न तत्प्राप्यत इति ।
धर्म्माधिकरणिक महाशयेनाभिप्रेयते समाजस्य वर्त्तमानायामवस्थायां
वंस्यैव देशस्य, अथवा अन्ततस्तु भारतस्य पुरुषाणां जीवनं स्त्री-
णां जीवनादवश्यं भिन्नमेव भवेत् । एकस्य कृत्यमपरस्य कृत्याद्

भिद्यत एव । अतो बालकानां बालिकानां चाविशेषेण एकस्मिन्ने पथि विचरणं भ्रममूलकमेवेति । तन्मते भारतीयानां बालिकानां यावद् द्वादशं वर्षं साधारण विद्यालये पाठसमयः । तत्र पञ्चमात् सप्तमं वर्षं यावत् साम्प्रतं प्रचलिते सामान्यप्रकारेण 'किण्डारगार्टेन' प्रभृतिना लिखन-पठन-चित्राङ्कनशिक्षा देया । अष्टमाद् द्वादशं वर्षं यावत्तु पाठं द्वेधा विभक्तं भवेत्—एकं विश्वविद्यालयशिक्षाभिलषन्तीनाम्, अपरन्तु यासां प्रायो द्वादशे वर्षे विवाह एव पाठः समाप्यते । एताभ्यः खल्वन्तिमाभ्यो बालिकाभ्यः भारतीयम् इतिवृत्तं, भारतीयं भूगोलं, प्राथमिकं गणितम्, चित्राङ्कनं, स्वास्थ्यतत्त्वम्, पाकविद्या,............च प्रदेयानि । यास्तु स्वल्पा बालिका विश्वविद्यालयशिक्षामिच्छन्ति, अष्टमवर्षप्रभृत्येव तासामपि पाठव्यवस्था कर्त्तव्येति । परिवारेषु परिवारकर्त्रीणां गृहिणीनां समुचितां शिक्षामन्तरेण कीदृशं महदनिष्टमुत्पद्यत इति कस्य नाम नाविदितम् परिवारेष्वस्मद्बालिका यथा सुष्ठुतरं गृहिणीपदमधिगन्तुं शक्नुयात् तथावश्यं सर्वैर्यतनीयम् । उक्तं मनुना—"स्त्रियः श्रियश्च गेहेषु विशेषोऽस्ति कश्चनेति" ईदृश्यः स्त्रियश्चेदपेक्ष्यन्ते, तर्हि ताभ्यः शिक्षादानाद् ऋते को नामापर उपायोऽस्तीति न जानीमः । श्रीमत् मित्रमहोदयेन बालिकानां प्रथमशिक्षार्थं योऽयमुपायश्चिन्तितः, सर्वः स मनोरमः । चित्तवृत्तेरिव शरीरस्याप्युन्नतये शिक्षा आवश्यकी पितुरिव मातुरपि शरीरस्वास्थ्यदोषात् उत्पन्नस्य शिशोः स्वास्थ्यं विहन्यते । अतो बालकैरिव बालिकाभिरपि शरीरोन्नतये कश्चिन्मृदुव्यायामः सेवनीय एवेति प्रतिभाति । दृश्यत एवेयं रीतिर्देशान्तरेषु

जापानस्योन्नतिः—वैदेशिके पत्रिकान्तरे जापानस्योन्नतिकारणविषये तस्यभूतपूर्वेण मन्त्रिणा कोऽपि प्रबन्धः प्रकाशितः । तत् बहुषु ज्ञातव्येषु द्वित्रा एवेह लिख्यन्ते । जापानस्य पूर्वमभिमान आसीत् यत् तत्रत्यं सर्वमेव उत्तमम्, देशान्तरीयन्तु सर्वमेवापकृष्टम् अतोऽनुपादेयमिति । यावत् तस्यायं मिथ्याभिमान आसीत्, न तेः

ावत् किञ्चित् कर्त्तुं प्राभूयत । अथ यदा स निर्मूलकत्वेन तेनावधा-
तः, तदाप्रभृत्येव वैदेशिकेषु यद्यदुत्कृष्टं, तत्संग्रहाय जापानीयैः
म्यक् प्रयतितम् । अस्मद्देशेऽपि बहुलमिवायमभिमानोऽस्ति तेन
न्धाः सन्तः स्पष्टं प्रकाशमानमपि वैदेशिकानां गुणमहिमानं क-
त् कचिदपि दृष्ट्वाप्यपश्यन्त इवापह्नोतुमिच्छामः । कदाचित् कि-
त् सर्वथा नूतनमेवाविष्कृतं तत्त्वं तैः, न तथात्वेनाङ्गीकर्त्तुमभिल-
मः । श्रूयते—विद्युद्वार्त्तेयं न पाश्चात्यानां प्रथमा सृष्टिः, भारतीयै-
ार्यैः सृष्टपूर्वा सेति वैदिकवचनोपन्यासेन प्रमाणयितुं केनापि
द्वाग्रहेण कियद्दिनपूर्वं प्रायतत । अलमुक्तेन स खलु पश्चादुपहसित
ाभवदिति । अत ईदृशं दुरोदर्कं वृथाभिमानं दूरतोऽपसार्य्य
यस्योत्कृष्टं, तदेव निकृष्टादपि तस्मादादेयम् । जापानोन्नतेरपरं
रणं तत्रत्या शिक्षा । अयं तस्मिन्नुपनिबद्धो नियमो यत् प्राप्ते षष्ठे
र्षे वयसि अविशेषेण सर्वेऽपि बालका बालिकाश्च साधारणविद्यालये
क्षामधिगच्छेयुरिति । एतत्परिपाकेन दृश्यते साम्प्रतं जापाने प्रति-
तकं ९३· ७८ बालकाः, ८१· ८ बालिकाश्च विद्यागारेषु शिक्षां
भन्ते । भारते तु शिक्षमाणा बालकाः प्रतिशतकं २० विंशतिः, बा-
कास्तु प्रतिशतकं २ द्वे । सन्ति केचिदस्मद्देशे, ये हि प्रवर्त्तमानां
ीशिक्षापद्धतिं दूषयन्तोऽपि न तावत् स्वोद्भावितामपि तामनुस-
न्ति अन्यानेव वा तत्र प्रवर्त्तयन्ति । अस्मादपि शिक्षमाणेभ्यो बाल-
भ्यो तासां बालिकानां संख्या न्यूना ।

उद्भिद्विद्यायाश्चरमोत्कर्षः—आमेरिकायां कालिफर्णियानिवासि-
ा श्रीमता लुथार बरब्याङ्क-( Luther Burbank ) महाशयेन उद्भि-
द्याया इत्थमभिनवं तत्त्वमाविष्कृतम्, आविष्क्रियते चाद्यापि, येन
र्वेषामेव हृदयं विस्मीयते । मानवैरशक्यं नाम किञ्चिदस्तीति न
द् विजानतश्चेतस्युदेति । आमेरिकामरुषु अस्मद्देशीयस्नुहीवृक्ष-
ा काण्डपत्रादिषु सर्वतः कण्टकाकीर्णः, अतएव च नरवत् पशुभि-
ऽनुपादेयः कश्चित् 'क्याकटास' नामा ( Cactus ) पादपोऽस्ति ।

दश वर्षाणि परिश्रम्य बारब्याङ्कमहाशयेन तस्य वृक्षस्य पत्रस्या सुस्वादुत्वं, पुष्टिकरत्वं च सम्पादितं, का कथा फलस्य। साम्प्रतं तस्य कण्टकसंस्पर्शोऽपि नास्ति। तेनोच्यते—यैरुपादानैः क्याकटास् वृक्षस्य कण्टकादयोऽनुपादेयाः अंशा उत्पद्यन्ते, तान्येव हि तत्प्रभावेण भो ज्यमंशमुत्पादयन्तीति। श्रीमता बारब्याङ्केन क्याकटास् वृक्ष इव ब्ल्याक्बेरी-(Blackberry) वृक्षोऽपि निष्कण्टकीकृतः। साम्प्रतं ते :पाटल-(गुलाब) वृक्षस्यापि कण्टकापाकरणाय यत्यते। आमेरिकाया मेव कस्मिंश्चित् प्रदेशे पादपानां वसन्तसमयशेषे तुषारपातेन महा नपचयो जायते। बारब्याङ्कप्रभावेणेदानीं कुसुम मुकुलादिषु तुषारे संहृतेष्वपि पुनः सूर्यकिरणसंयोगे तेभ्य एव फलोद्गमो भवति। डालिया-( Dahlia ) कुसुमं दुर्गन्धं, तेनास्मिन् म्याग्नोलिया-(Mang olia) कुसुमस्य सौरभं सम्पादितम्। अनेन क्षुद्रं फलं बृहत्, बृह क्षुद्रं कर्त्तुं शक्यते। अष्ट्रेलियायाः नक्षत्र-कुसुमस्य-(Star-flower) तथाभ्युदयः सम्पादितः, येन सहाकारेण गुणोऽपि तस्यावर्द्धत,— शुष्कस्यापि तस्य वर्ण-सौकुमार्यवैलक्षण्यं न जायते। बारब्याङ्कमहाश येनापराण्यपि बहून्यद्भुतानि सम्पादितानि सम्पाद्यन्ते च।

वार्षिकोत्सवः—अतीते 'मे' मासे प्रयागस्थितायाः 'हिन्दुधर्म प्रवर्द्धिनी सभायाः' द्वितीयो वार्षिकोत्सवो महता प्रमोदेन सम्पन्नः। तत्र काशिकैर्महामहोपाध्यायैः श्रीराममिश्रशास्त्रिभिः, इटावावासिभि पण्डितैः श्रीलक्ष्मीप्रधानशर्मभिश्च सभापतेरासनमलंकृतमासीत्। सभायां सुप्रसिद्धैर्वाग्मिभिः पण्डितश्रीदीनदयालुशर्मव्याख्यानवाच स्पतिभिः, पण्डितश्रीमदनमोहनमालवीयैः, 'सुदर्शन'-सम्पादकै श्रीमहादेवप्रसादमिश्रप्रभृतिभिश्च चेतोहरं व्याख्यानं कृतम्। सभार्थं सभास्थापितसंस्कृतपाठशालार्थं च तस्मिन्नेव स्थाने पञ्चसहस्राणि रूप्यकाणि संगृहीतानि।

# मित्रगोष्ठी-पत्रिका।

## ( मासिकं संस्कृतपत्रम्। )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् " ।

ऋग्वेदः।

द्वितीये वर्षे } १८२७ शकाब्दाः, श्रावणः { चतुर्थसंख्या

## काव्यपरिमलः।

### काव्यप्रशस्तिः।

कीर्त्तिं श्रीविद्दढापि भावमहती स्थैर्य्यं न धत्ते चिरम्,
कालस्रोतसि लीयते रघुपतेरालीव पाथोनिधौ।
साचेत् स्थेयसि वज्रकोषसदृशे रामायणाभे कवे-
र्वाग्बन्धे विनिधीयते नहि तदा स्याद् यातयामा कचित् ॥१॥

द्रवत्वं पाषाणानपि नयति दीप्तानपि शमम्,
मृतानप्युच्चैर्यत् पुनरपि समुज्जीवयति च।
कवीनां जिह्वाग्रे स्फुरति तदिदं किञ्चिदमृतम्,
यदिन्दौ वा सिन्धावमृतमिति तन्नूनमनृतम् ॥ २ ॥

सुरारीणां वारुण्यमृतममराणां हिमरुचि-
र्द्विरेफाणां पौष्पं मधुच हुतशेषः क्रतुमताम्।
पिपासाक्षामाणामुदकमपवर्गश्च यतिनाम्,
सचित्तानान्त्वेकं परमममृतं सत्कविवचः ॥ ३ ॥

नोवीरैरसिपाणिभि र्न करुणाशीलै र्न दानव्रतै-
र्नो वा धर्मधनै र्न तर्कनिपुणैर्जय्यं जगन्मण्डलम्।
सूक्ति र्युक्तिमती लसन्नवरसा कान्तेव तु प्रेयसी,
वक्त्रं चुम्बति यस्य तेन कविना मन्ये त्रिलोकी जिता ॥४॥

श्री महेशचन्द्र शर्म्मणः।

## संस्कृतभाषा ।

( पूर्वतो ऽनुवृत्ता )

भारतवर्षवासिभिस्तु संस्कृतशिक्षा अवश्यकर्त्तव्या । भारतवर्षेहि यावत्यो भाषाः सन्ति, तावत्यः सर्वा एव संस्कृतादुत्पन्नाः, संस्कृतसदृश्यः, संस्कृतगन्धयो वेति संस्कृतमूलकाः । संस्कृतञ्च भारतवर्षस्य साधारणीभाषा, इत्यतः संस्कृतमेव भारतीत्युच्यते। तथाच "ब्राह्मी तु भारतीभाषा गीर्वाग् वाणी सरस्वती" त्यमरः। भारतस्येयमित्यण्प्रत्ययान्तभारतशब्दात् स्त्रीत्वात् ङीष् । भारतवर्षभुक्तौ याः प्राकृतभाषाः सन्ति तासां सर्वासामेव मूलं संस्कृतभाषा अतएव भारतवर्षभुक्ततत्तद्देशवासिभिः स्वस्वमातृभाषासंशोधनाय संस्कृतमवश्यशिक्षणीयम् । संस्कृतज्ञा हि संस्कृतस्येव तत्तद्देशभाषाणामपि गुणदोषान् सूक्ष्माणुसूक्ष्मान्नियमांश्च जानन्ति संस्कृताध्ययनं विना प्राकृतभाषाणामपि निखिलान् गुणदोषान् कृत्स्नान्नियमांश्च सम्यक् ज्ञातुं कोऽपि न शक्नोति । अतः प्राकृतानां प्राकृतभाषासु विविधा दोषा दृश्यन्ते । भाषादोषान् संशोधयितुं भद्रवंश्यै रवश्यं संस्कृतं किञ्चिदध्येतव्यम् । अन्यथा भद्राणां मुखे अशुद्धां भाषां श्रुत्वा पण्डिता उपहसन्ति तांश्च असभ्यान्मन्यन्ते ।

उच्चारणशुद्धिरपि संस्कृतमविदुषां भद्राणामपि प्रायेण न जायते, वहवो भद्राः कर्म्मेति वक्तव्ये कम्मेति, अग्रहायणेति वक्तव्ये अघ्रान् इति, गौरवेति वक्तव्ये गैरवेति ब्रुवन्ति । दीर्घान् वर्णान् ह्रस्वान्, ह्रस्वांश्च दीर्घानुच्चारयन्ति, किंबहुना, अकुतोभयमिति वक्तव्ये, अकुतो साहसमिति उक्त्वा पण्डितानामुपहसनीया भवन्ति तदवश्यं भद्रैः संस्कृतमध्येतव्यम् ।

अपि च धर्म्मो यथा ऐकमत्यस्थापनस्य उपाय स्तथा भाषापि ऐकमत्यस्थापनस्योपायइति यदि सर्वै र्भद्रैः संस्कृतमधीयेत तदा एकभाषा सूत्रेण वयं सर्वएव भारतवासिनो निबद्धा भवेम । इत्थं यदि

भारतवर्षे समस्तमेव ऐकमत्येन निबद्धं भवेत् तदा कियानानन्दो ऽनुभूयेतेति वितर्क्यतां सहृदयै रित्यलं विस्तरणेतिशम् ।

श्रीमहेशचन्द्र शर्मा ।

दिनाजपुरम् ।

---

## अस्माकं शास्त्रार्थः ।

शास्त्रार्थशब्देन किमुच्यत इति कस्य खल्वविदितम् । सभायां समवेतेषु संस्कृतज्ञेषु कैश्चित् पूर्वम्, अपरैरुत्तरम् अन्यैर्मध्यस्थ्यम्, इतरैश्च श्रोतृत्वमवलम्ब्य आर्यशास्त्रविषये यदालोच्यते स एव 'शास्त्रार्थो' नामेति वदन्ति । यया रीत्या तु साम्प्रतं तैस्तदनुष्ठीयते तेन तद् वस्तुतस्तदभिधेयमर्हति न वेति महान् सन्देहः ।

शास्त्रार्थो नाम न खल्वहन्तुवैनिःसारैर्वचनप्रपञ्चैः प्रतिपक्षस्य हृदय विदारणम्, न च सिंहनादमपि तिरस्कुर्वाणैः कण्ठध्वनिभिर्दिगन्तरालवाचालनम्, महाकाशोदरप्रपूरणम्, श्रोतृश्रवणविवरप्रस्फोटनं वा । अथेदृश एव स भवेत्, तर्हि किमिति शास्त्रविद एव तत्राधिक्रियन्ते, किमपराद्धं प्राकृतैः यत्र नानुसर्त्तव्यं शास्त्रम्, न कर्त्तव्यो विनयः, न रक्षितव्या महतां मर्यादा; न स्मरणीयं शीलम्, न द्रष्टव्यो धर्मः, न चापेक्षणीयो न्यायः अपि तु प्रकाश्यो दम्भः उच्चार्यो दुर्वादः, कर्त्तव्यः क्रोधः सेव्यो दुराग्रहः, प्रच्छाद्यं सत्यं तिरस्कार्यं तत्त्वम् वक्तव्यं स्वेच्छामनुसृत्य न तु शास्त्रम् निर्णेयो वादिविजयो न तु शास्त्रसिद्धान्तः, स्थापनीयं च यथाकथञ्चित् स्वोक्तम् न तु शास्त्रोक्तम् ।

प्रियाः पाठकाः, कोऽपर उपालभ्यताम्, भाग्यवैभवमेवास्माक मीदृशम्; अन्यथा येषां हि प्रत्यक्षरमेव धर्मस्य रक्षणमरक्षणं वा सम्भवति, यान् खल्ववलम्ब्याद्यापि कथञ्चिद् सनाथोऽयं भगवान् धर्म इति शक्यते कथयितुम्, कथं हन्त त एवेह दुर्निबन्धमात्र प्रणोदिताः सभामण्डपेषु प्रागुक्तेन प्रकारेण शास्त्रार्थकरणकैतवेन वस्तुतोऽशास्त्रार्थकरण

एव प्रवर्त्तन्ते । इमेऽपि चेत् तामेवासज्जनोचितां पद्धतिमाश्रयेरन्, तर्हि महाकवेर्वचनेन वक्तव्य मस्माभिः—

"त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत् स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः"।

को वैतादृशात् शास्त्रार्थादमीषां लाभो जायत इति न विद्मः। स्वप्रतिभाविष्करणमुखेन यशोध्वजाधिगम एव स इति चेदभिप्रेयते, तर्हि अत्रापि तावत् पृच्छामः—किमङ्ग प्रतिभामाविष्कृत्य यशोऽधिगमस्य नान्यः कश्चिद् विशुद्धः पन्थाः पृथुलायामस्यां पृथिव्यामुपलब्धः, येन हन्ताधर्म्योऽपि स सेवनीयः स्यादिति ? कीदृशं किंयद्वा तस्माद् यशोऽधिगम्यत इत्यपि विविच्य द्रष्टव्यम् । कथयन्तु भवन्तः, कः स मनीषी "शास्त्रार्थ"-कारी यः खलु कश्चिद् ग्रन्थादिकार इव बहु पूर्वं मृतोऽपि साम्प्रतं केवलं तद्यशोऽनुसन्धानेन केनचिदपि स्मर्य्यंत इति । तदिदं प्रार्थयामहे—यदि वस्तुत एव केवलं कीर्त्तिपताकायै "शास्त्रार्थस्य" करणीयता, तर्हि त्यज्यतां स दुरोदर्कं प्रकारः, मवलम्ब्यतां च कश्चित्तदनुरूपोऽपर उपायः । अन्यथा कीर्त्तिलाभाद् वरं तस्मादकीर्त्तिरेवोपाज्यत इत्यन्यानपि तावत् शिक्षितसम्प्रदायान् अनुयुज्य ज्ञायताम् ।

अथवा कोन्विदं नो विनयवचनमाकर्णयतु । नायं पूर्वैः क्षुण्णः पन्थाः परित्यक्तुं शक्यते । निधीयतां दृष्टिः प्राचीनेष्वपि ग्रन्थेषु, तेषामप्यनवद्यानि पृष्ठानि एतादृशस्यैव "शास्त्रार्थ" नामप्रसिद्धस्य अशास्त्रार्थस्य प्रकाशनसमर्थैर्वचनकलापैर्मालिन्योपहतानि संवृत्तानि। श्रीमच्छङ्कराचार्यभगवत्पादैः श्रीमण्डनमिश्रस्य प्रसिद्धः शास्त्रार्थः कथमिव सम्पन्न इति श्रीमाधवाचार्येण शङ्करदिग्विजये वर्णितम् । तत्र वादिप्रतिवादिभ्यामन्योन्यं कथं सम्भाषणं कृतमित्यपि ज्ञातुं शक्यते। तदिह तत एव किञ्चिदुद्धृत्य प्रदर्श्यते—

मण्डनः—स्थितोऽसि योषितां गर्भे ताभिरेव विवर्द्धितः ।
अहो कृतघ्नता "मूर्ख", कथं ता एव निन्दसि ॥

शङ्करः—

यासां स्तन्यं त्वया पीतम्, यासां यातोऽसि योनितः ।
तासु "मूर्खतम" स्त्रीषु पशुवद् रमसे कथम् ॥ इति ॥

८।२४-२५

श्रीशङ्करमण्डनाविव विद्वद्वरेण्यावन्योन्यसंवादे मूर्खमूर्खतमादीनि पदानि प्रयुक्तवन्ताविति न तावदस्मच्चित्तं प्रत्येतुमिच्छति । न च तेषामिव पण्डितप्रकाण्डानामीदृशो जघन्यतमः शास्त्रार्थप्रकारः कल्पयितुमपि शक्यते । सकलशास्त्राधिकारिणा दृष्टलोकमर्यादेन माधवाचार्येणेव च पण्डितेन कथमयं तत्रभवतां शङ्कराचार्यभगवत्पादादीनां वस्तुतोऽपकर्षप्रकाशकः तादृशदुर्वादकलङ्कितः 'शास्त्रार्थो' निबद्ध इति न ज्ञायते । एतेन स्पष्टमेव प्रकाशेत यदस्य साम्प्रतिकस्य शास्त्रार्थस्य माधवाचार्यादीनां समयेऽपि पूर्णैव मात्रासीदिति ।

शास्त्रार्थे करणीये भगवन्तः श्रीशङ्कराचार्यभगवत्पादाः मण्डनमिश्रमिव प्रतिवादिनं न जातु 'मूर्खतम' इति सम्भाषेतेति पूर्वमुक्तम्; परन्तु महदिदमस्माकं हृदयं दुनोति यत् तेषामपि ग्रन्थेषु क्वचित् कचिदपि प्रतिपक्षेषु दुर्विषहान्युपलम्भवचनान्यधिगम्यन्त इति । वेदान्तदर्शने शारीरके भाष्ये बौद्धान् प्रत्युक्तम्—

"निरङ्कुशत्वात् ते तुण्डस्यैवं ब्रवीषि, नतु युक्त्युपेतं ब्रवीषि" । इति । २ अ० २ पा ।

एवं बृहदारण्यकोपनिषद्भाष्ये तार्किकान् प्रति—

"अहो अनुमानकौशलं दर्शितमपुच्छशृङ्गैस्तार्किकबलीवर्दैरिति" ॥ इति २अ० १ ब्राह्मणम् ।

श्रीमन्तः शङ्करभगवत्पादाः केन नामास्मासु शिरसा नार्च्यन्ते, कः खल्वकामेनापि तेषामद्भुततरमतिमहच्च शास्त्रवैशारद्यं न स्वीकुर्यात्, परन्तु यत्तदस्तु, स्वग्रन्थेषु तादृशानां दुर्वचनानामुपनिबन्धनेन युक्तमेव तैः कृतमिति न जातु वयं कथयितुं प्रभवामः । दौर्भा-

ग्यमेवेदमस्माकं यत्तेषामपि ग्रन्थेष्विदं द्रष्टव्यं भवतीति । अन्येष ग्रन्थकर्ता नु कथैव नास्ति । न वयं तदुदाहरणेन सन्दर्भस्य शरीर वृद्धिमिच्छामः । यदि दुर्वादैरेव प्रतिपक्षा विजेतव्याः, तर्हि शास्त्रेभ्यो, युक्तिभ्यस्तर्केभ्यश्च किमिति निवापाञ्जलयो न प्रदीयन्ते ? न च युक्तितर्का अपि दुर्वादसाराः स्युरिति केनापि मुनिना भाषितम् ।

अस्मदधन्यतया ब्राह्मणग्रन्थेष्वपि वर्त्तमानस्य शास्त्रार्थप्रकारस्य दोषकलङ्कस्पर्शो दृश्यत इव । तदिदं वक्ष्यमाणाख्यायिकातो विज्ञायेत । बृहदारण्यकोपनिषदि ३अ० १,१० ब्रा०—

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव—(१)कः स्विदेषां ब्राह्मणानामनूचानतम इति (२) । स ह गवां सहस्रमवरुरोध; दश दश (३) पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ।"

"तान् होवाच (जनकः)—'ब्राह्मणा भगवन्तः, यो वो ब्रह्मिष्ठः स एता गा उदजताम् (उत्कालयतु स्वं गृहं प्रति नयतु) इति"।

इदमाकर्ण्य न तावत् कश्चिद् ब्राह्मणेषु आत्मनो ब्रह्मिष्ठतां प्रख्यापयितुं शशाक । अथ तेषु तथाभूतेषु अप्रगल्भभूतेषु तिष्ठत्सु याज्ञवल्क्यः स्वान्तेवासिनं ता गाः स्वगृहं नेतुमकथयत्, तेन चात्मनो ब्रह्मिष्ठत्वं प्रख्यापितवान् । याज्ञवल्क्यस्य तेन कृत्येन सर्वे ब्राह्मणाः चुक्रुधुः । अथ तेषु जनकस्य होता आश्वलः त्वं नु खलु नो याज्ञवल्क्य, ब्रह्मिष्ठोऽसीति कथयित्वा तेन सह विवदितुमारभत पर्याजीयत च । इत्थमेव आर्त्तभागादिभिरपरैरपि कैश्चित् शास्त्रार्थे विजयमधिगम्य शाकल्यनामकेन केनापि पुनः पुनरनुयुक्तः प्रत्युत्तरयन् कोपमापन्नो याज्ञवल्क्यः तमपृच्छत्—

"तं त्वौपनिषदं पुरुषं पृच्छामि, तं चेन्मे न विवक्ष्यसि (कथयिष्य-

---

(१) 'कः स्वित्'—को नु खलु । (२) अनूचानः—साङ्गवेदविचक्षणः । (३) सुवर्णस्य पलचतुर्थभागः पादः । पञ्च पञ्च सुवर्णपादा एकैकस्मिन् शृङ्गे बद्धाः

सि ), मूर्द्धा ते विपतिष्यतीति" । "तं ह न मेने ( विज्ञातवान् ) शाकल्यः तस्य ह मूर्द्धा विपपात" । सम्पूर्णः शाकल्यस्य शास्त्रार्थः । तत्प्रभावात् प्राणैरपि स तपस्वी वियुक्तः ।

साम्प्रतिके शास्त्रार्थे कालवैभवाद्वा, राजशासनमाहात्म्याद्वा प्राणवियोगं विना सर्वमेवान्यदस्तीति केन न दृश्यते ।

यदि कश्चिदीदृशं शास्त्रार्थं स्वप्रतिभया विरचयितुमशक्तः स्यात्, तर्हि अवश्यं तदुपायं स बोधनीय इति कोऽपि महाजनो गुरुश्रममङ्गीकृत्य तमुपनिबद्धवान् । उक्तं तेन—

"ततः संरम्भसम्भारगम्भीरारम्भनिर्भराम् ।
विपक्षं क्षिप्रमाक्षिप्य वाचमुच्चारयेदिमाम् ॥
यन्मया सह दुर्बुद्धे, वाग्युद्धं कर्त्तुमिच्छसि ।
तत्पङ्गुःश्रृङ्गमुत्तुङ्गं मेरोरारोढुमिच्छसि ॥
सुप्तसिंहसटाकृष्टिमष्टापदपदच्छिदाम् ।
व्याघ्राय शीघ्रमाघ्रातुं शशकः सत्यमीहसे ॥
शुकशावः शशादस्य चञ्चुं चुम्बितुमिच्छसि ।
सर्पं सदर्पमङ्घ्रिभ्यां निष्पेष्टुं दुष्ट वाञ्छसि ॥

* * * * * *

त्वया दुर्वचनैरद्य दुर्वासाः परिकोपितः ।
कालिका दंष्ट्रया कण्डूरपनेतुमिहेष्यते ॥
सुखसुप्तस्त्वया सिंहः पादाघातेन बोधितः ।
यदहं वादवचनाटोपेन परिकोपितः ॥
लक्षणे मम दक्षत्वं, साहित्ये संहता मतिः ।
तर्के कर्कशतातपर्य्यं, क्व शास्त्रे नास्ति मे श्रमः ॥
इत्थं सुव्यथकैर्वाक्यैरस्य दर्पाङ्कुरमुद्धरेत् ।
अर्द्धं च शमयेद् वादी युक्तियुक्तैर्वचःक्रमैः ॥ इति ॥

कविकल्पलता, वादितर्जनम् ।

इतोऽपि किञ्चिद् गुरुभिः शिष्येभ्यः शिक्षणीयं सम्भाव्यते । ईद-

शमेव शास्त्रार्थं वर्णयितुं दूयमानहृदयेन केनचित् महात्मना गीतोऽयं श्लोकः—

" व्यासादीन् कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हस-
न्नुच्चैर्जल्प निमील्य लोचनयुगं, श्लोकान् सगर्वं पठ ।
काव्यं धिक् कुरु यत्परैर्विरचितं, स्पर्द्धस्व सार्द्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ इति ॥

श्रीमता नीलकण्ठदीक्षितेन चैतद्विषये सुष्ठु खल्वात्मनोऽभिप्रायः प्रकाशितः—" नभेतव्यं न बोद्धव्यं न श्राव्यं वादिनोवचः ।

झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥
असंभ्रमो विलज्जत्वमवज्ञा प्रतिवादिनि ।
हासो राज्ञस्तवश्चेति पञ्चैते जयहेतवः ॥
उच्चैरुद्घोष्य जेतव्यं मध्यस्थश्चेदपण्डितः ।
पण्डितो यदि तत्रैव पक्षपातोऽधिरोप्यताम् ॥
लाभो हेतुर्धनं साध्यं, दृष्टान्तस्तु पुरोहितः ।
आत्मोत्कर्षो निगमनमनुमानेष्वयं विधिः ॥
अलभ्यं लप्स्यमानेन, तत्त्वजिज्ञासुना चिरम् ।
जिगीषुणा ह्रियं त्यक्त्वा कार्यः कोलाहलो महान्" ॥इति॥

कलिविडम्बनम्. १—५ श्लो०

अतः परं नास्माकं किमपि वक्तव्यमवशिष्यते । एतादृशेन शास्त्रार्थेन कियान् कश्चोपकारोऽपकारो वा सम्भाव्यत इति भवन्त एव विचारयन्तु भोः पाठकमहाशयाः; कुर्वन्तु च यत् खलु तत्रभवद्भ्यो रोचते । इदन्तु सविनयं सविस्रम्भं सनिर्बन्धं च प्रार्थयामहे यत् तथा कृपया कर्त्तव्यं श्रीमद्भिः, यथा संस्कृतविदुषां न कश्चित् तद्विषयकः कलङ्काङ्कुरोऽस्माकं श्रवोरन्ध्रं प्रविशेदिति । अतितमां खल्वनेन वयं दूयामह इति शिवम् ॥

विधुशेखर शर्म्मा ।

———o———

# नीतितत्त्वम् ।

( ETHICS )

प्रायेण खल्वस्मद्देशे नीतितत्त्वस्यानुशीलनं न दृश्यते । पाश्चात्यैस्तु साम्प्रतमिदं सविशेषमालोच्यते । किं बहुना विज्ञानेष्वेवेदमत्युत्तमत्वेन तैः परिगृहीतम् । तत्र किमिदं "नीतितत्त्वम्" नामेति संक्षेपेण किञ्चिदिह तत्परिचयः प्रदीयते ।

'इदमुत्तमम्', 'इदमुत्कृष्टम्' इति किमुच्यत इति बुध्यत एवास्माभिः;—यदिष्टं तदेव तत्; यस्मादनिष्टं जायते, न जातु तदुत्तमं भवतीति । 'स्वास्थ्यमुत्तमम्', 'अस्वास्थ्यमधमम्', 'धनं सत्', 'दारिद्र्यमसद्' इति इष्टानिष्टपदार्थेषु अस्माभिर्व्यवह्रियते । परन्तु कथमेकमुत्तमम्, कथं चान्यदधममिति न सम्यग् विविच्यते । उत्तमत्वम् अधमत्वं चेदमापेक्षिकं भवतीति पश्यामः; यथा—अनयोरिदम् 'उत्तमतरम्', एषु 'इदमुत्तमतमम्' इत्यादि । भवति चेत्थं किञ्चिन्निरपेक्षमपि उत्तमम्, अधमं वा । यथा मुक्तिवादिनां मुक्तिर्निरपेक्षोत्तमा । अतो निरपेक्षापेक्षिकयोः उत्तमाधमत्वयोः ( Relative and absolute good ) कश्चिद् भेदोऽस्तीति स्फुटम् । तत्र यदापेक्षिकम् उत्तमम् अधमं वोच्यते, वस्तुत एव तत्तथा भवेन्नवेति न ज्ञायते । तद्धि कदाचित् कस्यापि प्रयोजनस्य सिद्धये भवतीति हि उत्तमं विविच्यते, न त्वन्यथा । स्वास्थ्येन वयं स्वकर्मसाधनाय प्रभवाम इति हि 'स्वास्थ्यमुत्तमम्' इति ब्रूमः । निरपेक्षोत्तमं (absolute good) वस्तु तु नेदृशम्, तद्धि स्वयमेव तथा ।

यद्युच्यते सर्वमप्युत्तममापेक्षिकमेव, न तु किञ्चिन्निरपेक्षमप्यस्तीति, तर्हि कोऽपि भ्रम आपतेत् । तथाहि—'इदमापेक्षिकमुत्तमम्' इत्युक्ते किमपेक्षया तदुत्तममित्यवश्यं वक्तव्यं भवेत्; एवं तस्यापि तस्यापीति पारिशेष्यान् निरपेक्षस्य कस्याप्यनङ्गीकारे अनवस्थापातः । ततश्च निरपेक्षस्य कस्याप्युत्तमत्वस्यास्वीकारे आपेक्षिकोत्तमत्वमपि न सिध्यतीति निश्चयः । अथ किं तन्निरपेक्षमुत्तम-

मिति निर्णेतुं पाश्चात्यैर्बहून् कालान् प्रयत्यते । तेषां प्रयत्नस्य संक्षिप्तमितिवृत्तं श्रीमतां पण्डितानां प्रीतिप्रदमेव भवेदिति सम्भावयामः।

निरपेक्षोत्तममेकमेव, न तु द्वितीयम् । सर्वेषामपि मानवानां प्रयत्नस्य इच्छायाश्च स एव विषय इति व्यक्तिविशेषाणामिव व्यक्तिसामान्यानामपि तदुत्तमम् । तत्र सामान्यविशेषकृतः कोऽपि भेदो नास्ति ।

पाश्चात्यैर्दार्शनिकैरस्य खलु निरपेक्षोत्तमत्वस्य कीदृशं तत्त्वमाविष्कृतमिति लिख्यते ।

सामान्यतो दार्शनिकानां मतानि त्रेधा विभक्तुं शक्यन्ते । १ प्रथमं मतम्—सुखमेव निरपेक्षोत्तमम् ( Hedonism ); २ द्वितीयम्—स्वाभाविकेनैव ज्ञानेन नीतिनियमो ज्ञातुं शक्यते, तेन च यद्यथा, अवश्यं तत्तथानुष्ठेयम्; तदनुष्ठानमेव च निरपेक्षोत्तमम्; यथा—दुःखमुत्पद्यते चेदुत्पद्यताम्, तदवश्यं सहनीयमिति ( Rigorism ); ३ तृतीयम्—यत्प्रवृत्त्या प्रार्थ्यते, यच्च परमार्थज्ञानेन निवेद्यते, एतयोर्द्वयोः सामञ्जस्यविधानमेव निरपेक्षोत्तममिति, ( Eudæmonism ) ।

समासतः प्रागुक्तं मतत्रयमेव पाश्चात्यपण्डितेषु दृश्यते । एतदवान्तरभेदा अपि बहवः सन्ति । 'स्वसुखमेव सुखमिति केचित् ( egoistic Hedonism ); परसुखमेव सुखमित्यपरे, ( Altruistic Hedonism ) एवमन्येऽप्यन्यदेव वदन्ति । क्रमेण तत्सर्वं प्रकाशयिष्यते।

आलोच्यमानोऽयं विषयः ( Ethics ) 'नीतिविज्ञान'मिति (Ethics Science) गीयते । परन्तु विज्ञानादस्य भेदोऽस्ति । "Ethics" ( नीतितत्त्वम् ) इत्यस्य न तथा कश्चिद् विरोधोऽस्ति; परन्तु क इव स भवितुमर्हतीत्येव कथञ्चिद् विषयत्वेन स्वीक्रियते । औचित्येन खलु यत्र सर्वं विचार्य्यते, तत्र अपरापरविज्ञानेष्विव सर्वमेव श्रवणनयनगोचरमानीयेत इति न सम्भाव्यम् । अतोऽस्य विषयस्य नीतिविज्ञानम् इत्यस्मात् "नीतितत्त्वम्" "नीतिदर्शनम्" वा ( Ethics Philosophy ) इत्येव नामधेयं युक्तम् ।

अत्रेदं वक्तुं युज्यते 'बेन्थम्' ( Bentham ) प्रभृतिभिः पण्डितैः नीतितत्त्वे किमनुसन्धेयमिति विस्मृतम्; ते कथयन्ति "औचित्य-मिति" यत्किञ्चिदस्ति, नीतितत्त्वात् तदपाक्रियतामिति। इत्थं सति नीतितत्त्वम् किमवलम्ब्य तिष्ठतु? यदि सुखमेव जीवनस्य प्रयोजनं स्यात्, तर्हि सर्वे सुखं कामयन्त इति नीतितत्त्वेन न निर्णेतव्यम्, अपितु सुखं प्राप्तुमुचितम् इत्येतावदेव।

इदं च द्रष्टव्यम्—नीतितत्त्ववत् मनोविज्ञानेनापि (Psychology) मानवानां कर्त्तव्यमुपदिश्यते तत्र कस्तावदेतयोः सम्बन्ध इति। हृद-यस्य, बुद्धिवृत्तेः, इच्छाशक्त्यादेश्च नैकविधैर्दुर्विगाहै स्तत्त्वैः परिपू-र्यद्भिः पाश्चात्त्यैः पण्डितैर्विज्ञानमिदं जनानां पुरत उपस्थापितम्। नीतितत्त्वस्य मनोविज्ञानाद् भेदोऽस्ति,—मनसि किं कथं वास्ति नास्तीत्येतावन्मात्रं मनोविज्ञानेन निर्णीयते, नीतिविज्ञानन्तु तत्कृतं निर्णयमेवावलम्ब्य स्वविषये प्रसरति। सत्यमिदं यन्मनोविज्ञानं विना नीतितत्त्वम् पदमपि गन्तुं न शक्नोतीति। किं नाम मानवस्योत्तम-मिति ज्ञातव्ये प्रथमं हि मानवस्य मन एव किमित्यवश्यं ज्ञेयं भवति। मनसश्च ज्ञातव्यत्वे तदीयाः प्रवृत्तयो ज्ञातव्या भवन्ति। प्रवृत्तिज्ञा-नानन्तरं च तदनुसरणेन 'इदमुत्तमम्, 'इदमधममिति' नीतिविज्ञानेन निरूप्यम्।

आगामिसंख्यायां मनोविज्ञानविषये किञ्चिन्मया कथनीयम्। तत्र प्रवृत्तिसम्बन्धानि पञ्चषाण्यपेक्षितानि वाक्यान्यालोच्य नीतितत्त्वा-लोचनायां विशेषतः प्रवर्त्स्यते। तावन्तं कालं भवतां किञ्चिद् धैर्य्यं प्रार्थयामहे। गम्भीरोऽयं हि विषय इति।

श्रीअजितकुमार चक्रवर्त्ती, बि, ए,
आंग्लोसाहित्याध्यापकः,
ब्रह्मचर्याश्रमः, ( बोलपुर )।

——:o:——

# श्री प्रभावतीदेव्या लेखः।

श्रीमन् सम्पादकमहाशय, अहमस्मि काचिदन्तःपुरिका। नगरतो दूरवर्तिन्यां कस्याञ्चित् पल्ल्यामस्माकं निवासः;—यत्र नाद्यापि नागरिकभावो जनानां चेतःसु सम्यक् स्फुरणावकाशमलभत। अतो मादृश्याः कुलीनाङ्गनायाः वृत्तान्तपत्रिकासु किञ्चिल्लिखनं नाम अतितमां साहसमिति न खलु नाहमपि विजानामि; तथाप्यद्य कारणगौरवादिह प्रवृत्तास्मि। मन्ये नेदं जातु श्रीमतामुद्वेगजनकं भवेत्। तपस्विनीषु स्त्रीषु अस्ति खलु तत्रभवतां कश्चित् पक्षपात इति भवत्सम्पादितां पत्रिकां गृहकोणावस्थानेन पठन्त्या मया नाविदितम्। अन्यच्च कन्यकानां विषये किञ्चिदद्य मया कथनीयम्। तत्र च पाषाणकर्कशहृदयानां वः पुरुषाणामेकान्तेनैव अनुत्साहमालोक्य श्रीमतां करुणाकणां कामयमानैः स्त्रीजनैरस्माभिः अगतिकगतित्वेन यावच्छक्यं स्वयमेव किञ्चिदनुक्ता किं नामापरं क्रियतामिति भवन्त एव विचारयन्तु।

सम्पादकमहाशय, यूयं खलु पुरुषा अस्माकमाश्रयाः, स्त्रियो वयमाश्रिताः यूयमुपजीव्याः, वयमुपजीविन्यः, किं बहुना सर्वथा युष्माकमेव करतलायत्तमस्माकं जीवनमपि। तथा सति यदेते यूयमस्मासु अनुचितमाचरथ;—अवज्ञानदृष्ट्यास्मान् पश्यथ, अकथनीयमपि च कथयथ, तत् किमेतद् धर्मस्य वा, शिक्षाया वा विद्याया ज्ञानस्य वा, सभ्यत्वस्य वा विलसितमिति न ज्ञायते।

सम्पादकमहाशय, किमस्माभिः स्त्रीभिः पुरुषाणां वो वदनविवरादोदनकवलम् आच्छिद्य गृह्यते, आहोस्वित् पाकोन्मुखानां शालीकलमानां क्षेत्रेषु पुनरप्यकाण्डे हलसञ्चारः क्रियते; यद् हन्त आश्रिता अपि वयं युष्माकं दहनदृष्टौ निपतिताः। जीवानां पुरुषत्वेन स्त्रीत्वेन वा जन्मग्रहणं नाम न जातु तदायत्तम्, कर्म वा ईश्वरो वात्र प्रभवति। एवञ्च कोऽयमस्माकमपराधो येन अपत्यत्वे समानेऽपि तनय

त्र पितुः स्नेहसम्भारमधिकरोति, न तु कन्यका । पुत्रजन्मनि पितुर्हर्षातिशयः शरीरेऽपि न मीयते, कन्योत्पत्तौ तु वज्रेणेव मस्तकं पीड्यमानं भवति, दिशः शून्याः प्रतिभान्ति, जगच्च सर्वं विषादपरिपूरितमिव दृश्यते । पृथिव्यपि कन्यकाया भारेण सार्द्धत्रिहस्तमधो गच्छतीति वदन्ति । किमुच्यते कन्यकाया मृत्युरपि पितुर्हर्षायैव सम्पद्यत इत्यपि पश्यामः । अहो कष्टं, गृहपालितस्य कस्यचिद् विहङ्गस्यापि मरणेन गृहाधिपतेः कातर्य्यं दृश्यते, न तु कन्यकानाम् । तिर्य्यग्भ्योऽपि कन्यकाया जीवनमतिहेयम् !

सम्पादकमहाशय, अस्मान् प्रति पुरुषाणां यदतितमां विद्वेषोऽस्ति न तत्प्रमाणाभावः । शास्त्रमिदं सर्वं तेषामेव वशंवदम् । यस्य कस्याप्येकस्य तद्ग्रन्थस्य यत् किमप्येकं पत्रमुद्घाट्य दृश्यताम्, तत्रैवास्माकं हृदयमर्म्मभेदिनो निन्दावादा उपलभ्येरन् । आवेदमासाहित्यं सर्वत्रैवास्माकं निगदनम् ! क्षणं नेत्रमुन्मील्य दृश्यताम्—ऐतरेयब्राह्मणे महता प्रबन्धेन पुत्राणां गुणराशिमुपवर्ण्य व्यर्थमेवास्माकं कन्यकानां हृदये सपदि निशितं शूलं प्रवेशितम् । तद्यथा—महर्षिर्नारदो हरिश्चन्द्रेण "किंस्वित् पुत्रेण विन्दत" इत्याद्येकया गाथया पृष्टो दशभिर्गाथाभिः पुत्रगुणान् कथयन् अकाण्डे अवोचत्—

"अन्नं ह प्राणः, शरणं ह वासो, रूपं हिरण्यं पशवो विवाहाः ।
सखा ह जाया, कृपणं ह दुहिता ज्योतिर्ह पुत्रो परमे व्योमन्"॥*

दृष्टं सम्पादकमहाशय, "कृपणं ह दुहितेति;"—दुहिता हि केवलं दुःखकारित्वाद् दुःखहेतुर्भवति । इत्थमेव तद्वाक्यस्यार्थ इति श्रीसायणाचार्योऽभिप्रैति । दुहितॄणां दौर्भाग्यं अन्यदपि स्मर्य्यते—

"सम्भवे स्वजनदुःखकारिका, सम्प्रदानसमयेऽर्थहारिका ।
यौवनेऽपि बहुदोषकारिका, दारिका हृदयदारिका पितुः"॥इति॥ †

---

* ऐतरेयब्राह्मणम् तृतीयेऽध्याये प्रथमं खण्डम् ।

† अत्रैव सायणेन धृतोऽयं श्लोकः ।

दुहितॄणां पितृधनाधिकारोऽपहृतो युष्माभिः शास्त्रानुशासनव्याजेन तावतापि श्रीमतां न सन्तोषः । यदस्माभिरन्तरान्तरा पितृसकाशे किञ्चित् प्रार्थ्यते, तत्रापि युष्माकमक्षमा । तदिदमवलम्ब्य उपहसितुमपि यूयं न विरमथ । तेन हि "दुहितृ" पदस्यापि युष्माभिरभिनवोऽर्थः कल्पितः । उक्तं यास्केन—"दुहिता—दुर्हिता—दूरेहिता दोग्धेर्वेति"।* तदिह दोग्धेरिति सूत्रमवलम्ब्य युष्माभि रुच्यते-"स हि ( दुहिता ) नित्यमेव पितुः सकाशात् द्रव्यं दोग्धि, प्रार्थनापरत्वात्," † अतो दुहितेति । अहो ये खलु पितुः सर्वं धनमधिकुर्वन्ति, न ते पितुर्दोग्धारः, परन्तु ता एव तपस्विन्यः, या हि सर्वधनवञ्चिता अन्तरान्तरा द्वित्रं वसनखण्डादिकं प्रार्थयन्ते ।

जन्ममात्र एवास्माकं पिता गुरुणेव भारेण दूयमानो महाननर्थः प्राप्त इति शङ्कमानः यथाकथमप्यस्तु, गेहतोऽस्मान्बहिष्कर्त्तुमिच्छति । तेनैव हि तस्य चेतसः प्रसत्तिः । तथा च जन्मदिनप्रभृत्येव कुत्रैतां नयामीति पिता नः खिद्यते । तेन चास्माकं 'कन्येति' अपरमेकमभिधेयमुत्पन्नम्—‡ "कन्या—क्वेयं नेतव्या भवतीति" युष्माभिरेवेदं निर्वचनं कृतम् ।

अपरोऽपि कश्चिद् युष्मासु कथयति—

जातेति कन्या महती हि चिन्ता
कस्मै प्रदेयेति महान् वितर्कः ।
दत्ता सुखं यास्यति वा नवेति
कन्यापितृत्वं खलु नाम कष्टम् ॥

पार्वतीपरिणयकारेणाप्ययमेव प्रतिध्वनिः कृतः—"कन्यापितृत्वं खलु गृहमेधिनामधिकतरं दुःखमावहतीति" ।

* नि० ३ अ० १ पा० ४ ख० ।

† निरुक्तम् ३ अ० १ पा०, ४ ख, दुर्गाचार्यव्याख्या ।

‡ निरुक्तम् ४ अ० ३पा० ३ ख०—कन्या कमनीया भवति, क्वेयं नेतव्येति वा कननेर्वा स्यात् कान्तिकर्मणः ।

सम्पादकमहाशय, विवाह एवास्माकं सर्वानर्थमूलम् । कन्यकानां मलाभार्थमेव पितरो दूयन्ते । तेनैव चैषामस्मासु वैमनस्यं दृश्यते किन्तु पृच्छामि—किं नु खलु कन्यका ह्येवात्रापराध्यन्ति ? जानीषेयत्र कापि धनिकाय वा, विज्ञाय वा मूढाय वा, सुरूपाय वा कुलीनाय वा अनुमताय वा अननुमताय वा यस्मै कस्मैचिदपि प्रदीयमानापि न जातु युष्माकं कन्यका प्रकाशं किञ्चिदन्यथा ब्रवीति; न सा विवाह-समये इयद्धनं देयमिति निर्बन्धेनापि पितुर्धनमधिकर्त्तुमिच्छति, सा खलु युष्मन्नियोगेन आबाल्यं परिचितानि आत्मीयत्वेनाभिमतानि सर्वाण्यपि वस्तूनि सपदि परिहाय कस्मिंश्चिदचिन्तितपूर्वे प्रदेशे सर्वथापरिचितै रभिनवैर्जनैः चिरंस्थातुमपि गच्छति । किं बहुना यदेव किञ्चिज्जनक इच्छति, तदेव कन्यका करोति । एवमपि न प्रसी-दति वो हृदयमिति सर्वथा दुःखसंवेदनायैवास्माकं जीवनम् । पति-गृहे तावत् सुखं भवेन्नवेति दूरमास्ताम्, हन्त पितृगृहेऽप्यवस्थाने नास्माकं सुखम् । अस्मद्विवाहसम्पादनभारखिन्नानां विषादकवलि-तवदनानां पित्रादीनां चिन्ताजनितां ग्लानिमालोक्य कस्य नाम चेतसि सुखमुदेतु । सम्पादकमहाशय, ईदृश एव युष्माकमस्मासु अनुग्रह-प्रकारः । अथवा अलं विस्तरेणेति शिवम् ।

श्रीमती प्रभावतीदेवी ।

## श्री प्रभावती देव्या लेखे अस्मदभिप्रायः ।

कन्यकानां समाजे कीदृशं स्थानमिति श्रीमत्या प्रभावतीदेव्या खलु स्पष्टमेव लिखितम् । वस्तुत एव तत्तथैव । अन्येद्युः कस्मिं-श्चित् परिवारे अकाण्डे तिस्रः कन्यका मसूरिकया मृताः इमां वार्त्ता-माकर्ण्य कश्चिदस्मद्वयस्येषु विस्मयरसमिवानुभवन् सानन्दमवादीत्—किमुच्यते, एकस्मिन् गृहे तिस्रः कन्यका मृता इति परं भाग्यं तस्य गृहपतेः, अन्यथा क्वापि विवाहात्पूर्वं युगपत् कन्यात्रयं म्रियत इति सत्यं न दृष्टपूर्वं मयेति । इदमत्र वक्तुमुचितं—सोऽयं वयस्यो मे

चतसृणां कन्यकानां जनक इति। दृश्यतेऽपि च प्रायेण मृताय दुहितरि "शान्तं पापं, प्रतिहतममङ्गलम्" इति बुद्धिर्जनानां चेतस्युदेतीति।

कन्यापितृत्वस्य कष्टावहत्वं द्वेधा। प्रथमतः स्नेहसर्वस्वभूताया कन्याया अकाण्डे विच्छेदात्; द्वितीयतस्तु तस्याः पाणिग्राहकसंग्रहस्यासौकर्यात्। तत्र श्रीप्रभावतीदेव्या 'विवाह एवास्माकं सर्वानर्थमूलमिति' वदन्त्या द्वितीयहेतुप्रपञ्चनमुखेन पुरुषा आक्षिप्ताः। प्रथमहेतुविषये तु तया गजनिमीलनं कृतम्। अतस्तत्रास्माभिः किञ्चिद्वक्तव्यम्। येन पुरुषाणामुपरि न्यस्तस्य दोषस्यांशतः क्षालनं भवेत्। अभिज्ञानशकुन्तले शकुन्तलायाः पतिगृहगमनसमये कण्वस्य हृदयवृत्तिः कीदृशी आसीदिति "यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठयेत्यादि" पठितवत्या देव्या प्रभावत्या नाविदितम्। तत्र च—"अर्थो हि कन्या परकीय एवेति" वचनमपि कण्वस्य कन्यकां प्रति नावज्ञां प्रदर्शयति, प्रत्युत तथा खलु संसारस्य स्थितिरिति दुःखमेव द्योतयति। अतएव हर्षचरितेऽपि बाणभट्टेन तत्तथैव वर्णितम्। मनोरमः स ग्रन्थभाग इति पाठकेभ्य उपह्रियते—"कदाचित्तु राजा (हर्षस्यजनकः)......गीयमानामार्यामिमामश्रृणोत्—

उद्वेगमहावर्त्ते पातयति पयोधरोन्नमनकाले।
सरिदिव तटमनुवर्षं विवर्धमाना सुता पितरम्॥

तां च श्रुत्वा पार्श्वस्थितां महादेवीमुत्सारितपरिजनो जगाद—'देवि, तरुणीभूता वत्सा राज्यश्रीः एतदीया गुणवत्तेव क्षणमपि हृदयान्नापयाति मे चिन्ता। यौवनारम्भ एव कन्यकानामिन्धनीभवन्ति पितरः सन्तापानलस्य।............केनापि कृता धर्म्या नाभिमता मे स्थितिरियं—यदङ्गसम्भूतानि, अङ्कलालितानि अपरित्याज्यान्यपत्यानि अकाण्ड एवागत्य असंस्तुतैर्नीयन्ते। एतानि तानि खल्वङ्गनस्थानानि संसारस्य। सर्वाभिभाविनी शोकाग्ने र्दाहशक्तिः—यदप-

त्यत्वे समानेऽपि जातायां दुहितरि दूयन्ते सन्तः। एतदर्थं जन्मकाले एव कन्यकाभ्यः प्रयच्छन्ति सलिलमश्रुभिः साधवः। एतद्भयादकृतदारपरिग्रहाः परिहृतगृहवसतयः शून्यारण्यान्यधिशेरते मुनयः। को नाम सहते विरहमपत्यानामिति" ४ उ०।

अतएव भट्टनारायणेनाप्युक्तम्—

"यास्यति सज्जनहस्तं रमयिष्यति तं भवेच्च निर्दोषा।
उत्पादितयापि कविस्ताम्यति कथया दुहित्रैवेति"॥

मन्यामहे पूर्वोदाहृतवचनदर्शनेन श्रीमती प्रभावतीदेवी निर्विचिकित्समवगच्छेद् यन्न स्वभावतः पुरुषाणां कन्यकाः प्रति हृदयं विद्विष्टम्, प्रत्युतातितमां स्निग्धमेव; कथं नु खलु कन्यकानां सत्परिग्रहीतृलाभेन सुखं भवेदित्येव चिन्तया ते खिद्यन्ते, खिद्यमाना अपि च नानुरूपं पात्रं लभन्त इति हि ते कन्यापितृत्वं कष्टकरमिति वदन्तीति।

श्रीमत्या प्रभावतीदेव्या ऐतरेयब्राह्मणस्य "कृपणं ह दुहितेति," "सम्भवे स्वजनदुःखकारिका, सम्प्रदान समयेऽर्थहारिकेत्यादि" वचनं चोदाहृत्य दैन्यहेतुत्वात् कन्यकानामनादरास्पदत्वमुक्तम्। सर्वथा वयमिदं स्वीकुर्मः। एतदर्थं च यदमी वयं पुरुषा नितान्तं गर्हणीयाः, न तत्र स्तोकोऽपि सन्देहः। स्वयमेव वयं स्वदैन्यमुत्पादयामः। न हि कन्यकाः पुरुषान् शिक्षयन्ति यद् भवद्भिः पाणिग्रहणकृते कन्यापितृसकाशात् सहस्राणि रूप्यकाणि शुल्कत्वेन ग्रहणीयानि। स्वस्वधनिकत्वसाधनार्थं स्वयमेव वयममुमुपायमुद्भावितवन्तः। नात्र स्त्रियोऽपराध्यन्ति। परन्त्वहो कष्टं दुर्विपाकः पुनरस्य तासामपि परा पीडा जनयति। प्रशस्योऽस्माकं प्रज्ञाप्रकर्षो, यतः स्वबुद्ध्यपराधेन दिनाद्दिनं जामातुः शुल्कपरिमाणं वर्द्धयन्तो मूर्त्तामिव स्नेहरसवल्लीं स्वां स्वां कन्यकां दैन्यहेतुं विवेचयामः, तेन च हन्त मृत्युमपि तस्याः श्लाघ्यमेव गणयामः।

सत्यमेवोक्तं बाणभट्टेन—"अपत्यत्वे समानेऽपि जातायां दुहितरि दूयन्ते सन्त" इत्यादीनि। परन्तु तन्मते तत्कारणं विरहशोकाग्निरा-

सीत् । अद्यत्वे तु न विरहभयात् पितरोऽश्रुभिः कन्यकाभ्यः सलि
प्रयच्छन्ति । भिन्नमिदानीं तत्कारणम् । साम्प्रतं हि केवलं जामातृ
शुल्कसंग्रहाक्षमत्वमेव कन्यापितॄणां नयनयोरश्रुधारामुत्पादयति । क
ष्टं भोः कष्टमिदानीं सुशिक्षितस्य जामातुरनुग्रहेण वासगृहमप्युच्छि
द्यते श्वशुरस्य । दिनाह्निं ब्रह्माण्डकटाहसहोदरं जामातृपितुरुदरवि
वरमियता वेगेन वर्धते, येन सर्वं विक्रीयापि कन्याजनकैः तदभि
लषितशुल्कार्थप्रदानेन न तत्पूरयितुं शक्यते । न च तावन्तमर्थं विन
पुत्रजनकः स्वपुत्रं विवाहेऽनुमन्येत । सोऽयं साम्प्रतं शिक्षाया अह
ष्टचरः प्रभावः प्रादुर्भूतः । सर्वे खल्विदानीं शिक्षिताभिमानिनः सं
हत्य देशाभ्युदयार्थं विविधान् प्रयासानातिष्ठन्ति । परं प्रतिदि
स्वयमेवेदमनुतिष्ठन्तोऽपि जानन्तोऽपि चास्य न्यायधर्मविगर्हितत्वं
नैतस्माद् विरमन्तीति धिगेतेषां शिक्षाम् ।

पूर्वं कन्यापितर एव वरेभ्यः शुल्कग्राहिण आसन्, अद्यत्वेऽपि
तिष्ठतामप्येषां संख्या प्रतिदिनमेव क्रमेण ह्रसति । परं तु सोऽयं
शुल्कग्रहोऽद्य बहुगौरवबुद्ध्या पुत्रपितृभिरङ्गीकृतः समुद्रसलिलपूर
इव सिते पक्षे महारंहसा वर्धते इति यत्सत्यं सर्वदा सनाथोऽयं शुल्क-
ग्रहः । अस्य महानर्थकारित्वं पर्यायेण सर्वं एवानुभवन्ति । अनुभूय
च न्यायमर्यादारक्षणायेव अन्तरान्तरा कतिचित् तदपाकरणार्थं व्या-
ख्यानैः सन्दर्भैश्च यत्नमपि मनागारचयन् । अन्ये च किञ्चित्प्रयत्न
फलमनधिगच्छन्तो राजकीयशासनसहायतामैच्छन्नित्यपि दृष्टम् ।
तदिदमालोच्य कस्य नामार्यधर्मश्रद्धालोर्हृदयं न दूयेत । यद्धि अनु-
चितमिति धर्मश्च न्यायश्चैकमत्येन कथयतः, बुद्धिरपि च यत् तथा-
त्वेनैव गृह्णाति, हन्त तस्यैवानुष्ठानार्थमिदानीमस्माकं राजकुलं शरणं
भवेदिति महदिदमद्भुतम् । कथं न्वहो चिन्तनेऽप्यस्य न वयं जिह्रीम
इति को ब्रवीतु । अथवा भारतीयानां सर्वमेव सम्भाव्यते ।

इत्थं चास्माकं समाजस्थितौ कन्यापितृत्वं नाम यदतितमां दुः-
खावहं, कः खलु तत्र स्वीकुर्यात् ? हन्त न जानीमः कदा खल्वमूः

पस्विन्यः कन्यकाः पुत्रैः सह समानमासनमधितिष्ठेयुः, कदा वा
ारतीयानां "कन्यापितृत्वं खलु नाम कष्टम्" इतीदं वचनं केवलं
न्यकानां विरहमूलकमेव भवेत्, न तु विवाहसम्पादनासौकर्यमूल-
मिति ।

समाजस्य नियमनभारः पुराकिलास्माकं धर्मशास्त्रविदां पण्डित-
महोदयानामेवोपरि आसीत् । इदानीमपि च समाजव्यवस्थार्थं तानेव
जना आश्रयन्ति । सम्प्रत्यपि च तेषां प्रभावः समाजस्य सर्वत्रैवानुभूयत
एव—यद्यप्ययं क्रमेण ह्रसति । तद्यदीह सामाजिकानामधर्म्ये अन्याय्ये
ाचारे समाजशीर्षस्थानमद्याप्यधितिष्ठन्तः पण्डितमहाशयाः सर्वे
लु सम्भूय प्रत्यवतिष्ठेरन्, मनागिव च यद्यमी विषयेऽस्मिन् चेतसो
ादरमवलम्बेरन् तर्ह्ययमस्माकं द्रढीयान् विश्वासः—पश्यत एव
वच्छिन्नाभ्रविलायं विलीयेतैव दुरोदर्कः शुल्कग्रहव्याधिः । श्रीमन्तो
ारतीयसंस्कृतविद्वांसः, सर्वथा भवन्त एवास्मिन्नगदङ्काराः । कृत-
न्तोऽपि कालातिपातेन, प्रसीदन्तु, चिन्तयन्तु कृपया भवतामेवेदं
त्यमिति, विरचयन्तु च यथोचितं प्रयत्नमिति सविनयं सबहुमानं
निर्बन्धं च तत्रभवतः स्मारयामः । अन्यथा हन्त, हतो हतोऽयं
पस्वी कन्यकाजनः इति सर्वमवितथमुक्तं श्रीमत्या प्रभावतीदेव्या
ति ।

—:o:—

## भट्टशिवस्वामी ।

औचित्यविचारचर्चादिषु प्राचीननिबन्धेषु शिवस्वामिकृतत्वेनो-
ाहृताः श्लोका अनेके समुपलभ्यन्ते । तत्र कः शिवस्वामी, कुत्रत्यः,
दा बभूव, का चास्य कृतिः इत्यादिकं यथामति किंचिद्विविच्य वि-
ाप्यते मित्रगोष्ठी-पत्रिका-पाठकमहाशयेभ्यः ।

"मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात्साम्राज्ये ऽवन्तिवर्मणः" ॥

इति राजतरङ्गिणी-श्लोकात् ( ५ त ॥ ३४ श्लो ॥ ) अयमवन्तिवर्मणः सभाभूषणमिति ज्ञायते । अवन्तिवर्मा च खिस्ताब्दीयनवमशकोत्तरार्धे ( ८५५-८८५ ) काश्मीरान्पालयामासेति राजतरङ्गिणीपञ्चमतरङ्गादवसीयते । तत्सभाभूषणस्यास्य कवेरपि तावेव देशकालौ ।

अस्य च कृतिः कप्फणाभ्युदय इति महाकाव्यं विंशतिसर्गात्मकम् अस्यादिमः श्लोको यथा—

सर्वज्ञतादिगुणगोचरमाययौ यो
ध्येयो यतोऽपि यतिबन्धुर···बोधिः ।
मानाय निश्चितचतुर्विधवित्तमूर्तिः
मूर्तिर्विशां दिशतु दाशबलिः शिवं नः ॥

दशबलनमस्कारात्मकात् एतन्मङ्गलश्लोकात् ग्रन्थोपसंहारश्लोकेभ्यश्चायं कविर्बौद्धो बुद्धमताचार्यस्य चन्द्रमित्रस्य शिष्य इति स्पष्टं प्रतीयते ।

कोसलाधीशं श्रावस्तीनगरवासिनं प्रसेनजितं जेतुं प्रस्थितः दक्षिणापथाधीशस्य लीलावतीपत्तनवासिनः कप्फणस्य दण्डयात्रा विस्तरेण वर्णिता ।

एकाक्षरश्लोक-बन्धश्लोक-संस्कृतप्राकृतसमावेशादिकं चात्र षष्ठसर्गैकोनविंशसर्गयोस्समीचीनरीत्या निबद्धमिति प्रौढोयं महाकविः अन्तिमे च विंशे सर्गे कप्फणस्य बौद्धसिद्धान्ते आस्था जातेति अभ्युदयलाभ इति अवर्णयत् ।

यथाक्रमं तत्तत्सर्गीयप्रमेयज्ञानार्थं तत्तत्सर्गविषया लिख्यन्ते । यथा—१ नगरीनरेन्द्रवर्णना, २ चारविक्षेपविन्यासः, ३ सभासंक्षोभः ४ राजवाक्यं, ५ दूतीसंप्रेषणम्, ६ पर्वतवर्णना, ७ शिविरसंनिवेशः ८ सर्वर्तुवर्णना, ९ कुसुमावचायः,१० जलक्रीडा, ११ दिनान्तवर्णनम् १२ चन्द्रोदय प्रसाधनम्, १३ मधुपानवर्णनम्, १४ सम्भोगवर्णनम् १५ प्रदोषवर्णनम्, १६ सैन्यप्रस्थानम्, १७ संकुलयुद्धम्, १८ युद्धवर्णनम्, १९ प्राकृतसमावेशः, २० अभ्युदयलाभः ।

कवित्वशैलीपरिज्ञानार्थं कप्फणाभ्युदयात्केचन श्लोका उदाह्रियन्ते—

अपसदसि समस्तायस्तु भूपालचक्रे
प्रकटितगुरुकोपारम्भसंरम्भजृम्भे ।
वहति विलसितानि प्रस्तुतानि प्रचण्ड-
प्रलय-जलद-जालाडम्बरै रम्यरन्धि ॥ १ ॥

इत्थं तास्ताः क्ष्माधरवस्तुस्तुतिगर्भाः
श्रुत्वा श्राव्या विश्रुतविद्याधरवाचः ।
शैलोत्सङ्गश्रीपरिभोगस्पृहयालुः
स प्रास्तावीत्संस्तुतिमाक्रीडविहारम् ॥ २ ॥

अथ वनगहनान्निरीय पृथ्वी-
तलबिलनिर्गतनागनायिकाभाः ।
अभिनवदिनकृत्करालताप-
क्लमवशमन्थरमन्थरं ययुस्ताः ॥ ३ ॥

अथसुदृशां प्रियप्रणयविभ्रमभावनया
समुदियाय शनैः सुरतोत्सवसस्पृहता ।
रविरपि सञ्जहार करडम्बरमम्बरतः
फलमभिवाञ्छितानुपदभावि हि भव्यधियाम् ॥ ४ ॥

संलापयन्त्या दयितस्य दूतीं
वध्वा विभूषां च निवेशयन्त्याः ।
प्रसन्नता कापि मुखस्य जज्ञे
वेषश्रिया नु प्रियवार्तया नु ॥ ५ ॥

अग्रे विकीर्णनिभृतप्रणयादिवाक्य-
पुष्पाञ्जलिः सरलविभ्रमसूत्रधारः ।
प्रस्तावनां दयितसन्धिरसैः समाप्य
सिद्धिं व्यधत्त रमणीरतनाटकस्य ॥ ६ ॥

वदननिहिते तांबूलांशे श्रिते रति बीजतां
कुवलयदृशः प्रत्याजज्ञे सरागतरुस्तदा ।

किसलयरुचो यस्य च्छायामुपाश्रितयोस्तयोः
विषमविषमः कात्स्न्र्ये नास्तङ्गतो विरहक्लमः ॥ ७ ॥

समजनि न तत्प्रेम त्यक्तं यदीषदपीर्ष्यया
स्मरसुखसखी नासावीर्ष्याविना कलहेन या ।
न खलु कलहः सोऽन्योऽन्यं यः प्रसादनवर्जितः
प्रसदनविधिर्नासौबाला नयेन विलिल्यिरे ॥ ८ ॥

गुणमयोऽपि स दोष इव क्वचित्
भवति यत्कमलाकरसारसाः ।
समुदये ऽम्बुमुचामभवञ्जगत्
क्लमनुदामनुदारमनो मुदः ॥ ९ ॥

रसरभसया रागस्थित्यामुहुः प्रियलालसं
चिरपणितयामाना वृन्त्यामुहुः पिहितस्पृहम् ।
मधुमदमुदालेभेलभ्यं न दुर्लभवल्लभो
निधुवनविधि क्रीडालम्बं नितम्बवती जनः ॥ १० ॥

गणरत्नमहोदधिव्याख्यायां 'वामनभोजमुख्याः' इति श्लोकव्याख्याने मुख्यशब्दस्यादिवचनत्वाच्छिवस्वामि-पतञ्जलिकात्यायन-प्रभृतयोलभ्यन्ते इतिवर्धमानः।

धातुवृत्तौ यमधातुव्याख्याने उपायच्छतेकन्यकामिति प्रघट्टके'अत्र वृत्तिकारशिवस्वामिभ्यामिदं भाष्योक्त" इति, 'पाणिग्रहणविशिष्टस्वकरणंशिवस्वामि जयादिति च माधवः।

एवं माधववर्धमानाभ्यां प्रामाणिकत्वेनोदाहृतः शिवस्वामी कप्फणाभ्युदयकर्तुर्भिन्नपकोवेति कालान्तरे विमर्शमर्हति ।

वेंकटरङ्गनाथस्वामी

विशाखपत्तनम् ।( भिजागापटम् )

प्रश्नः ।

साम्प्रतं कीदृशीसंस्कृतशिक्षा अपेक्ष्यते ?

## उत्तरम् ।

शिक्षा हि नाम मानवस्य दैहिकं मानसिकं सामाजिकं च श्रेय ावहति । सा च गीर्वाणवाण्या आपांशुलपादहालिकात् सर्वस्यापि ानस्य वा भवितुमर्हति । तत्र आध्यात्मिकीं शिक्षां विधातुमिच्छुः ्ववाणीमेव प्रायेण शरणं प्रयाति; गौडीयादिषु दर्शनशास्त्र-ग्रन्था- ेनाम् इदानीमपि बहुलप्रचाराभावात् । वाह्यप्रयोजनादिकं सम्पाद्य ात् गौडीयादिनापि कथं कथमपि अभिलषितसिद्धिः स्यादेव । स्तुतस्तु जड़विज्ञानादिषु आधुनिकगणित प्रभृतिषु पुरावृत्तप्रभृतौ ा प्रवेशमिच्छुः सर्वथा आंगलभाषामेव सरणिं कुर्वीत । अशक्तश्चेत् ाड़ीयादिकेनापि समीहितसिद्धि रीषत्करी, संस्कृतेन तु कथमपि ड़विज्ञानादिषु प्रवेशो न भवति । अतएव कस्मै अर्थाय अधुना ंस्कृतं पठ्यते इत्यस्य अनिर्द्धारणे "कीदृशी संस्कृतशिक्षा अपेक्ष- ोया" इत्यस्य किमपि न सम्यगुत्तरं सम्भवति ।

धर्मार्थं पठ्यते चेत् ? वेदादिकं गुरोर्विधिवदध्ययनीयम् । तद- क्षिततया षड़ङ्गानि मीमांसे च पठनीयानि । सूत्रभाष्याद्यात्मक- ााय-वैशेषिक-सांख्य-पातंजलानि च अध्येतव्यानि । नह्यत्र नव्यन्या- स्य तदुद्भावितरीतिमवलम्ब्य निबद्धस्य वा अपरदर्शनस्य काचिद- क्षा वर्त्तते ।

प्रत्नतत्त्वाधिगमाय अध्यवसाय इति चेत् सर्वएव संस्कृतनिबद्ध न्थाः यूरोपप्रदर्शितदिशा अध्येयाः । सा च रीतिः किंस्वरूपा इति श्ने, वदामः प्रथमंतावत् कस्यायं ग्रन्थः ? कोऽस्य प्रणयनकालः ? इतः र्वम् अस्मिन् विषये कानि पुस्तकानि आसन् ? तैः सहास्य कः स- न्धः ? अस्मिन् हि प्रतिपादितो विषयः ग्रन्थकारेण स्वमतिमहिम्ना द्भावितः उत पूर्वतनेभ्यो ग्रन्थेभ्य उद्धृतः । यदि उद्भावितः कियदु- ावितं कियद्वा पूर्वाचार्येभ्यो गृहीतमिति । अत्रोदाहरणत्वेन काव्य-

प्रकाशो गृह्यते कुत्रस्योऽयं मम्मटः ? तत्पूर्वम् के अलङ्कारग्रन्थकारा आसन् ? तेषां ग्रन्थेभ्यः कोऽर्थः किञ्च वाक्यं उद्धृतम् ? दृष्टान्तत्वेन गृहीताश्च श्लोकाः केन प्रणीताः । काव्य प्रकाशस्य साहित्यदर्पणादिना सह कः सम्बन्धः ? इत्यादिकमपि सम्यग् बोद्धव्यम् । केवलं सटीककाव्यप्रकाशार्थावगमे कृतकृत्यता न स्यादेव। काव्यप्रकाशः पाठ्यः तट्टीका अपेक्षिता चेत्पाठ्या । किन्तु एतदेव न पर्य्याप्तम् अलङ्कारस्य इतिहासादिकमपि अलङ्कारशास्त्रपाठस्यान्तर्भवति किमपिशास्त्रं न नित्यम् अपितु सर्वमेव उत्पत्तिमत्, वृद्धिमच्चेति पाश्चात्यानां सिद्धान्तः अत एव ते मन्वादि-शास्त्राणामपि प्रणयन कालाविष्कारे सर्वथा सयत्नाः ।

बुद्धिसौक्ष्म्यसम्पादनाय परिश्रम इतिचेत् नव्यन्याय शास्त्रमेव पाठ्यम् । किञ्च नव्यन्याये न्यायदर्शनप्रतिपाद्यविषयस्य तादृशगौरवाभावेऽपि तदेव भाषामहिम्ना करटदन्तानुधावनेन च सर्वेषां दर्शनानां दुर्बोधतम मिव प्रतिभाति । अपरञ्च वेदान्तिनोऽपि अर्वाचीनाः मधुसूदनादयः नव्यन्यायोद्भाविताभेव भाषामवलम्ब्य अद्वैतसिद्ध्यादिकं प्रणिन्युः । अतएव अधुना नव्यन्यायमद्वारीकृत्य अन्येषु दर्शनेषु सम्यग् व्युत्पत्तिर्दुर्लभा । अतश्च सर्वथा सः अध्येतव्यः किञ्च अधुनापि नैयायिकवराः पञ्चषाः प्राणन्ति । नवीनाश्च अन्तेवासिनः सर्वेऽपि तावत् सुकरेणोपायेन विद्यां प्रसिसादयिषवो नव्यन्यायं च दीर्घकालनैरन्तर्य्यसेवापेक्षं मन्यमानाः तदध्ययनात्पराजयन्ते । गौड़ीयानां नव्यन्याय एव पाण्डित्यमस्खलितं पुनर्यथा भवति तथा यतनीयम् । इयं हि विद्या गौड़ीयानामेव मतिपाटवेन ईदृशीं परिपुष्टिं गताऽपि यदधुना तै र्न सेव्यते तदतीव दुःखाकरम् । अतो महामहोपाध्यायेषु न्यायपारगतेषु जीवत्सु एव अध्यापकेषु अध्यापनसमर्थेषु यथास्यशास्त्रस्य पुनः प्रचारोभवेत् तथा सर्वै र्यतितव्यम् पञ्चषा अध्यापकाः यदि परलोकभाजो भवेयु स्तदा न्यायशास्त्रमेव लोपं गच्छेत् । समासेनायं मदभिप्रायः—

# पाश्चात्यदर्शनम् ।

ततः परं केचिद्दर्शनभृतका विद्वांसोऽभवन् ये किल वेतनमङ्गीकृत्य दर्शनाध्यापनादिकार्यं विदधिरे । तेषां प्रथमः प्रोतगोरः ( Protagoras ) दामक्रीतस्य मित्रमासीत् । दृश्यमानं सर्वं जगत् परिवर्ति, इन्द्रियाणि च प्रत्यक्षगोचराण्येव वस्तूनि दर्शयितुं शक्नुवन्ति नाप्रमेयां शाश्वतीं सत्तामिति हरक्लितः । मनोपीन्द्रियविषयमात्रगोचरं नातीन्द्रिये प्रवर्ततइति दामक्रीतः । ततश्चातीन्द्रियतया दामक्रीतोक्ताः परमाणवः संपद्राकरोक्तानि तत्त्वानि वस्त्वन्तराणि वा जगन्मूलत्वेन दार्शनिकान्तरैः सिद्धान्तितानि कल्पनामात्राण्येव । नातीन्द्रियं किमप्यस्तीति वक्तुं शक्यते । इन्द्रियजन्यंच ज्ञानमत्यन्तं मिथ्येति भवितुं युक्तं, शुक्लं हि वस्तु कैश्चिद्विभावितं पीत्तोपहतस्य पीतमाभाति, रम्यमेकस्यारम्यमन्यस्य जायते इत्यादिवैषम्यदर्शनादेकस्य यादृशं यद्वस्तु प्रतिभाति, तादृशं तस्यैव, तस्मान्यस्य नच वस्तूनां किंचित्सामान्यं रूपादि वर्त्तते । दर्शनानि मिथ्यावादपराणि । तथाच दार्शनिकाप्रश्नान्विहाय न्यायनीत्यलङ्कारादितत्त्वाभ्यासपरैः सर्वैर्भवितव्यमिति प्रोतगौरस्य मतम् । इदमहम्प्रत्ययगोचरयोर्विषयविषयिणोर्भेदः प्रथमं पाश्चात्येषु प्रोतगौरेणैव सूचितः ।

प्रोतगौरस्यैव समये सुक्रतुनामा (Socrates) पाश्चात्येषु प्रसिद्धतमो विद्वान्बभूव । आत्थाननगरे ( Athens ) रथ्यासु भ्रमन्यं कंचित्संभाषणायाहूय दर्शनतत्त्वानि वादद्वाराऽयमुपदिशतिस्म । स्ववादकौशलेनच मृषा पण्डितंमन्यानां मूर्खतामुद्भाव्य, जगन्मूलाद्यन्वेषण मसुपरमफलंचेति प्रमाणैः प्रतिपाद्य, निजाचारशोधने एव सर्वैर्यत्नः कार्यइत्ययं सर्वान् शिक्षयामास । कोन्यायः, किं सत्यं, किं वास्तवसुखम्, कः सदाचारइत्यादिनेवप्रश्नानरश्चिन्तयेदित्युपदिश्य प्रथमोयं नीतिज्ञः पाश्चात्येष्वभवत् । प्रतिव्यक्ति सुखादेर्भेदादेकरूपं नीतितत्त्वं नेतरेषु सामान्य मिति प्रोतगौरादयः । सुक्रतोस्तु व्यक्तिभेदे दृश्यमानेपि सत्य-

ज्ञानसुखादेर्वास्तवमैकरूप्यमेवेतिमतम् । शारीरदुःखादिकमनुभूय न सर्वथा निर्वेदः कार्यः, सेन्द्रियं हि शरीरमेव निगृहीतं सच्छ्रेयसेकल्पते। हृदयमेव नराणां धर्माधर्मादौ प्रमाणं । शुभाशुभं सर्वेषां वस्तुतएकरूपं हृदयसाक्षिकंच केवलं कामक्रोधाद्युपरागात्कस्यचिच्छुभमशुभमिवाशुभंच शुभमिव प्रतिभाति ।

सुक्रतोरेवमतांशानवलम्ब्य सुखमेवपुरुषार्थइति कैरीणदेशीयोऽरिष्टपः ( Aristippus of Cyrene ) सुखेषु शारीरेभ्यो मानससुख प्रशस्यतरम्। निगृहीतेन्द्रियैर्नरैः क्षणिकेषु सुखेषु वीतस्पृहैश्चिरकालभ्यः सुखेभ्यः स्पृहणीयमिहशास्त्सुखवादाननुसरन्तः केचिद्दार्शनिकाः संसारसुखस्य क्षणिकत्वं सुखान्तरस्यचानुपलम्भं पश्यन्तो जीवनान्मरणमेववरमितिनिर्वेदपरा बभूवुः ।

अन्तस्थानाख्यः ( Antisthanes ) अपरः सुक्रतुमतानुसारी धर्मो धर्मार्थमेव सेव्यः स एवच परमः पुरुषार्थो न सुखेन बुद्धिमत कार्यमितिमेने । तस्यशिष्यास्तु न केवलं सुखेन पुरुषार्थः किंतु महदनर्थमूलमिति कायिकवाचिकमानसानां त्रिविधानां सुखानां सर्वथ परित्यागमुपादिशन् ।

उत्कलिताभिधः ( Uclides ) परोदार्शनिकस्तु परमानन्दमतमनुसृत्य सत्तामेकामङ्गीकुर्वन् निःश्रेयसं सद्रूपं मेने । इत्थंजगन्मूलान्वेषणादिप्रश्नां स्तिरस्कृत्य यवनदार्शनिकाः सुक्रतुमनुसृत्याध्यात्मतत्त्वान्वेषणपरा बभूवुरिति सूचितम् । तेषुच केचित्संविद्वादिनः, परे द्रव्यवादिनः, इतरेच कर्मवादिनोऽभवन् एषां पृथक् कीदृशानि मतानीत्यनुपदं स्फुटीभविष्यति ॥

क्रमशः

पाण्डेय श्रीरामावतार शर्मा ।

——:o:——

# वार्त्ताः सम्पादकाभिप्रायाश्च ।

( श्रीमन्तः पाठकमहोदयाः सविनयनिर्बन्धं प्रार्थ्यन्ते यत्ते अनुग्रहबुद्ध्या स्वस्वावगतं प्रकाशोचितं संस्कृतभाषा-समिति-विद्यालयादिगतवृत्तान्तं संगृह्य पत्रिकायां प्रेषयितु मर्हन्तीति । )

पण्डितसभा—न्यायविद्यैकविहारनिकेतने नवद्वीपे महामहोपाध्याय-श्रीराजकृष्णतर्कपञ्चानन-महाशय-प्रमुखानां तत्रत्यानां पण्डितानां नवद्वीपाधिदैवतायाः श्रीमत्या विदग्धजननी-देव्याः पुरतोऽनतिचिरं किमपि सम्मेलनं संवृत्तम् । 'कायस्था यज्ञोपवीतं ग्रहीतुमर्हन्ति न वेति' तत्र विचार्यमासीत् । तत्रभवद्भिर्विद्वद्भिरैकमत्येन सिद्धान्तितं यत् कायस्था न क्षत्रिया अपितु शूद्राः; ततश्च न तेषां यज्ञोपवीतधारणेऽधिकार इति ।

विधवोद्वाहः—उत्कलेषु पार्वतीपुरनामके जनपदे श्रीमतः श्रीवत्सपाण्डेयस्य ( B. A. ) समुद्योगेन कश्चिद् विधवोद्वाहः सम्पन्नः,—यत्र वधूवरावुभावपि ब्राह्मणजातीयौ । उत्कलप्रदेशे ब्राह्मणाद्युच्चजातिषु विधवोद्वाहस्यायमेव प्रथमोऽवतारः । विवाहोत्सवे तत्रत्यानां शिक्षितानामपि जनानामुपस्थितिरासीत् ।

विधवाश्रमः—श्रूयते तस्मिन्नेव स्थाने विधवानां कृते आश्रमकं स्थापयितुं 'प्रजाबन्धु'-पत्रिका-सम्पादकेन यत्यते । तदर्थं श्रीमद्भिर्मयूरभञ्जमहाराजैः १५०० रूप्यकाणि, श्रीमता श्रीवत्सपाण्डेयमहाशयेन च १०० रूप्यकाणि दातुं प्रतिश्रुतानि ।

स्मारकवृत्तिः—परलोकमुपगतानां तत्रभवतां महामहोपाध्यायपदवीभाजां श्रीमतां समरचन्द्रशेखरसिंहमहोदयानां स्मारकत्वेन उत्कलसम्मिलन्या चत्वारिंशद्रूप्यकरूपैका मासिकवृत्तिः स्थापिता । वृत्तिरियमाङ्ग्लविद्यार्थिनामेव महोत्सवाय सम्पन्ना । संस्कृतविद्यार्थिनां कृतेऽस्याःस्थापने तु युक्ततरमभविष्यदिति विवेचयामः, कस्यचित् संस्कृतज्ञस्य हि स्मृत्यर्थं सोत्पन्नेति ।

अभिनवा संस्कृत साप्ताहिकपत्रिका—वृत्तान्तोऽयं पाठकानां चेतसः परां प्रीतिमुत्पादयिष्यति यत् प्रथिततमः संस्कृतचन्द्रिकायाः सहकारिसम्पादकः श्रीअप्पाशास्त्रि-विद्यावाचस्पतिमहाशयः आगामि-विजयादशमीमारभ्य 'सूनृतवादिनीति' काञ्चित् साप्ताहिकीं वृत्तान्त-पत्रिकां संस्कृतभाषया प्रकाशयितुमिच्छतीति। श्रीमता विद्यावाचस्पतिना सम्पादिता सा खलु पत्रिका चारुतमा भविष्यतीति सुदृढोऽस्माकं विश्वासः। योग्येनैव जनेनेदं प्रस्तुतम्। इदन्तु तेन स्वपत्रिकायां प्रकाशितं यद् यावन्न्यूनतः शतचतुष्टयमपि ग्राहकाणां न सम्पद्यते न तावत्सा प्रकाशयिष्यत इति अतो ये खलु सचेतसस्तां पत्रिकां जिघृक्षन्ति, तेनच संस्कृतभाषायां भूयांसं प्रचारमभिलष्यन्ति, तेन तत् त्वरितत्वरितं श्रीमान् विद्यावाचस्पतिमहाशयो विज्ञापनीयः। अस्याश्च वार्षिकं मूल्यम् प्रेरणव्ययेनसह रूप्यकत्रयम्।

दातुः कर्णस्य चरमं दानम्—आमेरिकावासिनः प्रसिद्धस्य दानवीरस्य कर्णस्य ( Mr. Andrew Carnejie ) दानगौरवेण पूर्वमेव जगदीदं चमत्कृतम्। साम्प्रतम् पुनरप्येतेन महाभागेन यद्दानं कृतं तेन तस्य विवेचकत्वं सुष्ठु खलु प्रतीयते। ये हि अध्यापका वृद्धत्वेन शरीरास्वास्थ्यतया वा अध्यापनाद् विरमन्ति, वृत्त्यन्तरग्रहणाक्षमतया धनहीनैस्तैर्जीवनधारणार्थं महान् क्लेशोऽनुभूयत इति दयार्द्रहृदयेन श्रीमता कर्णेन तत्प्रतीकारार्थं ३,१२,५०००० रूप्यकाणि प्रदत्तानि। 'इउनाइटेड्-इष्टेट्' 'कयानेडा' 'निउफाउण्डलण्ड' इत्येतेषु स्थानेषु तादृशेभ्योऽध्यापकेभ्यः तद्रूप्यकतः साहाय्यकं दीयेतेति तस्य खलु वदान्यधुरन्धरस्याभिप्रायः। श्रूयतामिदमस्माभिर्भारतीयैः।

अध्यापकानां श्रमः—इंलैण्डप्रभृतिषु स्थानेषु अध्यापकैः प्रतिसप्ताहं छात्राध्यापनाय प्रायेण १५ घटिकाः परिश्रम्यते। अत्रास्तु ध्वैस्तत्रत्यैः तत्प्रतीकाराय फ्रान्स-जर्म्मणि-प्रभृतिदेशस्थानाम् अध्यापकानां पाठनकालपरिमानमुदाहृत्य प्रयत्यते। फ्रान्सादिदेशीया अध्या

पकाः प्रतिसप्ताहं पञ्चघटिकामात्रं छात्रानध्यापयन्ति । शिष्टस्तु काल
नैस्तत्तद्विषयाणां गवेषणानुशीलनाद्यर्थं नियोज्याध्याप्यो विषयश्छा-
भ्यो यावत्सम्भाव्यं विभ्रियते । अस्मद्देशे अध्यापकानां विशेषतस्तु
संस्कृताध्यापकानां प्रतिसप्ताहं कियान् कालो गच्छतीति प्रत्यक्षमेव
सर्वेषाम् । 'कलेज'-संज्ञकेषु विद्यालयेषु अध्यापकः प्रतिसप्ताहमन्यूनां
चतुर्विंशतिं घटिका अध्यापयन्ति । ये पुनरध्यापकाः स्वगृहएव
छात्रान् पाठयन्ति प्रतिसप्ताहं तदर्थं तेषां प्रायेण चत्वारिंशतोऽप्य-
धिका घटिका अपेक्ष्यन्ते । इत्थं च भूयसां कालाना मित्थमेव विनि-
योगान्नैते तत्तद्विषये नवनवं तत्त्वमनुशीलयितुं क्षमन्ते, न च तेन
पाठ्यमपि यथोचितं परिष्कर्तुं शक्नुवन्ति । ये तु केवलमेकमेव शास्त्रं
सर्वदाध्यापयन्ति, तेषां विषये पूर्वोक्तं न युक्तियुक्तमिति वयमपि
ब्रूमः । परन्तु अभिनवरहस्याद्यनुशीलने तैरपि दुर्लभ एव काल इति
निश्चितमेव । अन्यस्मिंश्च पक्षे ये खल्वध्यापका बहुषु शास्त्रेषु अध्या-
पनं कुर्वन्ति, प्रायेण ते न सर्वत्रैव सर्वथा व्युत्पन्नाः । अतोऽध्या-
प्यानां तत्तद्विषयाणां सम्यगवबोधनार्थमवश्यं तैः स्वयं साधुतरमध्ये-
तव्यम् । अध्यापनमात्रे च तावति कालेऽतीते कुतः कथं वाधीय-
ताम् । ततश्च येऽध्यापका क्वापि विद्यालयेऽध्यापयन्ति, तेषां श्रमला-
घवाय विद्यालयाधिकारिभिः अधिकतराध्यापकविनियोगेन यतनी-
यम्; बहुशास्त्राध्यापकैश्च वृथाकीर्तिलाभमात्रं पुरुषार्थं परित्यज्य
(स्वशक्त्यनुसारेण) एकं द्वे त्रीणि वा शास्त्राण्यध्यापनीयानि तत्त-
द्विषयं सर्वथा बोधयितुं विद्यार्थिनः शक्यन्ते न वेति स्वयमेवा-
न्तरात्मानं पृष्ट्वा अध्यापकमहाशया ज्ञातुं प्रभवन्ति । छात्राणां यथा
शास्त्रकं न चर्व्यंते तथावश्यमेव विद्यादानाधिकारिभिः कर्तव्यमिति
को न जानाति ।

शिक्षार्थं दाने भारतीयः पाश्चात्याश्च—अतीते आंग्लोशतके
भारतीयैः शिक्षार्थं यद्यत् दानं प्रधानतया कृतम्, तत्सर्वं निर्दिश्यते;—

| दाता | दत्तंधनम् |
| --- | --- |
| १ तातामहाशयः ... ... ... | ३० लक्षाणि |
| २ प्रेमचाँद-रायचाँदः ... ... ... | २ लक्षे |
| ३ मुन्सी कालीप्रसादः ... ... ... | ५ लक्षाणि |
| ४ पं० गदाधरशास्त्री अग्राकालेजार्थं वार्षिक द्वाविंशति सहस्रायोचिता सम्पत्तिः । | |
| ५ पाचेइयाप्पा मुदालियरः ... ... | ६ लक्षाणि |
| ६ महम्मदमोहसीनः ... (प्रतिवर्षम्) | ५१ सहस्राणि |
| ७ भूदेवमुखोपाध्यायः ... ... ... | १,६०,००० षष्टिसहस्राधिकमेकं लक्षम् |
| ८ सार मङ्गलदास नाथु भाइ ... ... | ३॥ लक्षाणि । |
| ९ सर्दार दयालसिंहः ... ... ... | १५ लक्षाणि |

भारते उक्तेभ्योऽपरं किमपि प्रधानं दानं विगते शतके जातमिति नास्माभिर्ज्ञायते; भवेदपि वा कदाचित् । साम्प्रतं पाश्चात्येषु अमेरिका-युक्तप्रदेशस्य एकवर्षेऽधिगतं शिक्षाविषयकं दानमुदाह्रियते,—१८३८ तमेऽब्दे तद्देशीयैर्धनिकैर्विद्यालयार्थं यद्धनं प्रदत्तं, तत्संख्या—१०,८१,००,००० रूप्यकाणि । एतद्विना पुस्तकालय-चित्रप्रदर्शनगृहाद्यर्थं धनं चत्वारिंशल्लक्षाधिकैकादशकोटितोऽप्यधिकमासीत् । साम्प्रतमपि वैदेशिकपत्रेषु अमेरिकास्थानां धनिकानां शिक्षादिविषये कीदृशं दानमिति सर्वेषामपि नयनसरणिमापतति । सत्यमिदमस्मद्देशेषु न तथा धनिनः सन्तीति; परं तु ये सन्ति तेषामपि किं जातु स्वप्नेऽपि ईदृशं किञ्चिन्महत् कृत्यमस्तीति चेतस्युदेति उदियाद्वा ?

———:o:———

शोकस्थानम्—शोकाकुलितचेतसो वयं प्रकाशयामो यद् आषाढस्य अतीतायां पूर्णिमायां कलिकाता-राजकीय-संस्कृतविद्यामन्दिरभूषणं महामहोपाध्यायपदवीलाञ्छनः श्रीमत्पण्डितप्रकाण्डो गोविन्दशास्त्रिमहोदयःपृष्ठव्रणरोगाक्रान्तो हन्त ! अकाण्डे एव चिरपरि-

वितान् चिराय परित्यज्य परलोकमुपागमत् । आषाढ़पूर्णिमे, सुद-र्शनापि दुर्दर्शनासि संवृत्ता । अहह । अपहृतं खलु दुरन्तेन काल-दूतकेन भारतस्य किमपि रत्नम् । अयि मातर्भारति प्रस्थितं भवत्याः केनापि सुपुत्रेणेति किं न ब्रूयसे ?

साम्प्रतं कीदृशी संस्कृतशिक्षा अपेक्ष्यते ? इत्यत्रविषये भारतस्य तत्तत्प्रदेशवासिनां पण्डितधौरेयाणां मतानि अस्माभिः संगृह्यन्ते; प्रकाश्यन्ते च यथासमयं पत्रिकायामस्याम् । अतः प्रार्थ्यन्ते पण्डित-प्रकाण्डा यत्ते स्वस्वमतमस्मिन् विषये प्रकाश्य अस्मत्समीपे प्रेष-यन्त्विति । किञ्च तन्मतं यथापत्रत्रयादूर्द्ध्वं न भवेत् तथा लेखकैः यतितव्यम् ।

भूकम्पाद् भयम्—जापानीयो भूतत्त्ववित् श्रीमान् ओमहिर्नाम पञ्च-नदेषु भूकम्पतत्त्वज्ञानार्थमागतः । तेनोच्यते साम्प्रतं द्विशतवर्षमध्ये उत्तरभारते भूकम्पाद् विशेषभयं नास्ति; अन्तरान्तरा नु क्वचित् किमपि स्थानं मनाग् विचलेदपि । इदानीं पारस्यदेशे महान् भूकम्पो भवेदिति सम्भाव्यत इति ।

अहो कौशलम्;—लण्डननगरे कस्याञ्चित् प्रथितायां सभायां स्त्री-शिक्षाविषयकालोचने प्रसङ्गेन "लेडि इलियट"-नाम्न्या कयापि सभ्यया स्त्रीस्वाधीनत्वमवलम्ब्य इदमुक्तम्—भारतीयान्तःपुरिकाणा-मवरोधदूरीकरणार्थं नास्माभिस्तावान् आयासः स्वीकर्त्तव्यः; अस्मा-कमध्यापनगुणेन यदा खलु ताः सुशिक्षिताः स्युः, तदानीमेव गृहद्वारं निरर्गलं भवेत्, धीरपदक्षेपं च ता बहिरागच्छेयुः क्व तदानीमवरोध-बन्धनं तिष्ठेदिति ।

परासीकानां शवसत्कारः—पारसीकैर्मृतदेहो नाग्निसात् क्रि-यते, न वा भूमौ निखन्यते, अपितु यमदुर्गाभिधेये (Tower of Silence) कस्मिंश्चित् स्थाने निक्षिप्यते । शवमांसं गृध्राणाम् महोत्सवं साध-यति । अथास्थिसञ्चया जले क्षिप्यते । साम्प्रतमीदृशे शवसंस्कारे

पारशीकेषु वैमत्यमुत्पन्नम्। केचित् शवानां दाहमिच्छन्ति, अपरे तु पूर्वामेवपद्धतिं सनिर्बन्धं रक्षन्ति।

## समालोचनम्।

जयपुरनगरात् "संस्कृतरत्नाकर" इति कापि संस्कृतभाषामयी मासिकपत्रिका वत्सरात् प्रभृति प्रकाश्यते इति अस्माकं महान् प्रमोदविषयः। भारतेषु यत्र यत्र बाहुल्येन संस्कृतभाषाया—आलोचनं भवति, जयपुरं तेषु अन्यतमम्, तत्रत्या पत्रिका विशेषेण उत्कर्षपदवीं गमिष्यति इत्यत्र कः सन्देहः। परन्तु दुःखाकरमेतत् वर्षेऽतिक्रान्तेऽपि अस्याः कलेवरपुष्टिः न भवतीति, अथवा संस्कृतभारत्या एव दौर्भाग्यमेतद् यत् तत् सेविनः पोषयितुं तत्-सन्तानेषु नास्ति कोऽपीति।

## प्रहेलिका।

अपि स्वभावान्मलिना स्पर्शेऽपि बहुदोषकृत्।
सद्भिः का गृह्यते पाणौ पात्रेऽपि प्रतिपादिता॥

प्रश्नकर्त्ता
श्रीमहेशचन्द्र शर्म्मा।

केषाञ्चिदाग्रहेणेतः प्रभृति पत्रिकायामन्तरान्तरा प्रहेलिका प्रकाशयिष्यते। कुतूहलिभिः पाठकमहाशयैः यथासमयं तदुत्तरं देयमिति प्रार्थयामहे। उत्तरप्रदातॄणां नामान्यपि प्रकाशयिष्यन्त इति कृतमुक्तेन।

मि. प. स.

# मित्रगोष्ठी-पत्रिका ।

( मासिकं संस्कृतपत्रम् । )

"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्" ।

ऋग्वेदः ।

द्वितीये वर्षे } १८२७ शकाब्दाः, भाद्रः { पञ्चम संख्या

## शुक्तिरजतम् ।

( पूर्वानुवृत्तम् )

शुक्तिरजतस्योपादानकारणम् अज्ञानमेवेति प्रतिपादितम् । निमित्तकारणं तु अस्पष्टालोकः, दूरत्वम्, नयनदोषः, आरोप्याधिष्ठानयोः सादृश्यज्ञानमित्येवमादिकम् । अधिष्ठानारोप्ययोः सादृश्यज्ञानं वस्तुतः कारणं न वेति बहवोऽत्र विप्रतिपद्यन्ते । तत्र ये तत्कारणतां स्वीकुर्वन्ति, तेषामयमभिप्रायः (१)—

आरोप्याधिष्ठानयोः सादृश्यज्ञानं न चेदध्यासं प्रति कारणं स्यात्, कथं तर्हि शुक्तिकायामेव रजतमध्यस्यते न पुनर्घटादौ; कथं वा रज्ज्वामेव सर्प आरोप्यते न तु घटादौ । किमत्र बीजम् ? किञ्च यदि सादृश्यज्ञानमध्यासे नापेक्ष्येत, अङ्गारेऽपि रजताध्यासः प्रसज्येत । अथोच्यते—आरोप्याधिष्ठानयोः सादृश्यमेव कारणमस्तु, न पुनस्तज्ज्ञानमपि; अतएव नाङ्गारे रजताध्यासः प्रसज्येत, तत्र सादृश्यस्यैवाभावात्, शुक्तिकायां च सादृश्यसद्भावादेव रजताध्यास इति । नेदं युक्तम् । तथाहि—यदि सादृश्यमात्रस्यैव कारणता, न पुनस्तज्ज्ञानस्यापि, तर्हि जलधिजले नीलशिलाध्यासो न स्यात् (२) । नहि अधिष्ठानभू-

(१) एतन्मते पुरोवर्त्तिपदार्थे नयनसंयोगानन्तरम् इदमंशस्य अधिष्ठानारोप्ययोः सादृश्यस्य च ज्ञानमुत्पद्यते; पश्चादध्यासः ।

(२) समुद्रतीरमधितिष्ठतो दूरस्थं स्थिरगम्भीरं सलिलं नीलशिलेव

तेन जलेन सह आरोप्यस्वरूपाया नीलशिलाया मनागपि सादृश्य-मस्ति । अतो न सादृश्यमात्रं कारणम् अपि तु तज्ज्ञानमपि । एवञ्च न तद्दोषावकाशः । तथाहि सादृश्यज्ञानं भ्रमप्रमारूपेण द्वेधापि सम्भवति । तत्र ( समुद्रोदके नीलशिलाध्यासस्थले ) प्रमारूपसादृश्य ज्ञानाभावेऽपि भ्रमरूपं सादृश्यज्ञानं सम्भवत्येव । तथा च न किञ्चि-दसमञ्जसम् ।

ननु दृश्यते हि—अतिशुभ्ररजतपात्रस्थे स्वच्छे सलिले, मुक्ता-फले च, द्वयोरपि स्थानयोः समानेऽपि नीलिमसादृश्याभावे, रजतपा-त्रस्थसलिल एव नीलिमाध्यस्यते न तु मुक्ताफल इति; तत् किमेतस्य कारणमिति चेत्? अत्र केचित्,—अस्ति खलु रजतपात्रस्थसलिलस्य तादृशः कश्चिदनन्यसाधारणः स्वभावो, येन तत्रैव नीलिमाध्यस्येत, न तु मुक्ताफलादौ । एवं शुक्तिकाया अपि स्वभावविशेषसद्भावादेव तत्र रजताध्यासः, न तु अङ्गारादिषु, तेषां तादृशस्वभावविशेषविर-हात् । तस्मात् न सादृश्यं, न वा सादृश्यज्ञानम् अध्यासकारणम्, अपि तु अधिष्ठानगतः स स स्वभावविशेष एवेति ।

वस्तुतस्तु नेदमपि युक्तम् । सादृश्यज्ञानस्य अध्यासकारणता अन्वयव्यतिरेकाभ्यामेव प्रमीयते । पश्यामः खलु—न तावत् पुरोनि-पतिते वसनखण्डे कमलकोरकबुद्धिर्जायते । अथ यदि तदेव वसन-खण्डं यथोचितं निकृत्य मुकुलाकारं क्रियते, सद्य एव तस्मिन्मुकुल-कलिकाज्ञानं समुत्पद्यते । तस्मात् कथमुच्यते सादृश्यज्ञानं नाध्यासे कारणमिति । यदि नाम वस्तुनः स्वभाव एवाध्यासकारणं स्यात्, कथं तर्हि कर्त्तनादिना वसनखण्डस्य मुकुलाकारकरणात् प्रागेव पुण्डरीकि-मुकुलाध्यासो न जात इत्यपरे ।

अन्येत्वाहुः,—अध्यासो द्विविधः, विशेषज्ञाननिवर्त्तनीयः, तदनि-वर्त्तनीयश्च, तत्र प्रथमे अधिष्ठानतत्त्वज्ञानोदये अध्यस्तं वस्तु निव-

प्रतिभाति । सर्वेष्वपि एषु मतेषु सलिलस्य रूपं धवलम् । अतो न तेन नील-शिलायाः किमपि सादृश्यम् ।

र्त्तते। यथा शुक्तिरजते—शुक्तितत्त्वज्ञाने सति अध्यस्तं रजतं निवर्त्तते,—यावच्च शुक्तितत्त्वज्ञानं नो जायते, तावदेव रजतमुपलभ्यते, न तु ततःपरमपि। द्वितीये अधिष्ठानतत्त्वज्ञानोदयेऽपि अध्यस्तं न निवर्त्तते; यथा स्फटिके लौहित्याध्यासः,—कस्यचिन्निर्मलस्य स्फटिकोपलस्य सन्निधौ जवाकुसुमे गृहीते तत्प्रतिबिम्बेन 'लोहितः स्फटिक' इति स्फटिके लौहित्याध्यासो भवति। तत्र अयं स्फटिकः श्वेत इति सत्यपि विशेषज्ञाने, अध्यस्तं लौहित्यं नापगच्छति; भवति हि तदानीमपि ज्ञानम्—स्फटिकोऽयं लोहित इति। पीतः शङ्खः, तिक्तो गुड इत्यादावपीत्थमेव बोध्यम्। नयने पित्तदोषे समुत्पन्ने श्वेतोऽपि शङ्खः पीतः प्रतिभाति। तदानीम् 'अयं शङ्खः श्वेत' इति सत्यामपि बुद्धौ शङ्खेऽध्यस्तः पीतिमा न निवर्त्तते। जिह्वायां पित्तेन दूषितायां मधुरोऽपि गुडस्तिक्तो भवति। तदा च 'गुडो मधुर' इति ज्ञानोत्पत्तावपि तदध्यस्तं तिक्तत्वं नापगच्छति।

तस्मात् सादृश्यज्ञानस्य अध्यासं प्रति सत्यपि कारणत्वे, न सर्वेष्वपि अध्यासेषु तत्कारणम्, अपितु शुक्तिरजतरज्जुसर्पत्यादिषु विशेषज्ञाननिवर्त्तनीयेष्वेव। 'तिक्तो गुडः', 'पीतः शङ्ख' इत्यादिषु विशेषज्ञानानिवर्त्तनीयेषु अध्यासेषु तु सादृश्यज्ञानस्य कारणत्वं वक्तुं न युज्यते। न हि 'पीतःशङ्ख' इत्यादौ शङ्खपीतिम्नोरस्ति किञ्चित् सादृश्यम्। (१)

शुक्तौ रजताध्यासे शुक्तितत्त्वज्ञानम् यथा प्रतिबन्धकम्, एवं शुक्तिज्ञानसामग्र्यपि प्रतिबन्धिका। शुक्तौ रजताद् ये किल केचन विशेषाः (नीलपृष्ठत्वप्रभृतयः) सन्ति, त एव शुक्तिज्ञानस्य सामग्री

तथाच सादृश्यज्ञानस्य अध्यासे कारणत्वास्वीकारेऽपि न क्षतिः।

---

(१) अस्मिन् हि मते दुष्टेन्द्रियसंयोग एव अध्यासकारणम्। काचादिदोषदूषितेन नयनेन शुक्तिकादिसन्निकर्षे सत्येव 'इदं रजतमिति' ज्ञानमुत्पद्यते। तिक्तो गुडः, 'पीतः शङ्खः' इत्यादावपि न कश्चिद्बाधः, तत्रापि पित्तादिदोषदूषितरसनेन्द्रियसन्निकर्षादस्त्येव।

ननु सादृश्यज्ञानस्य कारणत्वास्वीकारे कथम् अङ्गारेऽपि रजतं नाध्यस्यतामित्युक्तम् इति चेत् ? न तत्रापि अङ्गारस्य नैल्यादिरूपविशेषदर्शनसामर्थ्यमेव रजताध्यासस्य प्रतिबन्धकतां करोति ।

क्रमशः

श्रीविधुशेखर शर्म्मा ।

---:o:---

## बौद्धवृत्तान्तः ।

### बुद्धदेवस्य नीत्युपदेशाः ।

साम्प्रतं बौद्धानामाचारपरम्पराप्रदर्शनतो विरम्य बुद्धदेवस्यापरानपि काँश्चिदुपदेशवादान् प्रदर्शयामः ।

उक्तं भगवता बुद्धेन—

"अक्कोधेन जिने कोधं, असाधुं साधुना जिने ।
जिने कदरियं दानेन सच्चेन अलिकवादिनम्।। धम्मपदं, कोधवग्गो ३

स०—अक्रोधेन जयेत् क्रोधम्, असाधुं साधुना (सुकर्म्मणा) जयेत् ।
जयेत् कदर्य्यं ( कृपणं ) दानेन, सत्येनालीकवादिनम् ।।

"सुसुखं वत जीवाम वेरिनेसु अवेरिनो ।
वेरिनेसु मनुस्सेसु विहराम अवेरिनो"।। धम्मपदं, सुखवग्गो १.

स०—सुसुखं वत जीवाम वैरिषु अवैरिणः ( सन्तः ) ।
वैरिषु मनुष्येषु अवैरिणः ( सन्तः ) विहरामः ।।

"न हि वेरेन वेरानि सम्मन्तीध कदाचन ।
अवेरेन च सम्मन्ति एस धम्मो सनातनो।।५।।यमकवग्गो धम्मपदं*

---

* बुद्धदेवस्य निर्वाणलाभानन्तरमेव राजगृहे बौद्धानां महत् सम्मेलनमासीत् । तस्मिन्नेव समये 'धम्मपदं' रचितमिति वदन्ति । 'धम्मपदस्य टीकाकारः खी०पञ्चमशतकोत्पन्नो बुद्धघोषो नाम स्वटीकायामवोचत्—यद् भगवतो बुद्धस्योक्तिरेव धम्मपदे संगृहीतेति । बुद्धघोषेण प्रतिश्लोकं व्याख्यायामेकैका कथापि संयोजिता । इयमपि कथा बुद्धदेवेनैव वर्णितेति तदुक्तिः ।

८०—नहि वैरेण वैराणि शाम्यन्तीह कदाचन ।
अवैरेण तु शाम्यन्ति एष धर्म्मः सनातनः ॥

श्रूयते बुद्धदेवेनेदं दृष्टान्तेनापि दृढीकृतम् । अत्रेयं कथा—कदाचिद् भिक्षूणां मध्ये मिथो महान् विसंवाद उत्थितः । तन्मीमांसार्थं ते सर्वे श्रावस्तीनगरमधितिष्ठन्तं बुद्धदेवमुपजग्मुः । अथ स भगवान् तेषां विवादनिरासायेमां कथामारभत—पुरा किल वाराणस्यां ब्रह्मदत्तो नाम महाधनसम्पन्नो विपुलसैन्यसहितो महीपतिरासीत् । कोशलप्रदेशे च दीर्घतिर्नामापरः कोऽपि क्षीणशक्तीराजाऽभवत् । प्रायो यथा बलीयान् दुर्बलं बाधते, तथा काशीराजोऽपि दीर्घते राज्यमवरुरोध । तेन साकं योद्धुमसमर्थो दीर्घतिः स्वराज्यात् सह महिष्या अपसृत्य गुप्तवेशेन बहुस्थानं परिभ्रम्य वाराणस्यां कस्यचित्कुम्भकारस्य गृहमाश्रयत् । राज्ञ्या तत्रैकः सुतः प्रसूतः । तस्य "दीर्घायु" रित्यभिधानं जातम् । अथ बाले बर्द्धिते सति तदनिष्टाशङ्कया दीर्घतिस्तं दूरं प्रैषयत् । इतो वाराणसीश्वरोऽज्ञासीद् यत्तदीयो वैरी तत्रगर एव तस्य कुम्भकारस्य गृहमधिवसतीति । ज्ञात्वैवेदं स दीर्घतेस्तत्पत्न्याश्च वधदण्डमादिदेश । दैववशात्तु दीर्घायुः पित्रो र्मरणसमये तत्समीपमागमत् । स्वजीवितोत्क्रमणकाले जनकः पुत्रमुपदिदेश—"वत्स, नाधिकं पश्येः, नाल्पं पश्येः; किञ्च—

"नहि वेरेन वेरानि सम्मन्तीध कदाचन ।
अवेरेन तु सम्मन्ति एस धम्मो सनातनो" ॥

भिक्षवः, अथ स दीर्घायुर्वनमुपेत्य पित्रोः कृते कानिचिद्दिनानि रोदनेन यापयित्वा वाराणसीपतेर्ब्रह्मदत्तस्य हस्तिपककृत्यं स्वीचकार

परेद्युः स प्रत्यूष एव शयनादुत्थाय वीणया अतिमधुरं किञ्चिदगायत । तस्य खलु तद्गीतिमाधुर्य्यमित्थं मनोरमतरमासीद् येन स महीपतिरपि मुग्धचित्तः कः स इत्यजिज्ञासत । तदनुज्ञया तत्समीपं नीतो दीर्घायुः प्रीणितेन तेन स्वपार्श्वचरत्वेन न्ययुज्यत ।

कदाचिन्नरपतिर्ब्रह्मदत्तो मृगयार्थं सह दीर्घायुषा नगराद् दूरमगमत् । तथास्थितस्य तु तस्य दीर्घायुषं विना नान्यः कश्चित् पार्श्ववर्त्तिजनो तत्राभूत् । अथ स श्रान्तशरीरो दीर्घायुषोऽङ्के शिरोदेशं संनिवेश्य निद्रां सिषेवे ।

अचिन्तयद् दीर्घायुः—नरेन्द्रेणानेन अस्मासु महदनिष्टमाचरितम्—पितरौ विनाशितौ, तद्राज्यं चापहृतम् । तदयं प्रतिवैरावसर इति । ततश्च तदनुष्ठानार्थं करवालं कोषत उन्मुच्याधारयत् ।

परन्त्वस्मिन्नेव क्षणे दीर्घायुषः स्वजनकेन मरणकाले प्रदत्तं तत् खलु वचनं स्मृतिपथमारूढम्—

"वत्स, नाधिकं पश्य, नाल्पं पश्य-
नहि वेरेन वेरानि सम्मन्तीह कदाचन ।
अवेरेन तु सम्मन्ति एस धम्मो सनातनो" ॥ इति ॥

नरपतिरपि कमप्यतिघोरं दुःस्वप्नं विलोक्योदबुध्यत, दीर्घायुषा तत्कारणं पृष्टोऽकथयच्च—"न जातु मे सुखस्वापो जायते, सर्वदैव स्वप्नसमावेशे दृश्यते मया—यदहं दीर्घायुषोऽङ्के शिरः संस्थाप्य स्वपीमि, स तु सहसा मां करवालेन छेत्तुमुपक्रमते" इति ।

स तु दीर्घायुस्तदाकर्ण्य वामेन पाणिना राज्ञो मस्तकं दक्षिणेन च खड्गं धारयन्नवोचत्—"पश्य राजन्, अयमेवास्मि स दीर्घायुः । बहवस्त्वयास्माकमपकाराः कृताः । तदयं तस्यावकाशः प्रतिहिंसानलस्येति।

असहायो महीपतिः सभयमवादीत्,—"ननु दीर्घायुः स्वप्राणानहमद्य त्वां प्रार्थये, प्रसीद, न मामिह प्राणैर्वियोजय,—त्वं मां रक्षेति"।

प्रत्युक्तं तेन—"राजन् कथमिदं सम्भाव्यते, ननु यत्र ममापि प्राणा विपन्नाः ? अथ त्वं मेऽभयवचनं प्रयच्छेः, अहमपि ते प्राणान् रक्षेयमिति" ।

राज्ञा तदङ्गीकृत्योक्तम्—"त्वं मे प्राणान् रक्ष अहमपि तेऽभयवचनं ददामीति" ।

अथ तयोरन्योन्यं शपथपूर्वं सम्पन्ने मैत्रीबन्धने दीर्घायुः; आत्मनः सर्वं वृत्तान्तं प्रकाशयामास। ब्रह्मदत्तस्तदाकर्ण्योवाच—"दीर्घायुः, पित्रा ते मरणसमये तुभ्यं "नाधिकंपश्य, नाल्पं पश्य;—नहि वैरेण-वैराणीत्यादि यदुक्तं तस्य कोऽर्थः" ?

सोऽवदत्—"नाधिकं पश्य"—दीर्घकालं यावद् वैरवृत्तिर्मनसि न रक्षणीयेति;—नाल्पं पश्य"—नाल्पकारणेन मैत्रीविच्छेदः कर्त्तव्यः, 'नहिवैरेण' त्यादेरयमर्थः—त्वया मे पितरौ विनाशितौ, तद् यद्यहमपि तदर्थं त्वां हन्यां, तर्हि त्वदीया जना मामपि प्रतिहन्तु यतेरन्निति पश्य, न वैरं वैरेण शाम्यति। त्वया साम्प्रत मे प्राणा रक्षिताः, मयापि च तवेति पश्य, अवैरेणैव वैरं शान्तमिति।

ब्रह्मदत्तस्तदाकर्ण्य दीर्घायुषे हृतपूर्वं तत्पितृराज्यं सर्वमेव समार्पयत्, स्वदुहितरं च तस्मै परिणयविधिना सम्प्रादात्।

हे भिक्षवो यदिनामेदृशं वृत्तं धृतदण्डास्त्राणां राज्ञामपि सम्भाव्यते, तर्हि भिक्षवो, ये खलु यूयं धर्म्ये जीवितमवलम्बितवन्तः, तैस्तु अवश्यमेवेयं क्षमा समाश्रयणीया। अन्योन्य विनयप्रणयप्रदर्शनेन यूय निवसत; नान्योन्यं विच्छेदं जनयत, अयमेव ममोपदेशः। आशंसे—गृहस्था अपि भिक्षूणां वः शीलसरणिमनुसरन्तः सुखिनो भवन्त्वीति। (महावग्गो-१०.२०) *

अन्यापीदृशी काचिन्मनोरमा कथा श्रूयते—

कदाचित् कोऽपि श्रावस्तीनगरादूरस्थ'-प्रणन्दपुर'-वास्तव्यो धीवरः कुतोऽपि गच्छन्नध्वनि नद्या 'अचिरवत्या'स्तीरे कानिचित् कच्छपाण्डानि प्राप्य श्रावस्त्यां कस्यापि स्वसुहृदो गेहे केवलमेकं विना

---

* कथेयं भागतः Civilization in Ancient India नामकाद्, भागतश्च 'बौद्धधर्म्म' नामकाद् वङ्गभाषाग्रन्थात् संगृहीता।

सर्वाण्यण्डानि बन्धुपरिवारैः सहाभक्षयत्। शिष्टन्तु तत् तद्दुहित्रे प्रदत्तम्। सा खलु कन्यका तदण्डरसास्वादेन विरसमिवान्यं भोज्यं परित्यज्य ततः प्रभृति स्वगृहस्थितायाः कुक्कुट्या अण्डं प्रतिदिनं स्वयमेव पक्त्वा भोक्तुमारभत।

सा तु कुक्कुटी प्रत्यहमेव निजाण्डानां ध्वंसमालोक्य तस्यै कन्यकायै असूयन्ती भगवन्तमभ्यर्थयत यत्सा त्वरितं प्रेत्य मांसाशिजन्तुत्वेनोत्पद्य तस्याः कन्यकायाः पुत्रादीन् विनाशयेदिति।

कुक्कुटी मृत्वा तस्मिन्नेव गृहे विडालरूपेणाजायत। कन्यका च स्वमातुरेव गृहे मरणानन्तरं कुक्कुटीत्वेनोदपद्यत। कुक्कुट्या प्रसूतान्यण्डानि विडालोऽनुदिनमेव खादितुमारभत। अथेत्थमेव गच्छति काले सा कुक्कुटी देवं प्रार्थयत-यद् भविष्यज्जन्मनि सा तस्य विडालस्य सन्ततिं विनाशयेदिति। कुक्कुटीरूपा कन्यका सा उपरम्य चित्रव्याघ्ररूपेण विडालश्च स हरिणरूपेणोदभवताम्। हरिणेन शावः प्रसूतः; व्याघ्रस्तु तमग्रसत्। इत्थमेव पञ्चशतवत्सराणि यावत्तयोर्वैरं प्राचलत्।

तयोरन्तिमे जन्मनि एको 'विलूम्'* रूपेण अन्यस्तु मानवकन्यास्वरूपेण श्रावस्त्यां सम्भूतौ। बुद्धदेवस्तदानीं 'जेतवन'—विहारे ताभ्या-मिदमुपदिदेश "अनेन मे क्षतिरुत्पादिता, अनेनाहं विजितोऽस्मि, अनेनाहं प्रहितोऽस्मि, अनेन वाह मुषितोऽस्मीति न कश्चिदन्यस्मै द्रुह्येत्, यदि तथा कुर्य्यात्, तर्हि तयोर्वैरमुत्तरोत्तरजन्मस्वप्यावर्त्त्यते। अथ न तत् क्रियेत, वैरं शाम्येदिति"। इदमाकर्ण्य 'विलूम्' 'शरणगमनम्'† उच्चार्य्य आश्रित्य च पञ्चमहादेशान्

---

* शब्दोऽयं ब्रह्मदेशीयः मांसाशिजन्तुविशेषस्तीति तदर्थः।

† 'सरणगमनम्'—त्रिशरणम्—बुद्धं शरणं गच्छामि, धर्म्मं शरणं गच्छामि संघं शरणं गच्छामीति प्रागुक्तम्।

( पञ्चशीलरूपान् पूर्वोक्तान् ) वैरदुःखादमुच्यत । कन्यका च सा * 'स्रोतापत्ति'-मार्गमभजतेति † ।

बुद्धदेवेनेदृशा मनोरमाः परःशता उपदेशाः प्रदत्ताः ।

कश्चित् पत्रिकाप्रियः ।

—:o:—

## विवाहे कन्यायाः परीक्षा ।

साम्प्रतमप्यस्मद्देशेषु लक्षणेन कन्यायाः शुभाशुभत्वं विविच्य विवाह्यत्वं निर्णीयत इति दृश्यत एव । प्राचीनग्रन्थालोचनेन ज्ञायते यत् सेयं प्रथा बहुतिथादेव कालात् प्रचलितास्तीति । न केवलं मन्वादिप्रणीतासु संहितासु, किन्तु एतेभ्योऽप्यतिप्राचीनतमेषु गृह्यसूत्रेषु तत्परिचय उपलभ्यते । कीदृशीव सा परीक्षासीदिति पाठकानां कुतूहलविनिवृत्तये तत्तद्ग्रन्थेभ्यः संगृह्येह उपह्रियते ।

सोऽयं परीक्षाविधिर्बहुष्वेव गृह्यसूत्रेषु दृश्यते, अस्माभिस्त्विह गोभिलगृह्यसूत्रादुद्ध्रियते । तत्र द्वितीयप्रपाठकस्य प्रथमकाण्डिकायामुक्तम् :—

"पुण्यनक्षत्रे दारान् कुर्वीतेति" ॥ १ ॥

कीदृशान् दारानित्यत आह—

"लक्षणप्रशस्तान् कुशलेनेति" ॥ २ ॥

* 'स्रोतापत्ति'—बौद्धशास्त्रे ऽक्रमेण निर्वाणप्रापकाश्चत्वारो मार्गाः कथ्यन्ते यथा 'सोतापत्तिमग्गो' ( स्रोत आपत्तिमार्गः ), सकदागामिमग्गो (सकृदागामि मार्गः ), 'अनागामिमग्गो' ( अनागामिमार्गः ), 'अरहत्तमग्गो (अर्हन्मार्गः ) च । विस्तर उपरिष्टात्प्रकाशयिष्यते ।

† बुद्धघोषेण धम्मपदव्याख्याने या कथा निबद्धाः, तासां काश्चिद् ब्रह्मदेशीय भाषातोऽनूद्य आंग्लभाषया Buddhaghosha's Parables नाम्ना ग्रन्थेन Capt. T. Rogers महाशयेन प्रकाशिताः । तत एवेयं कथा संगृहीता ।

कुशलेन स्त्रीलक्षणविदा लक्षणदर्शनेन ये प्रशंसिताः, तानित्यर्थः अथ कदाचिल्लक्षणज्ञो न लभ्यते, तदा किं कार्यमिति सूत्रकारस्तदुपायं कथयति—

"तदलाभे पिण्डान् इति" ॥ ३ ॥

कुशलस्य स्त्रीलक्षणविदोऽलाभे कांश्चिन् मृत्पिण्डान् कुर्यादित्यर्थः मृदस्तु वक्ष्यमाणेभ्यः स्थानेभ्यः संग्राह्याः—

"वेद्याः, सीतायाः, ह्रदाद्, गोष्ठाच्, चतुष्पथाद्,
आदेवनाद् आदहनाद्, ईरिणात्" ॥ ४ ॥

( वेद्याः यज्ञवेदितः सीतायाः—लाङ्गलपद्धतितः,—कृष्टक्षेत्रादित्येके, आदेवनाद्—आदहनात्—श्मशानात्, ईरिणात्—उषरभूमितः इत्यर्थः । )

तथाचैतेभ्योऽष्टाभ्यः स्थानेभ्यो मृदमाहृत्य पृथक्त्वेन अष्टौ समानाः पिण्डा निर्मातव्याः, सर्वाभ्यो मृद्भ्योऽल्पाल्पं संगृह्य अपरश्चैक इति नव पिण्डाः स्युः । ते च पिण्डास्तथा चिह्निताः कर्त्तव्याः, यथा दृष्ट्वा विज्ञायेत यदयं पिण्डो यज्ञवेदिमृन्निर्मितः, अयं च सीतामृदुत्पन्न इति, एवमपरापरोऽपीति ज्ञेयम् । तदुक्तम्

"सर्वेभ्यः संगृह्य नवमम्" ॥ ५ ॥
"समानकृतलक्षणानिति" ॥ ६ ॥

अथ तान् पिण्डान् वक्ष्यमाणेन मन्त्रेण कुमारीमुपनयेत् :—

"ऋतमेव प्रथमम्; ऋतं नात्येति कश्चन ।
ऋत इयं पृथिवी श्रिता, सर्वमिदमसौ * भूयात्" ॥इति॥

अथ कुमारीं ब्रूयादेषामेकं गृहाणेति । सा चेत् पिण्डेषु आद्यानां चतुर्णामेकतमं गृह्णीयात्, तर्हि तामुपयच्छेत् । नवमस्यापि पिण्डस्य (सर्वमृन्निर्मितस्य) ग्रहणे कन्या विवाह्या भवतीति केचित् तदुक्तम्:-

"पूर्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत्" ॥ ८ ॥

---

* अत्र "असौ" इत्यत्र कन्याया नाम निर्देश्यम् ।

"सद्भार्यमित्येके" ॥ १ ॥ इति *

गोभिलपुत्रकृतस्य गृह्यासंग्रहस्य द्वितीय प्रपाठके कुमार्या एकैकपिण्डग्रहणे कीदृशं शुभाशुभत्वं प्रकाशत इति वर्णितम्। तद्यथा:—

"वेदिपिण्डात् क्रियावती, सीतायाः फलते कृषिः।
अक्षोभ्या च ह्रदे ज्ञेया, गोष्ठे भवति गोमती ॥ २१ ॥
चतुष्पथे प्रकीर्णा ‡ स्याद् द्यूतस्थाने कलिप्रिया।
श्मशाने म्रियते भर्त्ता बन्ध्या भवति चोषरे ॥ २२ ॥
नवमे सर्वं पर्वते कन्यायाः परिगृह्यते" ॥ २३ ॥

शाखान्तरेत्वयं फलवादः (विनाष्टमं पिण्डम्) कन्याया अपत्यगतत्वेनोपलभ्यते। यथा:—

"गृह्णाना वेदि पिण्डं च प्रसूते याज्ञिकान् सुतान्।
सीतापिण्डन्तु गृह्णाना सुतान् सूते कृषीवलान् ॥
सर्वकामसमृद्धांश्च तृतीयस्य परिग्रहात्।
गोष्ठपिण्डग्रहाच्चापि गोमिनः सुखिनस्तथा ॥
इतश्चेतश्च गन्तारः पञ्चमेनास्थिताः सुताः।
षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः ॥
श्मशानपिण्डग्रहणात् विधवा जायते ध्रुवम्।
बन्ध्या वा विधवा सास्यादष्टमग्रहणादपि ॥
मिश्रमेतद्भवेत् सर्वं यतः पूर्वोदितं फलम्।
नवमस्य ग्रहस्तस्मात् शुभो वा यदि वाऽशुभः" ॥इति॥

विधुशेखरशर्म्मा।

---

* तैत्तिरीय गृह्यसूत्रेऽप्ययं विधिः ईषद् भेदेन दृश्यते। यथा—"प्राक्तिविषये द्वयाणि प्रतिच्छन्नानि उपनिधाय ब्रूयादुपस्पृशेति"। "नाना विधानि संस्थानि वेद्याः मास्तन इत्यादि"॥ पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिरिति"॥ ३ ख. १५—१७ सू.।

‡ व्याभिचारिणी।

# भारतस्य वर्णमाला वर्णलिपिश्च ।

कलिकाताविश्वविद्यालयपत्रिकायाः आंग्लवर्षीय—'जुलाइ' संख्यायां प्रकाशिते कस्मिंश्चित् प्रबन्धे साधूक्तं मे प्रियसुहृदा सुविदुषा पण्डितश्रीसतीशचन्द्रविद्याभूषण एम. ए.-महोदयेन—"भारते व्यवहृतानां विभिन्नानां भाषाणां संख्या पृथिव्या अवशिष्टांशेषु प्रचलितानां भाषाणां संख्यातो गरीयसी। कश्चिद् यूरोपीयः आंग्लवर्णमालाज्ञानसाहाय्येन नातिक्लेशेन यूरोपामेरिकादेशयोः सर्वतः पर्यटितुं प्रभवति, परं कस्यचिद् भारतवासिनः पक्षे प्रादेशिकभाषाविशेषस्य लिपिज्ञानसाहाय्येन प्रदेशान्तरे गमनं बह्वायाससाध्यम्। यदि कश्चिद् वङ्गवासी विहारभूमिं गच्छेत्, तर्हि स तत्र निजलिपिप्रकाराद्भिन्नं नूतनमेव कंचित् लिखनादर्शं पश्येत्। एवमेव स्याद् यद्यसौ उत्कले दाक्षिणात्ये वा भ्रमणं कुर्यात्"। इति। लेखकेनानेन आदौ वर्णमालानां विशेषतोभारतप्रचलितानां विभिन्नानां लिपिप्रकाराणां संक्षिप्तं सम्पूर्णं च इतिवृत्तं दत्तं, पश्चात् मन्तव्यत्वेनोक्तं यत् काले देवनागरवर्णलिपिरेव निखिलहिन्दूनां साधारणलिपिर्भविष्यति इत्यत्र सम्भाव्यता विद्यतइति। अस्मिन् प्रबन्धे अहमिदमेवमतं विशदीकर्तुं, दृष्टान्तेन च स्पष्टीकर्तुमस्यैव च अवश्यस्वीकार्यान् उपसिद्धान्तान् तत्र भवतां पाठकमहोदयानां पुरतः स्थापयितुं प्रयतिष्ये।

नाहं प्रत्नतत्त्ववित्, नचाहं भारतस्य वहिरन्तः प्रचलितानां वर्तमानानां विभिन्नलिपिप्रकाराणाम् इतिवृत्त-विकाशसंबन्धिगवेषणाफलानां पुनरुक्त्या भवतां धैर्यच्युतिं जनयितुमिच्छामि। ज्ञानं सर्वदैव हितम्। काठिन्यसंशयाभ्यामुपहतमपि च तत् मनोहारि भवितुमर्हति। परं व्यवहाराजीवित्वेन प्राकृतनागरिकत्वेन चाहं केवल उल्लिखितपण्डितवरप्रदर्शिताया एव अवस्थायाः प्रयोगजविघ्नापाकरणोपायाविष्काराय यतिष्ये।

विश्वविद्यालयशिक्षामभिजग्मुषो मे कलिकाता-प्रधानविद्यामन्दि

त्यागात् कतिपयवर्षानन्तरं भारतीयभाषासु रोमकलिपेः ( Roman character ) बहुलप्रचारसंसाधनार्थं काचित् समितिः प्रतिष्ठापिता । आंग्ल-फरासि-शर्मण्यदेशत्रयप्रकाशितेषु ग्रन्थेषु रोमकाक्षरैर्लिखितानां संस्कृत-पालि-जेन्दभाषामयविषयाणां पाठस्य नवीनत्वं तदापि मे मनसि अम्लानमेवासीत् । तदाहं सेमिटिक-( Semitic ) लिपौ प्रत्नतत्त्वविदां मते तु 'फिनीशीय'-( Phoenician ) मूलकवर्णमाला-वर्णलिप्योः ) मुद्रितस्य पारसीकस्य पाठाय भृशं यतमानआसम् । भ्रमपूर्णायाः पुनरुक्तिदोषदुष्टायाश्च रोमकवर्णमालायाः स्वरूपाणां idiosynerains ) व्युत्पत्तिलाभायकृतोद्यमेन मया भृशं काठिन्यमनुभूतम् । देवनागरवर्णैः संजातपरिचयेषुभारतवासिषु इयं वर्णमाला केवलं कतिपयबिन्दुसमष्टिरिव प्रतिभायात् । अहन्तु आशैशवम् आंग्लवर्णमालायां सुपरिचित आसम् । अतोऽहं तदानीन्तना बहवो युवान इव अमन्ये यद् भारतीयभाषासु सर्वासु प्राच्यभाषासु च रोमकलिपिप्रवर्त्तनेन बहवो वाह्याः असौकर्यप्रकारा अपगताः स्युरिति अतश्चाहं ब्राउन-ग्रियार्सनमहोदयाभ्याम् आमन्त्रितः सपदि तत्समितिं प्राविशम् । तदाहं संस्कृतवर्णमालाया मूल्यं सौन्दर्य्यं च, भारतीय-भाषासु देवनागरलिपिपद्धते रुपयोगित्वं च न सम्यग् उपलब्धवान् आसम् इति कृतं कथनेन । तदा मया न ज्ञातं यद् एषैव लिपिः विभिन्नैराकारैः सिंहल-तिब्बतब्रह्म-श्यामप्रभृतिषु भारतप्रान्तस्थितेषु देशेषु अन्येषु च सुदूरप्राच्येषु व्यवह्रियते इति । समितेः केचित् योग्यतराः सभ्या इव अहमपि कंचित् कालं रोमकवर्णलिपिप्रवर्तनाय कठोरम् यतमानोऽभवम् । प्रभुमण्डलं ( Government ) विषयस्यास्य सम्पादनभारमग्रहीत् भारतस्य विभिन्नप्रदेशेषु रोमकलिपेः प्रवर्तने महान् यत्नः आधीयत जनैः । विगतशतकस्य प्रथमाशीतिवर्षेषु पञ्चनद-प्रभुमण्डलं अस्याःप्रचाराय प्रायतत, खीष्ठधर्मप्रचारकाश्च यत्र यत्र अन्यस्याः कस्या अपि लिपेः सुप्रचलनं तैर्न परिलक्षितं तत्र तत्र एतां प्रावर्तयन् । परं पञ्चनद-प्रभुमण्डलं न सफलकाममभवत् ।

रोमकलिपिप्रचारसमितिरपि तत्त्वतो न किंचित् संसाधितवती समितिरसौ अचिरजीवा विस्मृतिसागरे निमग्ना मन्ये भूयसां पाठ.. महोदयानां श्रुतिपथमपि नागतवतीति।

'ए'-'बी'-'सी'-'डी'-त्यादिवर्णमालासमेता रोमकलिपिः तथा परिचितैः यूरोपीयैः आमेरिकावासिभिश्च स्पृहणीया भवेदेव । परम् आधुनिकीनां यूरोपीयभाषाणां पक्षे यद् भवतु तद् भवतु, भारतीय-भाषाणां पक्षे तु एषा पुनरुक्तिदोषदुष्टा विकलाङ्गी चेति नोपादेया अपिच तस्याः रचना न विज्ञानसम्मता, फिनीशीयमूलकस्य मौलिक-रूपस्य ( crudeness ) अद्यापि तत्र दर्शनात् । संस्कृतवर्णमालायां यद् विज्ञानसौष्ठवं बाहुल्येन विद्यते न तत् कदापि प्रागुक्तायां लिपौ अविद्यत । आधुनिकं भाषाविज्ञानं संस्कृतव्याकरणमूलकमेव। योहि "Grimm's Law"-( ग्रीमृस् ल ) इति प्रसिद्धो ग्रन्थः स संस्कृतव्याकरणीय-'शिवसूत्र'स्यैव यूरोपीयवेशेनविपरिणमनम् । अन्यच्च संस्कृतवर्णमाला स्वतः पूर्णा । शीतप्रधानदेशप्रभवाणां भाषाणामन्तर्भूतान् ऊष्म-वर्णोच्चारान् ( hissing sounds ) विहाय अन्ये यतिविधाः मानवस्वराः सम्भवन्ति ते सर्वे एव संस्कृतवर्णेषु अभि-व्यञ्जिताः । अतः सर्वथा निरवकाशेयं कल्पना यद् भारतीयाः संस्कृ-तलिपिस्थाने रोमकलिपिं गृह्णीरन् इति । अतः स्वाभाविकमेतत् यत् ब्राउन-ग्रियार्सन महोदयाभ्यां प्रतिष्ठापिता समितिः विलोपं गता इति

परं रोमकलिपिप्रवर्तनकल्पना न सम्यग् विलुप्ता । अधुनापि तस्याः समर्थकाः विद्यन्ते । सत्यपि तस्याः सम्पूर्णे अनुपयोगित्वे, सत्स्वपि च तस्य बहुषु सुस्पष्टेषु दोषेषु, यत् तेषां निजस्वं तस्मिन् तेषां ध्रुवो विश्वासो वर्तते । परम् एतत् ते विस्मरन्ति यत् रोमक-लिपेः आंग्लभाषायां व्यवहारोपयोगित्वापादनाय कानिचिद् रूपान्त-राणि स्वरगतपरिवर्तनानि च साधितानि, भारतीयभाषानिकराणाम् उपयोगित्वापादनाय पुनः केषांचिद् वर्णानां परित्यजनम्, अपरेषां

नवानां प्रवर्त्तनमपि प्रयोजनीयं स्यात्। अयमपि रोमकवर्णमाला प्रचलने अपरोऽन्तरायः।

किंच वर्ण-(letter) स्थाने पदांश-( Syllable ) व्यवहारकल्पना न मे सम्मता। तथा कृते 'ख'-इति एक वर्णं व्यवहर्तव्ये 'Kha' इति वर्णत्रयं व्यवह्रियेत, 'ख'-'घौ'- इति महाप्राणवर्णद्वयस्थले तालव्य 'श' इतिसंयुक्तध्वनिस्थले च द्वौ रोमकवर्णौ अपेक्ष्येताम्। विसर्गस्येव सर्वमहाप्राणवर्णस्य ध्वनिः 'h' व्यतिरिक्तेन अन्येन केनापि वर्णेन न प्रदर्शयितुं शक्यः स्यात्। रोमकवर्णमालायां एताः वाधा स्फुटा एव। सत्यमेतत् प्राच्यभाषातत्त्वविदः पाश्चात्याः रोमकवर्णमालायाः दोषाणां दूरीकरणाय कांश्चिद् वर्णान् कल्पितवन्तः (coined) भूयिष्ठं कृतकार्याश्च बभूवुः। परं पाश्चात्यविदुषामनुसरणम् किमेकान्ततः प्रयोजनीयम्? लिखितभाषामपेक्षमाणां सभ्यतावस्थाम् अनारूढवताम् आदिमवासिनां मध्ये ख्रीष्टधर्मप्रचारकैःसंसाधितेन रोमक-वर्णमालाप्रवर्तनेन तस्या उपयोगः उत्कर्षो वा न प्रमाणीकृतो भवति। यत् खासियापर्वतवासिषु सान्तालवासिषु च रोमकलिपेः प्रचलनं जातं तत् शिक्षकाणामेव अनभिज्ञतायाः जातिस्वभावस्य वा फलम्। यत्र यत्र रोमकलिपिः प्रवर्तिता तत्र तत्र तत्स्थाने भारतमूला कापि वर्णमाला अनायासेनैव प्रयोक्तुं शक्या।

भारतीयभाषासु रोमकलिपिव्यवहारे अपरा विद्यते महती आपत्तिरस्माकं जातीयगर्वमूला। इयं हि भावप्रधाना। ( sentimental ) परमस्माकं बहुषु कार्येषु भावस्य (sentiment) महान् प्रभावः दृश्यते। अतः स भावः कथमपि न उपेक्षणीयः। सत्यपि हितवाद-( Utilitarianism ) पक्षे बहु समर्थिते, विशुद्धस्य उपयोगस्य ज्ञानं न सर्वदा जनान् कर्मणि प्रवर्तयति। अस्माकं जातीयगर्वो वैदेशिकवर्णमालाग्रहणप्रतिकूलः। अधुना तु भारते वैदेशिकभाव-शब्द-रीतीनां महान् उत्कर्षो दृश्यते। परं सर्वस्यैव वस्तुनः कश्चिद् अवधिः वर्तते।

एतन्मया निश्चितं यद् बहव एव मे स्वदेशवासिनो यथा कारणा न्तरात् तथा जातीयभावाद्धेतोश्च भारतीयलिपीनां स्थाने रोमक लिपिप्रवर्तनं प्रतिकूलमिष्यन्तीति । दृष्टं मया विगतवर्षस्य सेप्टे म्बरमासस्य सप्तदशदिवसे प्रकाशिते 'पाइओनियर'-( Pioneer ) पत्रे पञ्चनदप्रदेशे रोमकलिपेः प्रवर्तनसमर्थनम्। अयं च हेतुः प्रदर्शितस्तत्र यत् प्रतिशतं त्रय एव नराः वर्णप्रयोगं जानन्ति । न च तेषां काचित् निर्दिष्टा वर्णलिपिर्वर्तते । परं यः सिद्धान्तः कृतः स न अपरिहार्य- त्वेन कल्पनीयः ( necessary ) एको हि प्रबलः अंशस्तत्र उपेक्षितः। स च विदेशीयलिपिप्रतिकूलो भावो जनानाम्, यो मया जातीयभाव इत्यभिहितः। या तु विप्रतिपत्तिः ( Contest ) उत्थापिता तत्र, सा उर्दु-रोमकयोः एकतरस्य उत्कर्षप्रतिष्ठापनविषयिणी । अहं तु न पश्यामि कथम् उर्दुमुपेक्ष्य रोमकम् अवलम्बितव्यम् इति । उभावेव समप्रभवौ । उभावेव च सर्वथा अविज्ञानमूलौ समदोषयुक्तौ च । अहं तु 'अ'कारोच्चारणाभिज्ञापने 'ए'-(a) आलिफ्-( alif ) इतिवर्णद्वयतः अकारस्यैव श्रेयस्त्वं स्वीकरोमि सुगमतरत्वात् युक्ततरत्वात् यथार्थ- त्वाच्च अकारस्य । किं च 'ए'-(a) वर्णस्य एतावन्ति उच्चारणानि वि- द्यन्ते यत् तेषां प्रदर्शनार्थं बहूनां शब्दानां प्रयोजनं भवति ।

एवं रोमकलिपिप्रवर्तनप्रस्तावः सर्वथा निरस्तः। एतेन, रोम- केण सह एकमूलकं तैरेव दोषैर्युक्तं तथैव च अविज्ञानमूलया रचनया ( arrangement ) समन्वितम् आरवीय-पारसीकेतिभाषाद्वयमपि नि- रस्तम्। भारतीयसम्प्रदायस्थेषु केषुचित् पारसीक प्रवर्तने रोमक- विषयिणी जातीयभावरूपा आपत्तिर्न प्रयुज्येत । परं बहुष्वेव आर- वीय-पारसीकेषु रोमकेणैव तुल्यविरोधविषयः । अपि च भूयसामेव मतं सर्वत्र जयेत्, संस्कृतवर्णमाला च सर्वाभ्यो योग्यतरा । अतः साधारण-मते गृहीते, तस्या एव अनुकूलं मतं प्रभविष्यति इत्यत्र नास्ति मे संशयः । अहं तु संस्कृतलिपेरेव पक्षं दृढं समर्थये इति कृतं कथनेन । इयमेव वर्णमाला प्राचीनचीनवासिनो वर्जयित्वा अन्यत्र

प्रथम्रे पूर्व-(एशिया-) भूभागे प्रचलिता । संस्कृतवर्णमालायाः श्रेष्ठ-त्वपक्षे नाहं बहु प्रपञ्चयितुमुत्सहे । परमेतद्विषये काञ्चिद् घटना माख्यातु मिच्छामि । एतत्तु प्रवादत्वेन परिणतम् यद् वार्द्धक्ये जना बहुभाषिणः किञ्चित् आत्मश्लाघिनश्च भवन्ति । अहमपि एतस्य व्य-भिचारत्वेन न मन्तव्यः । १८७० तमे आंग्लवर्षे अहं कलिकाताविश्व-विद्यालयस्य एम. ए. परीक्षायामुत्तीर्णो भूत्वा उपाधिं लब्धवान् । एतत्तु मया अध्यापकसाहाय्यं विनैव साधितम् । कस्माच्चिदनुकूलात् कालगणनाप्रमादात् हेतोः बि. ए. परीक्षायाः आगमपत्र-(Certificate) प्राप्तेः पूर्वमेवाहं एम. ए. उपाधिना भूषितोऽभवम् । मदीयः कश्चिद् बन्धुश्च मद्दशापन्नो ऽभूत् । तस्य च बन्धोः अकालमृत्युं गतस्य कति-पयवर्षाणि समतीतानि । उभावेव आवां १८७० वर्षे कलिकाताविश्वविद्यालयस्य तदानीन्तनानाम् आधुनिकानां च विषयाणां सुगमतमे विषये आंग्लसाहित्ये परीक्षार्थिनौ अभवाव । परीक्षायाः प्रथमचतुर्षु दिनेषु उभावेव आवां शोभनं लिखितवन्तौ । अधुना इव तदापि पञ्चमदिवसे परीक्षाविषयो भाषाविज्ञानमासीत् । परीक्षामन्दिरमुभौ एकत्र गच्छेव इति मे बन्धुः नियतकालात् प्रागेव मत् सकाशमाग-च्छत् । अहं तम् ईदृशस्य अकालागमनस्य कारणमपृच्छम् । स च विषण्णवदनो रुदन्निव उवाच । नाहं 'Grimms' Law' ('ग्रीम्स् ल') व्याकरणग्रन्थं सम्यक् अधीतु मपारयम्, अतोऽहम् अद्यतनपरीक्षा-याम् उपस्थितो भवितुं नेच्छामि इति । दौर्भाग्यवशात् बि.ए. परी-क्षासमये, सत्यपि तदानीं संस्कृतभाषायाः अवश्यपठनीयविषयेषु परिगणितत्वे, नासौ व्याकरणं साभिनिवेशम् अधीतवान् । सत्यमसौ आशैशवं संस्कृतमपठत् । परं संस्कृतवर्णमालायाः वैज्ञानिकीं स्थितिं संस्कृतव्याकरणस्य च शिवसूत्रं न तत्त्वतः उपलब्धवान् । सुवि-ख्यातैः शर्मण्य-( German ) पण्डितैः प्रदर्शितं वर्णविनिमयतत्त्वं तस्मै abracadabra ( वर्णसमावेशप्रकारविशेषः ) इव दुर्बोधं प्रत्य-भात् । अहं तु तं नैराश्यपरिहारायोपदिष्टवान्, अस्माकं वर्णमालायाः

शिवसूत्रस्य च रचनां ( arrangement ) तं स्मारितवान्। मुहूर्तपरमेव स 'क्लार्क'-( Clarke ) महोदयकृत-व्याकरण-तत्त्वविचार-( Comparative Grammar ) नामकग्रन्थे मोक्षमूलरप्रणीत-भाषाविज्ञानग्रन्थे ( Science of Languages ) च उपनिबद्धं स्वरविनिमयतत्त्वम् अवबोद्धुं कण्ठस्थं कर्तुं च समर्थोऽभूत्। अर्धघटिकान्यूनकाले एव च तस्य वदनमण्डलं प्रीतिप्रफुल्लमजायत नैराश्यंच अपगतम्। एवम् 'Grimm's Law' 'ग्रीमस् ल'-ग्रन्थस्य बाह्यकाठिन्यबहुलत्वेसत्यपि उभावेवावां परीक्षायामुत्तीर्णौ अभवाव।

अधुना सब्रह्म-सिंहलस्य विशालस्यास्य भारतमहादेशस्य का नाम एकाकारा ( Uniform ) वर्णमाला भवितुमर्हति इत्येतत् निर्णतव्यम्।

( क्रमशः )

श्रीसारदाचरण मित्रः।

---

## कृषिविज्ञानम्।

साम्प्रतं पुरुषार्थतया ये ये विषया मानवैः प्रार्थ्यन्ते, तेषु को गरिष्ठ इति प्रश्ने अर्थएव स इति सर्वे एकमत्या उत्तरयन्ति। तदुपार्जनं हि अधुना मानवानां मूलं मन्त्रं, तेनैव जीवनमतिवाहयितुं केऽपि कुण्ठिता न भवन्ति। यतोऽधुना अस्माकं सुखं, दुःखं, जातीया दैशिकी च उन्नतिरनेनैव परिचालिता भवन्ति। तदधुना विचार्य्यं कोनाम गरीयानुपायोऽस्माभिर्ग्रहणीयो येनास्माकं जातीयदरिद्रता अचिरादेव विलीयेत। तत्र प्रधानतो मूलधनं श्रमः क्षेत्रं च यथा दारिद्र्यहानाय भवति न तथा किमपि।

प्राचीनकालात् सर्वएव जानन्ति 'रत्नप्रसूः पृथ्वीति'। परिश्रमेण धनमितिसूत्रस्य प्राधान्येन भूमिर्भूमिरेव, अत्रैवहि परिश्रमस्यफलं तिष्ठति। अयं खलु सिद्धान्तस्य निष्कर्षः यतोऽपि धनागमो भवतु तत

सर्वं पृथिव्यामेव आयाति इति । प्राक्तनाः अस्या माहात्म्यं सम्यग-वगतवन्त आसन्। सभ्यतायाः प्रथमोदयाच्च कृषिः साधुतरमालोचिता आसीत् । कृषिरेव भारतीयानां प्रधानतमा उपजीविकासीदिति आवेदेभ्यः सर्वाण्यपि शास्त्राणि प्रतिपादयन्ति । अपिच अस्य भारतवर्षस्य प्रकृतिं समालोच्य इदमेव प्रतिभाति, कृषिकार्य्याय यथा तापादिकमपेक्षते तत्सर्वमत्रैव अनायासलभ्यमिति । सर्वएव मानवाः प्रकृतिमनुसृत्यैव जीवनोपायान् अन्विच्छन्ति । प्रकृतिःभारते एव कृषे रनुकूलां शक्तिं बहुतरं ददाति अतः पूर्वतएव भारतीयाः कृषिमेव जीविकानुकूलत्वेन आश्रितवन्तः ।

परन्तु महद्दुःखाकरमिदं यत् तथैव प्रधानावलम्बत्वेन निर्दिष्टा-मपि कृषिविद्यां वानरः कण्ठार्पितां मुक्तावलीमिव सर्वेवयमधुनाऽ-नादरचक्षुषा पश्यामः । अस्यच महदनिष्टकरं फलं पश्यतामपि अस्माकं चक्षूंषि नोन्मीलयन्ते नवाऽस्माकं चैतन्यं समुदेति । प्रतिवर्षं दुर्भिक्षेण रत्नप्रसोर्भारतस्य बहु सहस्रं मानवाः जठरज्वालाभिर्दग्धाः शमनातिथित्वं भजन्ते, वयन्तु तेषां वक्षःषु लीलयैव साहंकारंपदं निक्षिप्य उच्चैःकण्ठं घोषयामः —राज्ञः अनियतकरभारप्रपीड़िताएव एते मृत्युपथं गता इति । अस्मिन् हि दौर्भाग्यसङ्कुलेदेशे प्रतिशतं सप्ततिरेव कृषकाः,अपिच यत्र पृथ्वी प्रकृत्यैव उर्वरा प्रकृतिश्च सर्वथासर्वशस्यानुकूला तत्र दुर्भिक्षं नित्यमेव आयाति, किन्तु यत्र मार्किनप्रदेशे कृषकाणांसंख्या प्रतिशतं पञ्चदशतोऽपि न्यूना भूमिश्च नीरसतमा तत्र कोपि दुर्भिक्षस्य नामापि न जानाति । मन्ये अत्र मृत्तिकाया उर्वरतैव दुर्भिक्षवृक्षस्य सम्यक्पुष्टेः कारणं भवति । अस्यकारणं—भारते प्रतिशतं सप्ततिः कृषका यावन्ति शस्यानि उत्पादयन्ति मार्किन्देशीयाः पञ्चदशसंख्यका अपि ततो द्विगुणंफलं लभन्ते । इतोऽपि असंतृप्तास्तेऽक्रमशः कृषकसंख्यां वर्द्धयितुं यत्नवन्तो दृश्यन्तइति । १८७० ख्रीष्टीयाब्दे तत्र ३४ लक्षपरिमिताःकृषीवला आसन् अधुनातु तेषां संख्या कोटिपरिमिता । दृष्ट्वा चैतत् कृषिकर्म्मणि उदासीनानां

इंलण्डीयानामपि चेतश्चिन्तासङ्कुलं जातम्। किंचाधुना अध्यापक 'मूरो' द्भावितां रीतिमवलम्ब्य अमेरिका समधिकशस्यशालिनो भवि ष्यतीत्यत्र नास्तिसन्देहस्य लेशोऽपि।

कथमस्माकंदेशे उर्वरतमेऽपिक्षेत्रे समधिकसंख्यकाअपि कृषका न यथाशस्यान्युत्पादयितुं पारयन्ति कथं वा शस्यश्यामलेभारतप्रान्ते दुर्भिक्षक्लिष्टानां मानवानामाविर्भाव इति सुनिपुणं चेद् विचार्य्यते तदा एतदेव अस्मान् प्रतिभाति यदत्र कृषिकार्य्यस्य प्रणाली न समीचीना यतः श्रमानुरूपं फलं न प्राप्यते। एतत्तु पाश्चात्यकृषिविज्ञान पर्य्यालोचनयापि विशदं भवति। अतोऽस्माकं कृषिप्रथा आमूलतः संशोधनमर्हतीतिध्रुवम्।

यः खलु कृषिकार्य्यादेव विशेषतो धनागमं वाञ्छति तेन प्राक्क्षेत्रस्य मृत्तिका सम्यक् परीक्ष्या, तत्र उद्भिन्मूलं अनायासेन अन्तः प्रवेष्टुं शक्नोति नवा सा च तत्र दृढमूलाभविष्यति नवेति। अप्रविष्टमूला भूमौपतिता च उद्भित् कदापि न फलदायिनी भवति इयतः सैकते प्रस्तरमयेच स्थाने शस्योत्पत्तिर्नसम्भवति। मृत्तिकायाः शस्यशालित्वे जलावरोधकत्वशक्तिरपि विशेषतोऽपेक्षते परन्तु कठिनकर्दमवत् (Hard clay) जलेन वायुना च अनतिक्रम्या मृत्तिका शस्योत्पादने कदाचिदुपयोगिनी न भवति। यतो जलं वायुश्च उद्भिदामाहारस्य खनिजपदार्थविशेषस्य च संग्रहकर्त्ता। एवं वायुना जलेन शिशिरेणच मृत्तिका स्वभावतः कृष्टा भवति उर्वरतांच गच्छति सा चेद्वर्षणाधिक्येन सम्यग् धौताभवेत्। अतएव जलवायुसञ्चारार्थं क्षेत्रं वर्षणमपेक्षते। कर्षणंहि शस्य लाभे मुख्यं निदानम्।

उद्भिद् मूलैः मृत्तिकातोरसमाकृष्य देहस्य सर्वत्र विकिरति ततोऽस्य सारं स्वपुष्ट्यर्थमादाय अवशेष जलीयांशः पत्रतो वाष्पाकारेण परित्यजति। अपरञ्च सा सूर्य्यकिरणसाहाय्येन अम्लजं ( Oxyzen) वायुंपरित्यज्य अङ्गारकं संगृह्य स्वपुष्टिं विदधाति। खनिजं वस्तु यत् किमपि उद्भित्सु दृश्यते तत् मूलैरेव मृत्तिकात आकृष्टम्। वृक्षस्य

पत्रमेव प्रायः पाककृत्यं सम्पादयति, अतएव अत्यत उत्तोल्य रोपितस्य वृक्षकस्य आदौ पत्राण्येव शुष्कतां व्रजन्ति तस्मात्तदा पाकाग्नेर्पत्यर्थं आवरणेन तानि यत्नतः संरक्ष्याणि । पत्रहीना उद्भित् पाकस्थलीहीनजीववत् कदापि जीवितुं न शक्नोति । वृक्षस्य नाशे अयमेव सुगमोपायः । उत्पत्तिकाले एव पुनःपुनः पत्रस्य शुङ्गकस्य छेदनेन अहितकारिणं यं कमपि वृक्षं नाशयितुं सर्वएव शक्नुवन्ति ।

यत्र यस्य वृक्षस्याहार्य्यं वर्त्तते सा भूमिस्तस्यैव उपयोगिनी । वृक्षस्य खाद्यं प्रायः अम्लजं यवक्षारजं अङ्गारकमिश्रञ्च जलजं वाष्पं (Oxyzen, Nitrozen, Hydrozen Compound of Carbon) एतत्तु प्रायः जलाद् वायोश्च संगृहीतंभवति । वृक्षस्य विंशतितमोंशः खनिजपदार्थः । क्षेत्रञ्चेत् प्रजालकाम्लक्षारचूर्णकादिभिः (Phosphoric Acid, Patesh, Lime) खनिजपदार्थैं विरहितमपि कर्षणयोग्यं स्यात्, तदाधुना मानवोऽनायासेनैव क्षेत्रं तद्युक्तं कृत्वा तस्योर्वरतां वर्द्धयितुं शक्नोति । प्रायः सुधया सुधाकारणकपदार्थेनच भूमेः सारोभवति ।

यद्यपि तथाविधसारप्रयोगस्य आनन्त्यं सम्भवति, तथापि अत्र 'मूर'महोदयेनोद्भावितः सारो जनानां नितरामाश्चर्यमावहति । शस्यबीजेन सह विकीर्णे तस्मिन्सारे भूमिः स्वतएव वायुतः प्राचुर्य्येण आहार्य्यं संगृह्य प्रायः षोडशगुणाधिकानि शस्यानि उत्पादयति । एतेन मृत्तिकायाः पूर्वसञ्चितस्य सारस्य कापि हानिर्न भवति अपितु ततोऽपि तस्या उर्वरता बर्द्धतएव । यद्यपि कतिभिः शस्यबीजैः सह अस्य प्रयोगात् फलं न भवति, तथापि तानि बीजानि अव्यवहिते द्वितीये काले सम्यक् फलप्रदानि भवन्ति । तद्यथा—गोधूमेन चेदस्य सारस्य मिलितस्य प्रथमेऽवसरे वर्तुलकलायेन स सारः प्रयोज्यः द्वितीयेऽवसरे विनासारेणैव गोधूमे उप्ते सम्यक्फललाभो भविष्यतीति ।

दीर्घकालं यावत्कृष्टं क्षेत्रं प्रकृत्यैव उर्वरंभवतीति प्रागेवोक्तम् । यत्क्षेत्रं यद्बीजस्यानुपयोगि तत् तदुपयोगिमृत्तिकया पूरणेन सम्यक

तत् फलप्रदं भवेदित्यत्र नास्ति सन्देहः । यथा मानवः एवंविधनाने
पायैः क्षेत्रस्य उर्वरतां सम्पाद्य यथेष्टं शस्यं लब्धुं शक्नोति, ता
यत्नेकृते एकजातीयवृक्षस्य फलं विभिन्नास्वादविशिष्टं विभिन्नाव
यं च कर्त्तुं शक्नोति । मन्ये अस्माकं देशे एवं परिवर्त्तनविधया ( Hy
brid, Grafting etc.) परिचिता बहवएव आसन् । श्रूयते च विल्वा
मित्रादीनां नूतनतरफलोद्भावनम् । मन्ये नारिकेलगुवाकादय एकजा
तियोद्भिदपि तयोः फलस्यैव विभिन्ना परिणतिः, परन्त्वेतत् सर्वं
ध्येयम् । अत्रतु नास्ति सन्देहो यदस्माभिर्व्यवहृतः पुष्पफलादि प्रा
यशो वन्यावस्थायाः चरमं संस्करणम् । वन्यं पनसं आम्रञ्च समीक्ष्य
एतत् सर्वमेव विवेचयितुं प्रभवन्ति । यत्ने कृते पलपरिमितं फल
माढकपरिमितं कर्तुं अनेके प्रभवः । यस्याः क्षुद्रतरायाः भण्टाकया
व्यासपरिमाणं अर्द्धहस्तमपि न गच्छति तस्याएव व्यासः अमेरिका-
युक्तप्रदेशे हस्तपरिमितमभूत् ।

तत्रापितु कृषकैरेतदवश्यं स्मर्तव्यं—परिमितक्षेत्रे तदनुरूपेणार्थेन
तत्परिमितेन च श्रमेण यथा लाभो भवति तत्र अत्यधिकव्ययेन परिमि-
तातिरिक्तश्रमेण च न ततोऽपि अधिकतरलाभो भवतीति, प्रयोजना-
नुसारेण द्रव्यमुत्पाद्यमितिच । एतयोर्नियमयोः सम्यक् प्रतिपाल-
नेनापि सम्पूर्णफललाभो भवतीति न नियमः, अस्ति हि तत्र शस्यानां
महानन्तरायः क्षुद्रः कीटः । तथाच "एपिस्" नामा क्षुद्रकीटो यथा
शस्यस्य अनिष्टं साधयति न तथाऽन्यत् किमपि । एतन्तु रक्तवीज-
मिव न कदापि कोऽपि आमूलतोनाशयितुं शक्नोति । एकोहि कीटः
अशीतिकोटिपरिमितानि अण्डानि प्रसूते तथानवमपुरुषपर्य्यन्तं एके-
नैव संसर्गेण सर्वेषामधस्तनकीटानां प्रसवकार्य्यं मव्याहतं चलति ।
अतएव आधुनिकप्रथया तन्निवारणचेष्टा सर्वथा कर्त्तव्या एतदर्थंच
कीटविज्ञानम् ( Entromology ) अवश्यमध्येतव्यम् ।

भारतीया अधुना नानाविधकारणपरम्पराभिः दरिद्राः, अन्नाभा-
वेन च क्षीणसामर्थ्याः, अतः कृषिकार्य्याय बलीवर्द एव तेषां प्रधान-

पकरणम् । परन्त्वहो ! अधुना यथायुक्तपालनाभावेन प्राचां भार-
तीयानां तत् प्रधानतमा सम्पत्तिः गो-कुलं जीर्णं शीर्णं कथमपि कृषि-
कार्य्योपयोगि भवति अतः का नाम आशाऽत्र कृषेरुपयुक्तफललाभस्य ?
यपिच या धेनुरत्र शरावपरिमितदुग्धदाने कातरा, सैव पाश्चात्यैः
पालनप्रणालीविशेषैः 'बेल्जियम' देशे द्रोणपरिमितं पयो दुह्यते । येतु
स्थानमाहात्म्यात् तथाभवतीति प्रतिवदन्ति तैर्भारतान्तर्भूते हिसार-
नगरे गत्वा द्रष्टव्यं अस्माकं देशेऽपि पालनकौशलेन गवां पयोवृद्धिः
सम्भवति नवेति ।

अन्यच्च कृषकैः पशुचिकित्सा सम्यगध्येतव्या । पुरा या विद्या
सहदेवादिभिः राजकुमारैः सम्यगधीतासीत् । यद्दिच साधुना भारते
विलुप्ता तथापि पाश्चात्येषु वर्त्तते, ततएव शिक्षणीया अन्यथा पीडिते
गवि संक्रामकरोगाक्रान्ते पशुपाले बहुतरा क्षतेः सम्भावना विद्यते ।
किंच कृषकस्य कृषियन्त्रसंस्कारेऽपि पटुत्वमपेक्षत एव ।

तदधुना प्रेयांसो भारतीया भ्रातरः, पश्यत यूयं, यद्विज्ञानं
अस्माभिः निरक्षरस्य पांशुलपादिकस्य हालिकस्य स्कन्धे निक्षिप्तं
यच्चेत् भारतीयाना मवलम्बनं उन्नतेश्च कारणं द्रष्टु मस्माभिरिष्येत
तदा पाश्चात्यानामुद्भिद्विद्यायां ( Botany ) भूमिविज्ञाने ( Geology )
पशुचिकित्सायां ( Veterinary science ) पशुविज्ञाने ( Zoology )
रसायने ( Chemitary ) कीटविज्ञाने ( Entromology ) क्षेत्रविद्यायां
( Survey ) कृषकाणां प्रवेशः सर्वथा अपेक्ष्यते । श्रुत्वाचेदं नासिका-
माकुञ्च्य येखलु कथयिष्यन्ति अहो कलेर्माहात्म्यं ! यदधुना ब्राह्मणत-
योऽपि एतावद्विज्ञानमधिगत्य हालिकोभविष्यति इति तान्प्रतिव-
क्तव्यं नैतत् कलेर्महिमा यत् हालिकस्यापि विज्ञानपाण्डित्यमपेक्ष्यते
परन्तु काल-महिमवशादेव निरक्षरस्यैव हस्ते अस्माकमुन्नतेः प्रथमं
सोपानंवर्त्तते । आसीच्च पुरा शिक्षितानामेव इयं कृषिविद्या, ये खलु
राधिकारिणः येच अङ्कादिशास्त्रवेत्तारः वानिज्यकर्म्मकुशलाः तएव

वैश्याः कृषिकर्म कुर्वन्तिस्म नतु तदानीन्तना असभ्या निरक्षराः शूद्रा इति । तदधुना वृथा आत्माभिमानं परित्यज्य सर्वएव शिक्षिताः इालिका भवेयुश्चेत् तदा यथार्थोन्नतेः स्वल्पा आशा भवेत् ।

श्रीभीमचन्द्र शर्म्मा ।

———:o:———

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

संस्कृतविद्वांसः भारतीयद्रव्यव्यवहारश्च—वर्त्तमानेन भारतशासकेन वङ्गेभ्यो जनपदरूपाणि तदीयानि कानिचिदङ्गान्याच्छिद्य सार्द्धमासामभूखण्डैः "पूर्ववङ्गासाम" नाम्नः कश्चिन्नूतनो विभागः प्रजानां हितकाम्यया विनिर्मितः । वङ्गीयैस्तु सर्वैरैकमत्येन तस्य निकामं दुरोदर्कत्वम् विविच्य कृतोऽपि महान् प्रतिवादो नाद्यापि किमपि फलं प्रसूते । एतेन नितान्तं विमनायमानैस्तैर्भारतस्य दिनादिनमुद्भवन्तीं दुर्विषहां भयङ्करीमवनतिमालोक्य विदूयमानेन चेतसा इदं सङ्कल्पितं यत् क्रियतां नाम स्वैरमद्धेनेवास्मद्दुःखमपश्यता भारतशासकेन तदधीनानां निग्रहः, किमस्माभिः कर्त्तुं शक्यम् । परन्त्वयं नो निश्चयः, भवतु नाम यद्भवेत्, न वयमितः प्रभृति आत्मोदरं पूरयितुं वैदेशिकानां करुणाकटाक्षं वीक्षेमहि; अवश्यमेवास्माभिः साम्प्रतं यावल्लभ्यं स्वदेशोत्पन्नान्येव द्रव्याणि संग्रहीतव्यानि । वैदेशिकद्रव्याणामावश्यकत्वेऽपि इंलैण्डीयं तु न कथमप्यादेयमिति । न केवलं वङ्गीयैः, अपित्वपरापरप्रदेशवासिभिरप्ययं सङ्कल्पः सबहुमानमङ्गीकृतः—अङ्गीक्रियते, तदुचितं चेष्यते च ।

परिपाकरमणीयोऽयं सङ्कल्पः कथं नाम दरिद्राणां साधारणजनानां चेतःसु स्वल्पव्ययेन स्थिरं पदमादध्यादिति देशहिताभिलाषुकैरिदानीं रात्रिन्दिवं चिन्त्यते । एष्वेव सुगृहीतनाम्ना राजनीतिज्ञधुरन्धरेण श्रीमता सुरेन्द्रनाथ वन्द्योपाध्यायमहाशयेन कस्यापि लेखकस्य

मुखेन स्वसम्पादितायां पत्रिकायां यदुक्तं, तदस्माकं विशेषालोचन-महतीति उपरिष्टाद् विन्यस्यते:—*

"अस्मत्समाजे धनिकस्य वा निर्धनस्य वा, ब्राह्मणस्य वा शूद्रस्य वा कस्यचिद् हिन्दोरुपरि प्रभावं विस्तारयितुं वियेते खलु द्वौ समर्थौ सम्प्रदायौ । तौ हि विद्वद्भिश्च, निरक्षरैश्च, पुरुषैश्च स्त्रीभिश्च समं पूज्येते, वचनं च तयोस्तैर्गृह्यते । तौ खलु सम्प्रदायावस्मदीयानां पवित्राणां गुरूणां पुरोहितानां च । एकैको गुरुः, एकैकश्च पुरोहितो व्यवस्थापत्राणां दानसमये तेभ्यो वैदेशिकानि द्रव्याणि बहिष्करोतु । एकैकस्तयोः शिष्यैर्यजमानैर्वा सन्दर्शनसमये मातरं जन्मभूमिं प्रति पुरुषाणां स्त्रीणां वा कर्त्तव्यानि, स्वदेशीयानां द्रव्याणां व्यवहारोपयोगित्वम्, ऐक्यस्य शक्तित्वं, नियमविरोधस्य हेयत्वं, सुरापानस्य च पापत्वं कीर्त्तयतु । उपदेष्टव्या च तेन शान्तिः, ऐकमत्यं चेति" ।

मन्यामहे, पाठकानां स्मृतिपथमागच्छेत्, उक्तपूर्वमेवेदमस्माभिः पत्रिकाया अतीतायां संख्यायां—"समाजस्य नियमनभारः पुरा किलास्माकं धर्मशास्त्रविदां पण्डितमहोदयानामेवोपरि आसीत् ।

* "There are yet, two most powerful sections in our community who wield great influence upon a Hindu, be he rich or poor, Brahmin or Sudra. *They are respected and heard by the educated and illeterate and by men and women alike.* They are our Spiritual gurus and Purohits. Let every Guru or every Purohit when giving Vyavasta-Patras rigidly exclude from them all articles of foreign make. Let every Guru and every Purohit when he visits and on every occasion he visits his Shisyas or yajamanas recite the duties of a man and a woman to his or her mother Country, the utility at the use of country made articles, that unity is strength, litigation in an evil and drinking is a sin. He should also preach peace and harmony".—*The Bengalee, September 6. 1905.* ( Bi-weekly Edition )

इदानी मपि च समाजव्यवस्थार्थं तानेव जना आश्रयन्तीति"। अत्रा व्युपन्यस्तसन्दर्भलेखकेन तदेवाभिहितम्। सर्वथा अवितथमिदम् यदि सम्प्रत्यपि पूर्वमिव प्रभूतेनोत्साहेनास्मदीयैः गुरुभि'र्गुरूणां'मेव कृत्यं क्रियेत, पुरोहितैश्च 'पुरोहितानां'मेव, व्यवस्थापकैश्च पण्डितैः 'व्यवस्थापकानामेव, तर्हि मुक्तकण्ठं बाहूत्क्षेपञ्चोद्घोषयामः, नातिचिरमेवास्माकं समाजस्य देशस्य च स्फुरन्तीं भूयसीं कल्याणपरम्परामालोकयेम। यद्यप्यमी इदानीं स्वबुद्धिदोषेण वा, स्वकर्मपराधेन वा, प्रसादपराङ्मुखाया भगवत्या भवितव्यतायाः कोपेन वा जनानां चक्षुःषु "much neglected class" (तत्रैव, अत्यन्तमवज्ञाता श्रेणी) तथापि, न केवलं तेषु निसर्गपक्षपातिनो वयमेव, अपि तु यैः खलु तेऽवज्ञायन्ते, तेऽपि सम्भावयन्ति, ससाहसं प्रकाशयन्ति च यद् ब्राह्मणपण्डितैर्भारतस्य महोपकार आशास्यत इति। यावत् किं नालोच्यतां जनैस्तेषां विरुद्धम्, परन्तु दुर्लभ एव सः, यो हि प्राप्ते काले तेषां प्रभुत्वं नाङ्गीकुर्यात्, तेषामादेशं न गृह्णीयात्, तेषां मतं वा नानुसरेदिति। ईदृशा हि नरा मनसि कुप्यन्तोऽपि राजनियमनिवन्धनतेन मूर्द्ध्नापि तेषामनुशासनं वहन्त्येव अतः साम्प्रतं तेषां जनानामसन्तोषकारणं, युक्तं चेत् परित्यज्य, अयुक्तं चेत्, तदुपादेयत्वं तेभ्यः प्रतिबोध्य पुनरपि प्रागिव देशस्य समाजस्य च स्थितये देशकालाद्यनुरूपं ब्राह्मणपण्डितैरैकमत्येनोद्युज्यताम्। त एवात्र विशेषेणाधिक्रियन्ते। धर्मप्राणा हि भारतीयाः। क्षीणोऽपि नाद्यापि विनष्टस्तेषां चेतःसु धर्माङ्कुरः। धर्मोपदेशककथास्वेवैते निकामं श्रद्दधते। तत्प्रदर्शितमेव हि पन्थानं ते भक्तिपूर्वमाश्रयन्ते तेषामेव हि वचनेन प्राणा अप्येतैस्तृणाय मन्यन्ते। अतो महद्गौरव मधिष्ठितानां तत्रभवतां पण्डितानां गुरूणां, पुरोहितानां च वचनेन जनैः स्वदेशानुरागस्य, स्वदेशीय द्रव्यव्यवहारोपयोगादेः, समाजप्रविष्टानां तत्तेषां दोषाणां संस्कारस्य च शिक्षा यन्नितान्तं सुकरा भवेत्, कस्तत्र स्तोकमपि संशयमाशङ्केत। अस्माकं देशस्य समाजस्य च वर्त्तमाना-

हया यदि निपुणं चिन्त्येत, तर्हि तस्य चिन्तयितुश्चेतसि ध्रुवमिद-
दियाद् यद् ब्राह्मणपण्डितानां समाजादिव्यवस्थापनभारम् अन्य
रःसु निःक्षिप्य निश्चिन्तं द्राघीयोनिद्रासेवनस्य नायमवकाश इति।

नवद्वीपे पण्डितसमाजः, 'न्यायसिन्धु'श्च—अनतिचिरं नवद्वीप-
थैः संस्कृतपण्डितैः वङ्गीय-लेफ्टनाण्ट-गवर्णर-महाशयाय 'न्याय-
न्धु'रित्युपाधिरत्नं प्रदत्तम्। अत्रासन्तोषमावभानैः कैश्चिद् वङ्गी-
वृत्तान्तपत्रैः नवद्वीपपण्डितेभ्यः सुदुःसहा दुर्वादा उक्ताः, विगानो-
पादिका गाथाश्च काश्चिद् विरचिताः। संस्कृतभाषाया आश्रयभू-
नां पण्डितमहोदयाना मीदृशैर्निन्दावादैः साधारणानां जनानां
स्कृतभाषां प्रत्येव क्रमेण वैमनस्य मुदेति। प्रायः खलु सामाजिकैः
ह मिथः संवादसमये ईप्सितामपि गुणश्रवणं, दुर्भागधेयानामस्माकं
वोविवरं पण्डितानां दोषवादध्वनिरेव प्रविशतीत्यहो महत् कष्टम्।
ङ्गशासकेन प्रवर्त्तितां वङ्गानामुपागतामवस्थां पर्यालोच्य नवद्वीपी-
ः पण्डितैस्तस्य खलु महात्मनः को नु नाम 'न्यायो' विलोकितः,
न स सपदि तादृशस्योपाधेभाजनतामुपेत इति तेषां पत्राणामभि-
यः। यदि वस्तुत एव वङ्गशासकस्य कोऽपि तादृग् गुणः स्यात्,
र्हि तस्य प्रकाशनेन नवद्वीपस्थाः पण्डिता आरोपितात् कलङ्कादा-
नं' मोचयितुमर्हन्ति। अन्यथा अतिरभसकृतानां ईदृशां कर्मणां
ल्यतुल्येन विपाकेन सह तैरस्माकमपि हृदयं बलवद्विध्यते। किञ्च
पाधिदानमपि तैः किञ्चिद् विविच्य वस्तुतस्तद्योग्यायैव कर्त्तव्यमिति
विनयं सविस्रम्भं च निवेदयामः। दृष्टः खलु पूर्वमपि तेषामपात्रेऽपि
ाधिविनियोगः।

संस्कृत शिक्षार्थं दानम्—अन्येद्युः कलिकाताया: प्रधानन्याया-
करणे धर्माधिकरणिकस्य पुरतः केनापि व्यवहाराजीविना इदं
र्थितं यत्—बलाइचांद्दत्ताभिधेयेन केनापि धनिकेन स्वगृहे को-
संस्कृतविद्यालयः स्थापनीय इति स्वदानपत्रे उक्तम्, परन्तु कथं
य व्ययनिर्वाहो भवेदिति नोक्तमासीत्। एतत्परमेव स मृतः,

सहधर्मिण्यपि तस्य महात्मनः श्रीमती निस्तारिणी दासी नामाभि पतिलोकमुपागात्। अनया तु महाभागया समादिष्टं—५१,५०० रूप्यकाणि संस्कृतशिक्षार्थं देयानि मे सम्पत्तिकार्यकारकैरिति; तेषां विनियोगस्तु यया रीत्या समीचीनः स्यात् तदपि कार्यनिर्वाहकैरेव कर्त्तव्यमिति च। एतैर्महाशयैः प्रतिमासं १५० रूप्यकव्ययेन पञ्चविंशतेः संस्कृतविद्यार्थिनां भोजनव्ययः समपाद्यत, साम्प्रतं तेषां सम्मत्या तानि ५१,५००, रूप्यकाणि श्रीमत्या निस्तारिणीदास्याः कोषात् वङ्गीयशिक्षाविभागाध्यक्षसमीपं पञ्चविंशतेर्विद्यार्थिनां भोजनव्ययार्थं गच्छन्त्विति। साधुवादास्तस्मै पूतशीलाय दत्तमहाशयाय, तस्यचानुरूपायै सहधर्मिण्यै महाभागायै निस्तारिण्यै। दातुरिच्छाया विरोधेन न वयं किमपि विवक्षामः। परन्तु यदीयद्भिर्धनैः संस्कृतविद्यार्थिनां कृते द्वे गवेषणावृत्ती ( Research Scholarship ) स्थाप्येतां, तदा वरं भवेदिति सम्भावयामः। एतदर्थं संस्कृतोत्साहिभिर्धनिजनैः प्रयतनीयम्। वङ्गविभागशिक्षाध्यक्षेण कीदृशाय छात्राय भोजनार्थयुक्ता वृत्तिर्दीयत इति दिदृक्षामहे।

वेदज्ञस्य गौरवम्। जम्बू-काश्मीराधिपतेर्महाराजस्य 'रघुनाथपाठशालायां' कतिचिदध्यापकाः अपेक्ष्यन्ते। तत्र काव्यव्याकरणाद्यध्यापकानां मासिकं वेतनं त्रिंशद् रूप्यकाणि, चतुर्णां वेदाध्यापकानां तु एकैकं पञ्चविंशतिरिति निर्धारितम्। युक्तमेवेदं पाठशालाध्यक्षेण कृतम्। जडानां छान्दसानां तदेव बहु! हा भगवति वेद विद्ये, हतासि।

वृत्तिस्थापनम्—ज्ञायते साम्प्रतं चीनेषु प्रोषितैः श्रीमद्भिः जे. सी. दत्त-प्रमुखैः कैश्चित् स्वदेशहितैषिभिर्भारतीयैः भारतीयानां शिक्षार्थं साहायकाय स्वामि-श्रीदयानन्दसरस्वती प्रभृतीनां केषाञ्चित् सुप्रथितानां पुरुषाणां नाम्ना कतिचिद् वृत्तयः स्थापिता इति। प्रशस्यतरोऽयमेषां महाभागानां समुद्योगः।

अनावृष्टिः—अस्मिन् वर्षे पञ्जाव् प्रभृतिषु देशेषु अद्यापि वृष्टे-र्नामापि न श्रुतं तद्देशवासिभिः। कैव कथा शस्योत्पत्तेः? हाहा-ध्वनिरपि समन्ततः श्रूयते। किञ्च वङ्गेषु प्रायः सर्वत्र एतावज्जल-प्लावनं सञ्जातं येन यावन्ति शस्यानि नष्टप्रायाणि। अहो। विचित्रा खलु ऐश्वरीकी लीला। भारतवर्षे एव एकत्र जलाभावेन मानवाः कण्ठगतप्राणाः अपरत्रच प्रभूतजलेनोद्विग्नाः॥

वैदेशिकं लवणम्—कलिकातास्थ 'हितवादि' नामके साप्ताहिक-वृत्तान्तपत्रे केनचित् लवणव्यवसायि-कार्याध्यक्षेणेदं विज्ञापितं यत् तेन कदाचित् स्वोचितकार्याय 'शालिखा' नामकस्थाने (यत्र विदे-शेभ्यो लवणपूर्ण-धूमयानान्यायान्ति) गत्वा तेभ्यो लवणनिष्काशनं प्रत्यक्षीकृतम्। अथ तत्र लवणाभ्यन्तरे कोऽपिपदार्थः लवणविज-ड़ितो दृष्टः पर मनुभवितुंनशक्तं तत्किमिति। साभिनिवेशं निरूप्य यत् तेनावलोकितं तत्तु प्रकाशयितुमपि अस्माकं लेखनी वेपमाना अग्रतोनैकपदमपि उपसर्पति। अहो। स खलु लवणविजड़ितः पदार्थः कस्यचिद् गोः पाददेश आसीत्। तदवलोक्य स खलु महाशयः पोताध्यक्षं अपृच्छत् किमिति। तेनोक्तं-अनेनैव प्रकारेण अस्माभिर्यावतीयपशुमांस माहारार्थमस्माकं आनीयते। लवणमिश्रितं मांसादिकं कालविलम्बेन नष्टं न भवतीत्यतएवास्माभिरेषः पन्थाः समाश्रित इति। अहह। इतः परमपि किं श्रोतव्यमस्ति? कथं नास्माकं श्रवण विवरं बधीरं जातम्; यस्य नामाप्यस्माभि र्नोच्चार्यते तन्मिश्रितं लवणं वैदेशिक प्रभावात् अस्माकमुदरवर्त्ति भवति? धिगस्मान्? सत्यपि देशीय सैन्धवे कथं अस्माभि स्तत् अपवित्रतमं वस्तु व्यवह्रियते। न केवलं हिन्दूनां महम्मदीयाना मपि तत् सर्वथा परित्यज्यम्। शूकरमांसस्यापि तत्र सत्त्वमस्त्येव। अतः प्रार्थये ज्ञात्वा कदापि एवंविध मनुचितं कर्म्म नानुष्ठेयमिति।

शोकस्थानम्—वङ्गभाषायां सुप्रसिद्ध साप्ताहिकवृत्तान्तपत्रिकायाः

सम्पादकः स्वत्वाधिकारीच श्रीमान् योगेन्द्र चन्द्र वसुः चिराय प्राति-
ष्ठत इति नितरां दुनोत्यस्माकं चेतः। स खलु महोदयः वङ्गभा-
षायाः महदुन्नतिः संसाधिता। अपि च संस्कृत ग्रन्थानां यथा साधा-
रणेषु प्रकाशो विहित स्तेन न तथा केनाप्यन्येन। एतादृशस्य महो-
दयस्य स्वर्गगमने वङ्गवसुन्धरायाः वङ्गभाषायाश्च महतीक्षतिः सञ्जाता।

सन्धिः—श्रूयते रूस-जापानयोः सन्धिः संजातेति सुखाकरमेव।
अल्पशक्ति सम्पन्ना अपि जापान-देशीयाः यादृशं विक्रमं प्रदर्शित-
वन्त स्तादृशं न कुत्रापि केऽपि दृष्टवन्तः। जापानानां पराक्रमं वि-
लोक्य सर्वे एव यूरोपीया वज्रहता इव संजाताः। यातु, वयं शान्ति-
प्रियाः अतः शान्तिमेव प्रार्थयामः।

जयपुरे गीर्वाणवाण्यालयः—अत्र सर्वप्रकाराणि संस्कृतभाषा-
मयानि पुस्तकानि मुद्रितानि हस्तलिखितान्यपि संगृहीतानि वर्त्तन्ते।
साधुः खलु संकल्पोऽस्य प्रवर्त्तकस्य। वय मस्य सर्वथा समर्थकाः।
आशास्महे च अनुदिनमेवायं उन्नतिं गमिष्यतीति।

नूतनं संस्कृतपत्रम्—श्रूयते मथुरातः 'संस्कृतभास्करे'ति नाम्ना
किमपि पाक्षिकं संस्कृतपत्रं आगामि-वसन्तपञ्चमीमारभ्य प्रचलिष्य-
तीति। परं यावदस्य ग्राहकाणामर्द्धसाहस्रं न सम्पद्यते ताव न्न प्रच-
लिता भवेत् अत स्तद्रसिकैः तूर्णं तस्य सम्पादकः पण्डितश्रीराम-
लालशर्मा विज्ञापनीयः। पत्रादि प्रेषणस्थानम्—सतघरा, मथुरा-
नगरम्। अस्यच वार्षिकं मूल्यम् सार्द्धद्वयरूप्यकं भविष्यति।

प्रचारे दोषो नास्ति परं स्थायित्वे सन्दिह्यन्ते बहवः। वयं
संस्कृतपत्रिकाणां बहुलप्रचारं सदैव अभिलषामः।

सनातनधर्ममहासभा—श्रीमन्मदनमोहनमालवीय श्रीकृष्णजोषी
त्येताभ्यां महोदयाभ्याम् आगामिनि माघमासे कुम्भमेलावसरे श्रीप्र-
यागधाम्नि "सनातनधर्ममहासभा" इति काचित् हिन्दुधर्मविषयिणी
परिषदाहूता भविष्यति।

एतानिसंक्षेपेण तस्या महासभाया उद्देश्यानि—

(क) हिन्दुधर्मस्याधुनिकीं शोचनीयामवस्थांप्रति हिन्दुसाधारणानाम् ( हिन्दूनाम् ) अवधानाकर्षणम् येन च तेषां धर्मस्य स्वार्थी अक्षुण्णाः तिष्ठेयुः तद्विषये समवेतयत्नस्यावश्यकत्वप्रदर्शनम्।

(ख) भारतस्य विभिन्नांशेषु हिन्दूनाम् आचार-सम्प्रदायगते पार्थक्ये सत्यपि धर्मविश्वासः अभिन्न एव इत्यस्यप्रदर्शनम्।

(ग) हिन्दूनां शास्त्रग्रन्थेभ्यो भारतस्य निखिलप्रदेशवास्तव्यानां पण्डितप्रवराणां साहाय्येन प्रसिद्धानां धर्मसमाजाध्यक्षाणां श्रुति-स्मृतिपुराणमतानुसारिणाञ्च विभिन्नसम्प्रदायानांसम्मतान् इहामुत्रपरमकल्याणसाधकान् तत्वोपदेशसारान् संगृह्य कस्यचित् लघुग्रन्थस्य प्रणयनं परिग्रहणं च।

(घ) तस्य ग्रन्थस्य संस्कृते भारतस्य प्रधानासु देशभाषासुच प्रकाश्य वितरणार्थम्, आधुनिकया उदारशिक्षया सह धर्मग्रन्थज्ञानस्य संयोजनकुशलानां धर्मशिक्षकाणां विनयनार्थंच कस्याश्चित् समितेः स्थापनम्।

इदं प्रस्तावितं यत् अस्याः परिषदः माघकृष्णैकादशीमारभ्य माघशुक्लपञ्चमीं यावत् ( आंग्लजानुयारीमासस्य विंशदिवसात् ऊनत्रिंशदिवसं यावत् ) दशदिनानि प्रयाग गङ्गातीरे अधिवेशनं भवेत्।

तस्यां महासभायां ये खलु पण्डिता, मठस्वामिनश्च आहूताः भविष्यन्ति तेभ्यः सभाया न्यूनतो मासपूर्वं कश्चिद् लघुग्रन्थः वितरिष्यते।

सभायाः उद्देश्यं महत्। अस्माकमपि तस्याः सहानुभावो विद्यते।

## काशीस्थ रणवीर संस्कृतपाठशालीयपरीक्षाफलम्-

१८२७ शकाब्दे निम्नलिखिता श्छात्राः काशिक-रणवीर-पाठशालं वैभागिकीपरीक्षाया मुत्तीर्णाः—

शास्त्रि-परीक्षायाम् न्याये—२ य विभागे

द्वारिकानाथ काव्यतीर्थः ।

वेदे—प्रथम विभागे—

विद्याधर गौड़ः ॥

---

साधारण द्वितीयविभागे मध्यमपरीक्षायां वा—३ य विभागे-

सिद्धेश्वर भट्टाचार्यः, टीकाराम पाण्डेयश्च ।

---

साधारण प्रथमविभागे प्रथमपरीक्षायां वा २ य विभागे—

विद्यादत्त भट्टः ।

३ य विभागे—

१ । पूर्णानन्द त्रिपाठी ।

२ । धर्मदत्त त्रिपाठी ।

३ । पुरुषोत्तम त्रिपाठी ।

---

वेदे प्रथम परीक्षायां २ य विभागे—

खुसीराम गौड़ः ।

# मित्रगोष्ठी-पत्रिका।

( मासिकं संस्कृतपत्रम्। )

"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्"।

ऋग्वेदः।

तृतीये वर्षे } १८२७ शकाब्दाः, आश्विनः { षष्ठ संख्या

## वैदिककालः।

मित्रगोष्ठीपत्रिकायाः पञ्चमसंख्यायां वैदिककालनिर्णये नानाविधानि मतान्युल्लिख्य अस्मद्देशीयसंस्कृतपण्डितानां मतानां शुश्रूषापि विज्ञापिता मित्रगोष्ठीसभ्यैः। अतस्तत्र विषये यथामति किञ्चिद्वक्तुमिच्छामः। अन्यथा "नापृष्टः कस्यचिद् ब्रूया" दिति निषेधस्य उल्लंघनं स्याद् विशेषतश्च तादृशि गहने विषयेऽस्माकमल्पमतीनाम् अनुचितएव लेखनी प्रयोगः।

गरीयसां मीमांसकादीनां केषाञ्चित् प्राचां मते वेदानामुत्पत्ति रेव नास्ति। सुतरां तस्याः कालनिर्णयोऽसङ्गत एव। परन्तु वेदान्तभाष्यकाराणां शङ्कराचार्य पादानां नैयायिकानाञ्च मते वेदाना मुत्पत्तिरस्ति सातूत्पत्तिः संसारसृष्टेः प्रागेव बभूव। भगवान् हिरण्यगर्भो हि वेदद्वारा कार्याकार्य मुपदिश्य संसारं ससर्ज्जेति तेषां मते युक्तिः। यद्यपि सा युक्ति रस्माकं शिरसा धार्या तथापि हृदयङ्गमा न भवति सर्वेषामित्यतो लौकिकीं युक्ति मनुसरामः।

वेदप्रकाशस्य बहवः कालाः श्रूयन्ते, बहुकृत्वो हि वेदानां सम्प्रदायोऽलुप्यत। एकदा पुरा लुप्ते वेद सम्प्रदाये अत्रि-वंशजो 'दत्त' नामा मुनिरुत्पद्य स्मृत्वा लुप्तान् वेदान् प्रकाशयामासेति शिशुपालवधे महाकाव्ये चतुर्द्दशसर्गे ७१ श्लोकेन महाकविना माघनोक्तम्-यथा—

"सम्प्रदाय विगमा दुपेयुषी
रेष नाशमविनाशि विग्रहः।
सर्त्तुमप्रतिहतस्मृतिः श्रुती-
र्दत्त इत्यभवदत्रिगोत्रजः" ॥ इति।

एतेन दत्तात्रेय समयेऽपि वेदानां लिपिवद्धाग्रन्था नासन्निति सम्भाव्यते अन्यथा "श्रुतीः सर्तुमभव" दित्युक्ति र्न सङ्गच्छते श्रूयते आचार्या दिति व्युत्पत्त्या श्रुतिशब्दोऽपि श्रवणेन ज्ञातव्यबोधको भवति। भागवतेऽपि दत्तात्रेयोपाख्याने लुप्तानां वेदानां पुनः सम्प्रदायप्रवर्त्तकत्वात् दत्तात्रेयो विष्णो रवतार इत्युक्तम्। तस्मात् दत्तात्रेयस्य कालो वेदप्रकाशस्य काल इति ज्ञायते। स दत्तात्रेयः कदा जन्म लेभे कदावा वेदान् सस्मारेति पण्डितैर्निर्णीयतां स समयः। तदनन्तरं पुनरपि वेदसम्प्रदायोऽलुप्यत। लुप्ते वेदसम्प्रदाये भगवान् कृष्णद्वैपायनो नानास्थानेभ्यः संगृह्य श्रुतीः सहस्रेण शाखाभि र्विभेजे इत्यत एव 'वेदव्यासेति' तस्य ख्यातिर्बभूव। ततः प्रभृति वेदा लिपिवद्धा वभूवुरिति सम्भावयामः। इत्थं ततः प्रभृति वेदानां लिपिवद्धा ग्रन्था अजायन्तेति निर्णीयतां पण्डितैर्वेदव्यासस्य वेद विभागसमयः। ततः पुनरपि वेदानां सम्प्रदायोऽलुप्यत, शिष्योपशिष्येभ्यो मिथः प्रदानम् अर्थात् शब्दोच्चारणपूर्व्वमुपदेशः सम्प्रदायः। लुप्ते तस्मिन् वेदसम्प्रदाये 'वाजिरावपेशवा" नामकः सुगृहीतनामा कश्चिन् महाराष्ट्रीयो राजा वेदसम्प्रदायम् पुनः प्रवर्त्तयामास, स एव सम्प्रदायो विस्तीर्णः सन्नद्यापि तत्र तत्र देशे वर्त्तते। अतः स समयो निर्णीयतां पण्डितैः। एवं त्रयः काला वेदसम्प्रदायस्य प्रवर्त्तका इति। एकविधो वेदकाल निर्णयः।

यदि च वेदसम्प्रदायप्रवृत्तिकाला इत्थं निर्णीयन्ते तथापि वेदोत्पत्तेः कालः क इति प्रश्नस्तदवस्थ एवास्ति, न तस्य किञ्चिदुत्तरं जातमिति च दृश्यते—यदिच ब्रह्मैव वेदान् प्रणिनाय उपदिदेश वा तथापि वेदद्रष्टॄन् ऋषीनेव वयं वेदप्रणेतॄन् मन्यामहे। ऋषयो हि

श्वामित्रादयः परोक्षेण दिव्येन ( ज्ञानमयेन ) चक्षुषा ब्रह्मणः सकाशात् वेदान् ददृशुः ततस्ते तान् वेदान् मनुष्येषु प्रकाशयामासुरिति अत ऋषिभ्यो वयं ऋणिनः। तद्गुणश्च वेदोपदेशग्रहणमेव, स्वाध्यायेन तस्माद्गुणाद् वयं मुक्तिं लभामहे इति तानेव ऋषीन् वेदकर्तॄन् वयं ब्रूमः। एवञ्च वेदानां कर्त्तारो बहव एव ऋषयः न तु कश्चिदेकः। यस्य मन्त्रस्य यः ऋषिः तस्य मन्त्रस्य तमेव कर्त्तारं प्रणेतारं वा जानीमः। यथा गायत्र्या विश्वामित्रऋषि रिति गायत्रीमन्त्रस्य विश्वामित्रमेव प्रणेतारं कर्त्तारं वा कथयामः।

गायत्री च च्छन्दसां ( वेदानां ) माता।

श्रीमहेशचन्द्र शर्म्मा।

---

## शुक्तिरजतम्।

( पूर्वताऽनुवर्तते )

न च रजतमपि शुक्तिकायाः समग्रेष्वप्यंशेष्वध्यस्यते; न हि शुक्तिकाया नीलादिभागेऽपि नयनसंयोगे रजतमारोप्यते;—यतः शुक्तिस्वरूपविशेषज्ञानसामग्री नीलपृष्ठादिस्तत्र रजताध्यासे प्रतिबन्धकतां करोति। अथ शुक्लस्याक्चिक्यादिविशिष्टे भागे चक्षुः संयुज्यते, भवेदेवाध्यासः; नहि तद्भागे तदानीं शुक्तित्वरूपविशेषज्ञानसामग्र्यस्ति। ननु चाकचिक्यादिविशिष्टभागे यदा नयनं सन्निकृष्यते, तदापि शुक्तिज्ञानविशेषसामग्र्यस्ति ततश्च यथा नीलादिभागे नयनसम्बन्धे नाध्यासः, तद्वदिहापि मास्तु—इति चेत्? इदमत्र समाधानम्—यदि च तत्र चाकचिक्यादिकं न शुक्तिज्ञानस्य प्रतिबन्धकम्, अपितु तत्सामग्र्येव—भवति हि तादृशचाकचिक्यसद्भाव एव शुक्तिज्ञानम्, तथापि दूरत्वाल्पालोकादिदोषेण शुक्तित्वाभिव्यञ्जकनीलपृष्ठांश नयनासंयोगेन च, न तादृश चाकचिक्यादिमात्रं शुक्तिज्ञानसामग्री; ततश्च रजताध्यासे न कोऽपि बाध इति।

अयमेव न्यायः समुद्रोदके नीलशिलाध्यासस्थले। तत्रापि यथो दकस्य शुक्लरूपात्मकं जलराशित्वादिरूपं च विशेषदर्शनं नीलशिलातलाध्यासस्य प्रतिबन्धकम्, एवं शुक्लरूपदर्शनसामग्री जलराशित्वरूपविशेषदर्शनसामग्री च प्रतिबन्धिके। जलराशित्वरूप विशेष दर्शनसामग्री च तरङ्गादिरेव। तत्र दूरत्वादिना इन्द्रियदोषादिना च तरङ्गादिर्न गृह्यते। अतो जलराशित्वादिरूपविशेषदर्शनसामग्र्यभावात् नीलशिलाद्यध्यासे न कश्चिद् विरोधः विस्तृतवस्त्रखण्डे वस्त्रविस्ताररूपविशेषदर्शनसामग्री-सद्भावादेव न प्रथमं पुण्डरीकमुकुलाध्यासः। अथ कर्त्तनादिना तदेव वस्त्रखण्डं मुकुलाकारं क्रियते, ततः प्रतिबन्धकाभावाद् भवेदेव पुण्डरीकाध्यासः।

पूर्वोक्तेषु निखिलेष्वपि मतेषु अविद्यापरनामकाद् अज्ञानादेव जगदुत्पद्यत इति स्थितम्। एतादृशं रजतं प्रातिभासिकनाम्ना ख्यायते। यावद्धि 'नेदं रजतमिति' ज्ञानं नोदेति, तावत् सत्यरजतात् तस्य रजतस्य न कोऽपि भेद उपलभ्यते। यथा सत्यरजतदर्शनेन हर्षपुलकादय आविर्भवन्ति, प्रातिभासिकरजतदर्शनेऽपि तथैव भवन्ति। इयांस्तु तयोर्भेदः—प्रातिभासिकस्थले त्वरितमेव विशेषज्ञानेन अज्ञानं निवर्त्तते, अज्ञाननिवर्त्तनाच्च तत् कार्यं रजतमपिनिवर्त्तते, न च चिरं प्रातिभासिकेन पदार्थेनास्माकं व्यवहारः सिध्यति। सत्यरजतस्थले तु (व्यावहारिके) न तथा शीघ्रं तत्वज्ञानोदयः;अत एव तेनाधिककालपर्यन्तं व्यवहारः क्रियते। वस्तुतस्तु यथा प्रातिभासिकं रजतं मिथ्या—अनिर्वचनीयम्, सत्यरजतमपि तादृशमेव। भेदस्त्वयं यदेकस्य किञ्चित् पूर्वम् अपरस्य तु किञ्चित्परं निवृत्तिरिति। अयमेव अनिर्वचनीयवादिनां वेदान्तिनामभिप्रायः।

मीमांसकास्त्वाहुः—'इदं रजतम्' इति नेदमेकं ज्ञानम्, अपितु ज्ञानद्वयमात्र वर्त्तते। एकं स्मृतिरूपम्, अपरमनुभवरूपम्। अत्रापि 'इदमंशो'ऽनुभवः, 'रजतांश'स्तु स्मृतिः। काचकामलादिनयनदोषेण पुरोवर्त्तिनि शुक्तिपदार्थे चक्षुःसंयोगे सति शुक्तिकाया इदन्त्वांश-

त्वं गृह्यते, न तु शुक्तित्वांशोऽपि । तस्मिंश्च गृहीते शुक्तिकाया रज-
त साहश्यसद्भावात् रजतविषयिणी स्मृतिर्जायते । यद्विषयिणी
ृतिः, तत्खलु पूर्वमनुभूतमित्यवश्यं सा स्मृतिः प्रकाशयेदेव; तादृश
व हि तस्याः स्वभावः प्रकृते तु नयनादिदोषप्रभावेण स्मृतिर्न तथा
काशयितुं शक्नोति । अतो रजतत्वांशे वस्तुतः स्मृतिरूपमपि ज्ञानं
मृतित्वेनाप्रकाश्य अनुभवरूपेण प्रकाशते । ततश्च इदन्त्वांशज्ञानम्
अनुभवः ) रजतत्वांशज्ञानं ( स्मृतिः ) चान्योन्यं भिन्नमपि उक्तेन
कारेण न भिन्नमिव भाति । अतो युज्यत एव 'इदं रजतमिति' अनु-
वरूपं ज्ञानम् ।

स्थूलतोऽयं खल्वेषामाशयः—शुक्तिकायां चक्षुःसंयोगे सति,
यनदोषवशेन शुक्तिरूपविशेषांशस्य ज्ञानं नोदेति, किन्तु इदन्त्वांश-
ात्रस्यैव । तेन च ज्ञानेन रजतस्य स्मृति र्जायते । रजतस्य ज्ञानं
मृतिरूपमपि दोषादेव न तथात्वेन प्रकाशते, अपि त्वनुभवरूपमेव
ाति । तादृशं ज्ञानं च सम्मिलितं सत् 'इदं रजतम्' इत्याकारकं
वति । ततश्चोपपन्न एव तदुपगतो निखिलो व्यवहारः । अयमेव
ख्यातिवाद' इत्युच्यते ।

नैयायिकास्तु ब्रुवन्ति—न किञ्चित् प्रातिभासिकं रजतमुत्पद्यते,
पि रजतस्य स्मृतिः न वा तस्याः स्मृतेर्दोषवशेनाभानम्; किन्तु
क्तिकायां नयनसंयोगे सति नयनदोषदूरत्वास्पष्टालोकाद्यपराधेन
क्तिकायाः शुक्तित्वरूपो धर्मो न गृह्यते, कल्पते च तत्र तत्र साद-
ाद्रजतत्वरूपं धर्मान्तरम् । तथाच शुक्तिकैव रजतत्वरूपेण कल्प्यते
ते । अयमेव 'अन्यथा ख्यातिवादः' ।

अत्रापराण्यपि मतान्तराणि यथावकाशं प्रदर्शयिष्याम इति ।

विधुशेखर शर्मा ।



## नामपदानामुत्पत्तिः ।

गौरश्वः पुरुषो हस्तीत्यादीनां नामपदानां पूर्वं कथमुत्पत्तिर्जाता कथं नु गोर्गौरुच्यते, नत्वश्वः; कथं वाश्वः अश्वपदेनोच्यते, न तु गौरिति विदुषां कश्चिद् सविशेषानुशीलनविषयो भवितुमर्हति । तेन हि प्रथमं तत्तत्पदप्रयोक्तॄणां तत्तद्वस्तुविषये किं कियद्वा चिन्तनमासीदिति बोद्धुं शक्यते । आरब्धे सन्दर्भे तदेव किञ्चिदालोचयिष्यते

नेयं चिन्ता नवीना, नैरुक्तैर्वैयाकरणैश्च बहुपूर्वमेवायं विषयश्चिन्तितः । तेषामेव मतानीह प्रदर्श्यन्ते ।

आचार्यस्य शाकटायनस्य यास्कादीनां नैरुक्तानां च मते नामान्यविशेषेण आख्यातपदोत्पन्नानि । तथाच "भावप्रधानमाख्यातम्" इति यास्कोक्तेः क्रियाप्रधानानि पचतीत्यादीनि पदानि आख्यातानि । एतेभ्य आख्यातेभ्य एव सर्वेषां नाम्नामुत्पत्तिः । एवं च यस्मिन् वस्तुनि या क्रिया दृष्टा, तत्क्रियानुसरणेन तयैव क्रियया तस्य वस्तुनो नाम क्रियते, यथा पचतीति पचनक्रियया तत्कर्तुः पाचक इति नाम। यथाचेदं तथापराण्यपि सर्वाणि नामानि तादृशरीत्या आख्यातजातानीति तेषामभिप्रायः ।

अयं च सिद्धान्तो वैयाकरणेष्वपि केषाञ्चित् सम्मतः, अपरैस्तु वैयाकरणैः, नैरुक्तेनापि सता गार्ग्येण च न तन्मतमाद्रियते । एतन्मते नामपदानां कानिचिदेव आख्यातजानि, न तु सर्वाण्यपि । अतएवैभिरुच्यते :—

सत्यं, तानि खलु नाम पदानि युष्माकमिव अस्माकमपि मते आख्यातजानि, येषां वक्ष्यमाण लक्षणमस्ति । तथाहि—

त्रिविधानि खलु नामानि दृश्यन्ते-कानिचित् प्रत्यक्षक्रियाणि, यथा—कारको, हारका इति; अपराणि प्रकल्प्यक्रियाणि, यथा—डित्थो, डवित्थः, अरविन्दोऽर्वाङ्, इति । एवं सति, येषु नामसु उदात्तादिः स्वरः, प्रकृतिप्रत्ययौ च लक्षणशास्त्रविहितया उपपत्त्या युक्ताः धातुना चानुगताः, तानि नामानि आख्यातजानि न त्वेभ्योपराण्यपि ।

थाविशेषेण सर्वषामेव नाम्नामाख्यातजत्वं स्वीचिकीर्ष्यते, तर्हि स
दी तत्पक्षेऽस्माभिः प्रदर्शितान् दोषानुद्धरतु ।

१ । सर्वषां नाम्नामाख्यातजत्वे—यया क्रियया एकस्य वस्तुनो
म क्रियते, यदि सैव क्रिया अन्यस्य कस्यापि स्यात्, तर्हि तस्यापि
स्तुनः तयैव क्रियया नामकरणमापद्यते । एवं च यदि 'अध्वानम-
श्नुत' इति तत्कर्तुः प्राणिनः 'अश्व' इति नाम स्यात्, तर्हि अनश्वो-
पि यदि कश्चित्प्राणी अध्वानमश्नुवीत, तदा सोऽपि 'अश्व' इति
थनीयः स्यात् । न तु कथ्यते । इत्थं, यदि तर्दन क्रियायोगात्
णस्य 'तृण' नाम, तर्हि यः कश्चित् तृन्द्यात् स एव तृणपदवाच्यो
वतु न तु भवति । तथा च एकक्रियायोगादनेकेषाम् एकनामधेयत्व-
सङ्ग इत्येको दोषः ।

२ । अन्यच्च, क्रियाहेतुके हि नामधेयप्रतिलम्भे यावतीभिः क्रि-
भिरेकं द्रव्यं संयुक्तं स्यात्, तावतीभिरेव क्रियाभिस्तस्य नाम
ात् । तथा च येयं गृहस्य स्थूणा, सा खलु 'दरे ( गर्त्ते ) शेते' इति
स्या "दरशयेति" नाम भवितुं युक्तम् । एवमस्यां वंशः सज्यत
ति सञ्जनीति नाम धेयं भवतु । न तु भवति । तथाच अनेकक्रिया-
गादेकस्य अनेकनामधेयप्राप्तिप्रसङ्ग इत्यपरो दोषः ।

३ । किञ्च, पुरुषाश्वादीनां नामपदानां यौ खलु प्रकृतिप्रत्ययौ
ायलक्षणानुगतौ, ताभ्यामेव प्रकृतिप्रत्ययाभ्यां यथानियमं तानि
दानि कथनीयानि;—यथा हि तेषां पदानामर्थः सुबोधो भवेत । एवं
, 'पुरि शेते' इति निमित्तमादाय पुरुषः 'पुरुषो' भवतीति युष्मा-
मरुच्यते; परन्तु 'पुरुष' इति कथिते, तस्य अवयवार्थः न स्पष्टं प्र-
शते, अतः 'पुरुष' इत्यनुक्त्वा "पुरिशय" इत्येव कथनीयम्, तथा-
र्थबोधसौकर्यं भवेत् । एवम्, 'अध्वानमश्नुत' इति 'अश्व' इत्य-
क्त्वा 'अष्टा' इत्येव वाच्यम्; तृणमित्यकथयित्वा 'तर्दन' मिति
क्यम् । न तु कश्चित्कथयति । न च तेषु तेषु पदेषु विद्यमानाना-
पि क्रियाणां परोक्षीकरणे किमपि कारणं दृश्यते ।

४। अपिच, शाकटायनादयो हि निष्पन्नपूर्वे नामधेये कतमस्य धातोः कतमेन प्रत्ययेन तन्निष्पन्नमिति विचारयन्ति, 'पृथिवीति' नामधेयं पूर्वमेवोत्पन्नम्, अथ तैरस्य प्रकृतिप्रत्ययादिकमन्विष्यते, कथ्यते च 'प्रथनात् पृथिवीति'। अत्र जिज्ञासामहे—यदीयं प्रथनात् पृथिवी, तर्हि पूर्वमस्याः प्रथनं नासीत्, अथ केनापि प्रथनं कृतमित्यायाति। तत्र कोनामास्याः प्रथनमकरोत्, किमाधारश्चायमासीत्तदानीम्, नहि तदा कश्चिदस्याधारः सम्भवति*। ततश्च प्रथनस्यैवाभावेन प्रथनादिक्रियामूलकान्येतानि नामपदानीति न शक्यते वक्तुम्।

५। अयं चापरोऽद्भुततरः पदसंस्कारः शाकटायनेन प्रदर्शितः। 'सत्यम्' इति किमपि पदमस्ति। तदिदं तेनेत्थं साध्यते—अस्तेर्धातोः 'सत्' इति, एतेश्च (इणगतौ) ण्यन्तं रूपं कृत्वा 'य' कारमात्रं गृहीत्वा 'सत्' इत्यस्योत्तरं स्थाप्यते। ततः 'सत्यम्' इति पदं जायते अर्थश्चास्य—'सन्तम् अर्थम् आययति-प्रत्याययतीति'। तदनेन दृश्यते शाकटायन एकैकस्मात् पदात् पदान्तरार्द्धान् संस्कृतवानिति,—यत्र खल्वर्थो न शब्देनानुगतः, यत्र च शब्दोऽपि न धातुना सम्यक् साधयितुं शक्यते। एतादृशेषु स्थानेषु 'सर्वाणि नामान्याख्यातजानीति' केवलमात्मनः प्रतिज्ञां रक्षितुं काशकुशालम्बनमिव कृतं शाकटायनेन।

६। अन्यदपि, अभियुक्तैरुच्यते—क्रिया नामेयं किमपि सत्त्वमाश्रित्य तिष्ठति; अतः क्रियातः पूर्वमेव सत्त्वस्य सद्भावो वक्तव्यः। अन्यथा तदभावात् किमाश्रित्येयं क्रिया तिष्ठतु। तथा च यदि क्रियातः पूर्वमेव सत्त्वस्य स्थितिः प्रमाणसिद्धा, तदा अपरकालीनया क्रियया पूर्ववर्त्तिनः सत्त्वस्य संज्ञा कथं नाम सङ्गच्छेत? संज्ञा खल्वियं द्रव्यस्योत्पत्तिसहभूता; क्रियानिरपेक्षया हि संज्ञया अभिसम्बन्धमेव द्रव्यमुत्पद्यते। अतो नेदमुपपद्यते सर्वाणि नामान्याख्यातजानीति।

---

* अयं चान्यतमो हेतुरीश्वरनिराकरणे मीमांसकानाम्। दृश्यतां-मीमांसा श्लोकवार्त्तिकम्, (सम्बन्ध चेपपरिहारः), एवं मित्रगोष्ठी-पत्रिका १ वर्ष ११।१२ सं "मीमांसादर्शने ईश्वरवादः"।

शाकटायनानुयायिभिः नैरुक्तैश्चैत आक्षेपा इत्थं प्रतिक्षिप्यन्ते :—

१। सर्वं नामपदं क्रियाजमित्युक्ते न कश्चिद्दोषः सम्भवति । यत्तु
ग्यसि—'सर्वेषां नाम्नामाख्यातजत्वे यथा क्रियया एकस्य वस्तुनो
म क्रियत' इत्यादीति, न तत् किञ्चित्; पश्यामः,—समानकर्मणामपि
ानां तेन कर्म्मणा केषाञ्चिदेव नामधेयप्रतिलम्भो भवति, न त्वन्ये-
म् । तद्यथा—तक्षन् कश्चित् तक्षोच्यते, तक्षन्नप्यन्यो न तक्षोच्यते;
िव्रजन् कोऽपि परिव्राजको भवति, अपरो न भवति; भूम्यां जातः
ऽपि भूमिजोऽभिधीयते, नान्य इति । न च तावता तक्षणः तक्षण-
मित्तं नामधेयं न भवतीति; न वा परिव्राजकादीनां परिव्रजनहेतु-
म् । किमत्र कारणमिति चेत् लोकमेव पृच्छ, तमेवोपालभस्व । ना-
ाभिरयं नियमः कृतः । अथवा क्रियातिशयकृत एव नियमो भवेत् ।
ो हि यदतिशयेन करोति, अनेकक्रियावत्त्वेऽपि तस्य तयैव क्रियया
ामधेयं भवति । विद्यमानयाप्यनया क्रियया अपरस्य तन्नामाभावे-
पि, क्रिययैव हि कयाचित् तत्स्थितया तदभिधेयं भवति । तथा च
कक्रियायोगादनेकेषाम् एकनामधेयत्वप्रसक्तिरूपो दोषो नास्ति ।

२। एतेन अनेकक्रियायोगादेकस्य अनेकनामधेयत्वप्रसङ्गरूपः
्शितो द्वितीयो दोषोऽपि प्रयुक्तो वेदितव्यः । सतीष्वप्यनेकासु
ायासु परिव्राजकस्य परिव्रजनक्रियामन्तरेण नान्यया नामधेयप्राप्ति-
वति ।

३। यदुक्तं पदानामर्थबोधसौकर्यार्थं 'पुरुष' इत्यनुक्त्वा "पुरि-
य" इति वक्तव्यम्, तृणमपि च वक्तव्ये तर्दनमिति, तत्रोच्यते —
यमस्माकमपराधो न वा शास्त्रस्य; प्राक् प्रयुक्तस्य हि शब्दस्य
ाख्यानं शास्त्रानुसरणेन क्रियतेऽस्माभिः । तत्र येन प्रथमं श-
ब्दः प्रयुक्तः तस्यैवापराधो भवेत् । प्रयोक्त्रा हि तथा केचित् शब्दाः
ुक्ताः, यथा ते सर्वेषां प्रतीतार्था भवन्ति, अन्ये तु केचिदप्रती-
र्थाः । तत्र अप्रतीतार्थानां शब्दानां प्रतीतार्थत्वं क्रियत एव शा-
ण । यथा जाय्यः, अट्टणारः, जागरूक इत्यादयः—जाय्यः,-जय-
:

वान्,* आटणारः‡—अटनशीलः, † जागरूकः—जागरणशील इति।

४। यच्चोक्तं—यदि प्रथनात् पृथिवी, तर्हि कस्तस्य प्रथनकर्ता किमाधारश्च स आसीदिति, तदप्यकिञ्चित्करम् मा नामेयं केनापि प्रथिता भवतु, तथापि पृथुत्वदर्शनादेवास्याः पृथिवीतिनाम, न खलु सर्वैर्दृश्यमानमस्याः पृथुत्वमपह्नोतुं शक्यम्। अथापह्नूयेत, सर्वदृष्टहानं प्रसज्येत। नचैतदिष्टम्।

५। यदुक्तं—शाकटायनेन शब्देनानुगतेऽर्थे पदेभ्यः पदान्तराणामर्द्धाः संस्कृताः, यथा "सत्यम्" इत्यस्मिन् पदे, तच्चायुक्तमिति। तत्र ब्रूमः—यः खलु शब्देन अननुगते अभिधेयेऽर्थे पदं संस्करोति स पुरुषः तादृशेन संस्कारेण गर्हणीयः न पुनरयम् आचार्यः शाकटायनः, योऽर्थानुगतैरेव धातुभिः पदं संस्कृतवान्। सन्तमर्थम् आययति—गमयतीति सत्यम् इत्यस्त्येव शब्दानुगतोऽर्थः। दृश्यते च ब्राह्मणग्रन्थेष्वपि रूढिमनुसृत्य पदव्युत्पादनम्। यथा शतपथब्राह्मणे—

"तदेतत् त्र्यक्षरं हृदयमिति; हृ इत्येकमक्षरम्,
अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद; द इत्येक-
मक्षरम्, ददत्यस्मै स्वाश्चान्ये च य एवं वेद; य
इत्येकमक्षरम्, एति स्वर्गं लोकं य एवं वेद इति"।
(१४. ८. ४.१)

एवं च हरतेर्ददातेरेतेश्च धातुभ्यो हृदय शब्दः।

६। यदप्युक्तं—पूर्वोत्पन्नस्य सत्त्वस्यापरकालीनया क्रियया नामधेयं न सम्भवतीति। तदप्यचारु। पश्यामो वयं पूर्वमुत्पन्नानामपि केषाञ्चित् पश्चात्कालीनयापि क्रियया नामधेयं भवति केषाञ्चिन्न भवतीति; यथा कश्चिद् बिल्वं भक्षयिष्यतीति भविष्यन्त्या क्रियया

* "रूपादाहत प्रशंसयोर्यप्" (पा॰ ५.२. १२०) इत्यत्र 'अन्येभ्योऽपि दृश्यते' इति विधानात् मत्वर्थीययप्।

† पा॰ ४.१. १३० द्रष्टव्यम्।

‡ "पा॰ ३.२. १६५."

त्वादो नाम भवतीति । तस्माद् युक्तमेवैदं यत् सर्वाणि नामान्या-
ख्यातजानीति ।

नामपदानामुत्पत्तिविषये श्रीमता यास्केन स्वकीये निरुक्ते, श्री-
मता दुर्गाचार्येण च तद्व्याख्याने यदुक्तं, तदेवास्माभिः संक्षिप्याध-
स्तात् संनिवेशितम् ।

गार्ग्यस्य तन्मतानुमोदिनामुक्तानां वैयाकरणानां च मते 'कर्त्ता,
कारकः, पक्ता पाचक इत्येवमादीनां प्रत्यक्षक्रियाणां नामपदानामाख्या-
तादेवोत्पत्तिः । प्रकल्प्य क्रियाणां गौः, पुरुषः, अश्व इत्येवमादीनाम्,
अविद्यमानक्रियाणां च डित्थ-डवित्थादीनां नाख्यातत उत्पत्तिः;
तत्त्वत्र अर्थप्रत्यायनार्थं क्रियानैरपेक्ष्येण केवलं शब्दव्यवहार एव
क्रियते । केवलमश्वादिपदव्युत्पादनार्थम् अशनक्रियोत्प्रेक्ष्यते । न तु
वस्तुतोऽपि अशनक्रियायोगाद् अश्वः अश्वोभवतीति ।

नैरुक्तवैयाकरणैकदेशिभिश्च अविशेषेण सर्वेषामेव नाम्नामाख्या-
तजत्वं घुष्यते । यद्यपि केषुचित्पदेषु नामधेयहेतुभूता क्रिया स्पष्टं न
प्रतिभासते, तत्रापि यावच्छक्यं सोत्प्रेक्षणीया । न हि केनचित्तदश-
क्यत्वे क्रियापि तत्र न स्यादिति । पुरुषाशक्तिः खल्वेषा । प्रथममु-
त्पद्यमानो हि स स शब्दः क्रियात एवोत्पन्न इति विज्ञायते ।

गार्ग्येण शाकटायनपक्षे ये नाम दोषा आशङ्किताः, अनुयुक्तैः
नैरुक्तैः शाकटायनानुयायिभिस्ते समाहिताः । युक्तयश्च ताः समी-
चीनाः । गार्ग्यपक्षे तु येषां नाम्नामाख्यातजत्वं तैर्नाङ्गीक्रियते, तेषा-
मुत्पत्तौ किमपि कारणं नोपलभ्यते । अवश्यमयमनुयोगविषयो यत्
कथं स्वयमश्वः 'अश्व' इत्युच्यत इति । गार्ग्यपक्षेऽत्र न कापि हृदय-
ङ्गमा प्रत्युक्तिरस्ति । मन्त्रब्राह्मणात्मकस्य वेदस्य प्रथमं मन्त्रभागः,
ततो ब्राह्मणभागः । ब्राह्मणं विना नापरं किञ्चिन्मन्त्राणां प्राचीनतमं
व्याख्यानमस्ति, तच्च ब्राह्मणं शाकटायनपक्षमेव समर्थयते । मन्त्रस्थ-
ानां नामपदानां व्याकरणावकाशे ब्राह्मणेन शाकटायनादिभृतैव प-
द्धतिः प्रदर्शिता । उदाहृतं शतपथब्राह्मणवचनं तत्स्पष्टीकरोति ।

अन्यच्च—"यदसर्पत्, तत्सर्पिरिति," "यन्नवनीतमभवदिति" चेत्यादीनि परःशतानि नामपदनिर्वचनानि ब्राह्मणग्रन्थेषु दृश्यन्ते। यदि क्रियायोगात् सत्वानां नामधेयप्रतिलम्भो नाभविष्यत्, तर्हि वेदादिमाष्यभूतेषु ब्राह्मणग्रन्थेषु तादृशं निर्वचनं नाद्रक्ष्यत।

वैदिकशब्दानामालोचनयाप्ययमर्थः स्पष्टीभवेत्। तदानीं किलात्यन्तप्राचीनसमये तत्रभवद्भिरार्यैर्भिर्यस्य वस्तुनो यः क्रियोपलब्धा, तयैव तन्निर्दिष्टम्। यदा खलु तैरालोकितम् आलोचितं च यन्नदी मनुष्य इव सरतीति, तदा तैस्तस्याः सरणकर्त्तृत्वेन सरिदिति नाम कृतम्; एवं यदा नद्याः प्रवाहध्वनिराकर्णितः, तदा ध्वनिकर्त्तृत्वेन 'धुनीति,' 'नदीति' वाभिधेयं जातम्। यदा च तस्या हलवद् गमनं वीक्षितं तदा 'सीरीति' हलनाम्नैव साभिहिता। यदा च मात्रेव पुत्राणां तया क्षेत्राणां पालनं कृत, तदा सा 'मातृ' त्वेव कीर्त्तिता। इत्थं यदि प्राचीनतमानि नामपदान्यालोच्येरन्, तर्हि तेषामाख्यातजत्वं चारुतरं विज्ञायेत। एषां पदानामुत्पत्तिसमये मन्त्राणामाविर्भावकाले श्रीमद्भिरार्यैर्भिरात्मसादृश्येन तदानीं परिदृश्यमानेषु पदार्थेषु तत्तत्क्रियादर्शनात्, तत्तत्कर्तृत्वेनैव हि तेषामभिधेयं कृतम् †। क्षणमालोचनेनैवेदं सर्वेषां प्रतिभायात् ‡। तदिदं संख्यान्तरं दिदर्शयिषामः।

विधुशेखर शर्मा।

---

* सरितः, नद्यः, धुनयः, सीराः मातरः इत्यादयः शब्दा नदीनामसु निघण्टौ पठिताः। १अ० १३ख०।

† If we want to know, for instance, what the ancients thought when they spoke of a river, the answer is, they thought of it exactly what they called it, and they called it, as we know in different ways, either the runner ( सरित् ), or the noisy (नदी or धुनिः ); or if it flowed in a straight line, the plougher or the plough ( सीरा-नदी, सीरा-हलम् ), or the arrow; or if it seemed to nourish the fields, the mother ( मातृ ), or if it separated and protected one country from another, the defender ( सिन्धुः from सिध्, सेधति, to keep off )"—Max Muller's *The Hibbert Lectures on origin and growth of Religion.* P. 191.

‡ "Everything named as active" *ibid.* P. 192.

# भारतस्य वर्णमाला वर्णलिपिश्च ।

( पूर्वतोऽनुवर्त्तते )

संस्कृतवर्णमाला सर्वाभ्यो योग्यतमा इति स्वीकृतेऽपि अक्षरम-तरेण को निर्णयः स्यात्? अस्य प्रश्नस्योत्तरं न सुकरं, जनप्रकोपश-ङ्कासम्पर्कात् तस्य। जनप्रकोपश्च पैशुन्येन नित्यसंबद्धः। संग्रामो-ऽत्र भारतप्रचलितविभिन्नलिपि-सम्बन्धी। ताश्च लिपयः प्रायः सर्वा एकवर्णमालाकाः। भारतस्य साधारणवर्णलिपिः कथं बङ्गलिपिरेव भवितुमर्हति न कैथीया गुर्जरीया वा इत्यस्मिन् विषये कोऽपि विशेषहेतुर्नास्ति। भवेन्नाम बङ्गभाषा साहित्यसमृद्धया सौभाग्यवती, तथापि बङ्गलिपिः तेलेगुलिपेः तामिलाद् भिन्नाया अन्यस्याः कस्या-श्चिल्लिपेर्वा न विशिष्यते। आदर्शः सर्वासामेक एव। आकृतिभेदा अगुर्वर्थाः। यान् खलु हेतूनवलम्ब्य रोमकारबीयाभ्यां वर्णमालाभ्यां संस्कृतवर्णमालायाः श्रेयस्त्वं प्रतिपादयामो वयं ते तु हेतवो विभि-न्नभारतीयलिपीनां तारतम्यविचारे न प्रयुज्यन्ते। यो मया भावा-त्मको हेतुः पूर्वम् प्रदर्शितः स समर्थितपक्षं लिपिविशेषं वर्जयित्वा अन्यासां सर्वासां लिपीनां विरुद्धं गच्छेत्। अत्र हि वयं न कस्यापि साधारणशत्रोः प्रतिपक्षाः इति वक्तव्यम्।

वर्षशतकात् पूर्वं भारते बहुसंख्यका लिपयः प्रचलिता आसन्। १८७७-तमे आंग्लवर्षे द्वाषष्टिः आदर्शाः संगृहीताः अभूवन्। अधुना प्रचलितानां लिपीनां मुख्यास्तु उड्र-( Uriya ) बङ्गीय-कैथी-नागरी-तेलेगु-तामिल-कानरीय-महाराष्ट्रीय--गुर्जरीय-गुरुमुखी--गुण्डीत्याख्याः लिपयः। एतद्व्यतिरिक्ता भारतस्य बहुप्रदेशेषु प्रचलिता विशेषतः सिन्धु-पञ्चनद-युक्तप्रदेश-विहारेषु प्रचलिता महम्मदीयैश्च समग्रे भारते व्यवहृता पारसीका च अन्यतमा। आसामाकृतिभेदाः परि-स्फुटाः परं सादृश्यमपि स्फुटम्। ब्रह्म-सिंहल-प्रचलिते लिपी अपि अस्मिन्नेव संस्कृताधिकरणे अन्तर्निवेशयेयम्। लिपीनां साहित्यानांच तादृशस्य भेदबाहुल्यस्य एतदेव फलमभूत् यद् यद्यपि आंग्लशास-

नाधिकारे प्रादेशिकसाहित्यानि क्रमशोवर्धमानानि सन्ति, तथापि तानि परस्परस्वतन्त्राण्येव, विभिन्नप्रदेशवासिनश्च स्वेतरप्रदेशसाहित्यस्य हिन्दीसाहित्यस्य वा उन्नतिविषये स्तोकमेव जानाति। तत्र तु अयमेव हेतुर्यत् भवत्पुनतः द्वौ अन्तरायौ विद्येते एको भाषासम्बन्धी। यदि कश्चिद् हिन्दीभाषामालपेत, तर्हि भवान् ताम् अनायासेनैवावबोद्धुं तथैव चासम्यक् आलपितुम् अपि शक्नुयात्, परं विहारवासिभिः व्यवहृतायाः कैथि-लिपेः पठने भवान् भृशं क्लेशमनुभवेत्। यदि भवतः (वङ्गवासिनः) पञ्चनदवासी कश्चिद्बन्धुः स्वस्यां मातृभाषायां परं वङ्गाक्षरैर्लिखितं भवते कामपि लिपिं प्रेषयेत्, तर्हि भवान् तां पठितुं शक्नुयात्। किं च, वङ्गाक्षराभिज्ञाय तस्मै वङ्गभाषया प्रत्युत्तरं दातुं प्रभवेत्। एवमुभावपि भवन्तौ परस्परभाषयोः किंचिज्ज्ञौ चेत् परस्परस्याभिप्रायं बोद्धुं शक्नुयाताम्। परं लिपि (अक्षर)-भेदः ईदृशे परस्परभावविनिमये महान अन्तरायः। तदभावे परस्परसंव्यवहारः सुकरः स्यात्। 'पारी'-प्रवासी कश्चिद् आंग्लपुरुषः अनभिज्ञोऽपि 'फ्रान्स'देशभाषायां तत्रत्यानां रथ्यानां प्रसिद्धस्थानचयानां च नामानि गृहनिर्णयार्थाः संख्याश्च पठितुं समर्थो भवेत्। परं काशीं गन्तुकामः कश्चिद् वङ्गवासो 'ष्टेशने' (यानविरतिस्थाने) दृष्ट्वापि 'काशी'-नामाङ्कितं फलकं लिपिज्ञानाभावात् न तत् नाम पठितुं शक्नुयात्, येनासौ यानाद् अविलम्बमवतीर्य विश्वनाथमहादेवपूजने त्वरमाणः स्यात्।

प्रायो वयं भारतीयभाषा मपेक्ष्य यूरोपीयभाषासु अधिकतरमभिज्ञा भवामः। अपि पश्चिमभारते उत्तरभारते वा वङ्गभाषोत्कर्षसाधकयोः विद्यासागराक्षयकुमारयोरिव महापुरुषयोराविर्भावोऽभूत्, अपि वा वङ्किमचन्द्रसदृशाः ग्रन्थकाराः (लेखकाः) मधुसूदनसदृशा वा कवय उत्पन्नाः? बहव एवास्माकम् एतेषां प्रश्नानाम् उत्तरं दातुमसमर्थाः। अज्ञतायाश्चास्माकम् एतदेव कारणं यत् प्रदेशान्तरप्रचलितभाषाणां नवीनायाः कस्याश्चित् लिपेर्वा शिक्षायां नास्माकं प्रवृ-

त्तिविद्यते । भाषाणामपेक्षया वर्णलिपयः अधिकतरगतिकुण्ठनस्था-
ानि । बहवो वयं देवनागराक्षरलिखितां हिन्दीं पठितुं शक्नुमः परं
तथा शक्नुमः 'कैथि' लिपिलिखितां हिन्दीं पठितुम् । अर्थिप्रत्यर्थिप-
समर्थकवृत्तिम् उपजीवतो मे बहुवर्षाण्यतीतानि, परमधुनापि केन
चित् पठितां हिन्दीम् उर्दुभाषां वा यथान्यायम् अवबोद्धुं समर्थोऽपि
कैथि-पारसीकाक्षरलिखितानि अधिकरणलेख्यानि नाहं पठितुं
शक्नोमि ।

प्रायः सर्वेष्वेव यूरोपामेरिकयोरन्तर्वर्तिषु देशेषु एकैव वर्णमाला
एकैवच वर्णलिपिः प्रचलितास्ति । अत्र तु भारतवर्षे तयोः संख्या
अतिमहती । अयं किं नास्माकं साधारणलिपिं निश्चेतुं समयः ?
यथेत्यत्र भवन्तः प्रतिवक्ष्यन्ति इत्येष मे निश्चयः । सा च साधारण-
लिपिः देवनागरी भवितुमर्हति इति मे मतम् । सब्रह्म-सिंहले भारते
श्याम-जापानदेशयोश्च तादृशमेव अस्याः स्थानं भवितुमर्हति यादृशं
स्थानमधिगता रोमकलिपिः यूरोपामेरिकयोः ।

पुरा देवनागरीलिपिरपि वङ्गोत्कल-गुर्मुखी-गुर्जरलिपि-निकरवत्
प्रादेशिक्येवासीत् इति सम्भवति । प्राक्कालीनविषयकोविदाः वदन्ति
यत् पुरासौ प्रादेशिक्यासीत्, देवन गरपदेन पूतनगरी वारा-
णसी बोध्यते, तत्र प्रचलिता लिपिः देवनागरीति व्युत्पत्तिदर्शनात्
इति तत् सत्यं भवेत् । सम्भवत्येतद् यद् वाराणसीस्थाः पण्डित-
महोदयाः भारतस्य पवित्रलिपिस्वरूपामेतां चतुर्दिक्षु प्रचारितवन्त-
स्ति । एतत्तु न सम्भवति यद् अन्यासां भारतीयलिपीनामियं मूलाद-
र्शरूपा इति । परं हिन्दूनामयं विश्वासो यत् एषा देवानां लिपि-
रिति । अस्यां लिपौ अधुनास्माकम् अत्युत्कृष्टानि संस्कृतपुस्तकानि
लिखितानि सन्ति । यूरोपामेरिकाभ्याम् एषैव लिपिः संस्कृतग्रन्थानां
यथार्थलिपित्वेन परिगृहीता । भारतेऽपीयं यथार्थसंस्कृतलिपित्वेन
स्वीकृता । आधुनिकतत्त्वानुसन्धानैस्तु अन्यथैव प्रतिपाद्यते । अशो-
कस्य राज्ञः शिलालेखाश्च तदेव समर्थयन्ति । परमयमपि भूतार्थो

नापलपितुं शक्यो यत् कलिकाता-वाराणसी-मुम्बानगरीषु संस्कृतपु-
स्तकप्रचारव्यवसायिभिः देवनागरीलिपिरेव युक्ततमेति परिगृहीता।
एतेन संस्कृतपाठकानां भूयान् लाभोऽभूत्। यदि भवान् देवनागरी-
लिपिं जानाति तर्हि अनायासेनैव कलिकाताप्रकाशितामिव मुम्बाप्र-
काशितामपि सटीकां मनुसंहितां पठितुं भवान् समर्थः स्यात्। परं
वङ्गेषु बहव एव शास्त्रपारदर्शिनः पण्डिताः कदापि देवनागरीं न
शिक्षन्ते। यान् खलु मूलग्रन्थान्, यानि च भाष्यादीनि काव्यानि च
ते अधीतवन्तः तानि सर्वाण्येव वङ्गाक्षरमुद्रितानि। अतस्ते अधुना
प्रकाशितान् संस्कृतग्रन्थान् पठितुं न शक्नुवन्ति। महान् एष परिता-
पविषयः। परम् ईदृक् नाभविष्यत् यदि सर्वत्र एकैवलिपिर्देवनागरी
प्रचलिताभविष्यत्। वस्तुतः भारतीयान् प्राक्कालीनविषयकोविदान्
विहाय सर्वेषामेव देवनागरीलिपिरनुमोदिता।

किमस्या देवनागरीलिपेर्मूलम् इत्यनुसन्धाने नास्माकं समयो
वा प्रवृत्तिर्वर्तते इति तु मया भवद्भ्यः पूर्वमेव कथितम्। साहित्यसमा-
जे अधुना अस्याः कीदृशी स्थितिरिति तु वयं पश्याम एव। कि
तर्हि न वयमेतामेव लिपिम् अधुनाप्रचलितानां भारतीयभाषाणां संगत
लिपिरिति प्रयुञ्ज्महे। अधुना वर्णलिपीनां विषमबाहुल्यमपहाय स
वयमैकमत्येन देवभाषालिपिं देवनागरीमेव समग्रभारतस्य भारतहेतु
कसभ्यतानां देशानिकराणां च साधारणलिपित्वेन गृह्णीयाम। नूनमयं
शेषोक्तो विदेशसम्पर्की विचारो न अस्मदायत्तः।

निजस्वमन्तरेण सर्व एव कंचित् अभिमानमनुभवन्ति। तच्च
युक्तमेव। अनेनाभिमानेन वशीकृतहृदयाः बहव एव भवन्तः
(वङ्गवासिनः) आत्मीयायाः वङ्गलिपेः स्थाने कैथिलिपे गुर्जरलि-
पेर्वा प्रवर्त्तनं नानुमोदयेयुः। परमीदृशाः जात्यभिमानभावाः देवना-
गरीप्रवर्तने न कामपि बाधां जनयितुमर्हन्ति। तेलेगु-तामिलभाषिणां
पक्षे अस्माकं प्रतीच्यभारतीयभ्रातॄणां पक्षे च एवमेवस्यात्। यदा
उच्चतरलक्ष्याधिगमाय एतद् अपेक्षितं भवति यत् एकप्रभुमण्डलशा-

ाधीनानाम् एकाकांक्षाप्रणोदितानां च विभिन्नजातीयानां जनानां
धारणः कश्चित् साहित्यमार्गः निर्णतव्यः तदा प्राचीनमतसंसक्ति-
रतिशयं कार्पण्यं व्यञ्जयत्येव। सर्वथा व्यक्तिगतः स्वार्थः देशहि-
रूपे बृहत्तरे च लक्ष्ये निमज्जेत्।

यदि पुनर्वयमक्षराणि तुलयेम तर्हि पश्येम यत् प्रस्तावस्यास्य
ग्रहणेन नास्माकं काचित् क्षतिर्भवेत् यतः देवनागरीलिपेः अन्यासां
रतीयलिपीनां च भेदः केवलं शाब्दिको न तु वास्तवः। कतिपय-
र्षपूर्वं मम श्रद्धेयोबन्धः सुविद्वान् श्रीगुरुदासवन्द्योपाध्याय-के.लि.
ाइ.इ'-महोदयः काञ्चित् पुस्तिकां प्रकाशितवान्। तस्यां तेन प्रद-
ित यत् वङ्ग-देवनागरी-लिप्योर्यो भेदो दृश्यते सः स्तोक एव, लि-
श्चेयं देवनागरी अनायासेनैव शिक्षितुं शक्या इति। एकतः कैश्चि-
ाराष्ट्रीय-गुर्जर-तेलेगुतामिललिपयः प्रत्येकम् अन्यतो देवनागरी-
ापिः अनयोरुभयोर्भेदोऽपि तथैवाकिंचित्करः। देवनागरीलिप्यर्थे
ाः सर्वा अनायासेनैव त्यक्तुं शक्याः। एतद्विषये मन्मतं दृष्टान्तेन
दर्शयितुमहम् ऐच्छम्। परमधुनातस्य समयो नास्ति, आशङ्के-
ाहं भूयानत्र समयो भवतां व्ययित एव। यथावसरं विषयोऽयं
विस्तर वर्णयिष्यते। यदि सब्रह्मसिंहले भारते सर्वत्र संस्कृतलिपेः
धारणलिपित्वेन ग्रहणं सकृत् अनुमोद्येत, तर्हि तस्याः प्रवर्तनं न
ष्करं भवेत्। प्रायः सर्व एव कृतविद्या भारतीया देवनागरीलिपिं
ानन्ति। अधुना इदमेव विचार्यं कथं केनोपायेन च तस्याः प्रचलनं
ाकृतजनानपि प्राप्नुयात् इति। नाहं प्रस्तौमि यत् एकदैव सर्वाः प्र-
लितलिपयः परित्यक्तव्याः। तद्धि नितरामसम्भवमेव। ईदृशमस्म-
ीयं प्रस्तावं भवन्तो गृह्णीयुरिति च नाहमिच्छेयम् बहुवर्षाणि देवना-
रीलिपेः पार्श्वे तासामपि स्थानमव्याहतं तिष्ठतु ततः क्रमेण
ासां परिहारो विलोपश्च साधनीयः। प्रारम्भेतु प्रदेशीयभाषासु नि-
द्धा ये ये साहित्यविषयका विज्ञानविषयकाश्च ग्रन्था विद्यन्ते ते सर्वे
वनागरीलिपौ प्रकाशितव्याः। अप्रस्तुतेन नववेशपरिग्रहेणानेन

ग्रन्थकारमहोदयानां न काचिद् हानिः सम्भवेत्, पाठकमण्डलस्य अचिरप्रसार आशस्यत । ये नाम ग्रन्थकारस्य गौरवमावहन्ति ये वर्तमानानां भविष्यताणां च सन्तानानां श्लाघाविषयाः ते रस-भाव-रचना-प्रौढ़ि-चारुतादयो ग्रन्थगुणाः यथा प्रदेशीयायां लिपौ तादेवनागरीलिपावपि अविकृतस्फुटाः स्युः । रसज्ञानां रसिकता कवीनां च करुणरसो यथा अधुना तथा तदापि तानेव भावान् जनयितु विकासयितुं च प्रभवेत् । विभिन्नदेशीयानां लिपीनाम् इतिवृत्तमस्मा प्रत्याययति यत् देवनागरीप्रतिच्छदप्रवर्तनेन लेखकमहोदयानां कापि हानिः संभवेत् ।

अतः परं शिशवस्तेनैव प्रकारेण देवनागरीवर्णमालां शिक्षितुमारभेरन् येन प्रकारेण विशालस्यास्य साम्राज्यस्य विभिन्नप्रदेशीयलिपीस्ते शिक्षन्ते । लेखकार्ये देवनागरीव्यतिरिक्तानामन्यासां लिपीनां व्यवहारः क्रमेण लघुतां प्रापणीयः । अनेन च प्रकारेण स्वल्पैरेव वर्षैः समग्रभारते एका लिपिः प्रवर्तिता स्यात् ।

विश्वविद्यालयतथ्यसंग्रहसमितिः संस्कृतप्रश्नोत्तरेषु देवनागरीलिपिव्यवहारमनुमोदितवती । एतस्यानुमोदनस्य सर्वेषु विश्वविद्यालयेषु परिग्रहणेन अभिप्रायोऽस्माकं भूयसा सुसिद्धः स्यात् । विद्यालयच्छात्राः सर्व एव तदा देवनागरीयाक्षरैरनायासेन लिखितुं शिक्षयिष्यन्ते । श्रूयते मया एलाहाबाद-लाहोर-माद्राज-बोम्ब-विश्वविद्यालयेषु देवनागरीलिपिरवश्यं शिक्षणीयेव । कलिकाताविश्वविद्यालयस्तु अधुनापि अस्मिन् विषये पराङ्मुख एव दृश्यते । बहुवर्षेभ्यः प्राक् श्रीमद्गुरुदासवन्द्योपाध्यायमहोदयः कलिकाताविश्वविद्यालये अवश्यमेषा प्रवर्तितव्येति निर्बन्धेन प्रायतत । एतदर्थं कश्चिन्नियमोऽपि कल्पितः । परम् अद्यापि तन्नानुष्ठितम् । तदानीमहं स्वयं देवनागरीलिपिप्रवर्तनस्य प्रतिकूलपक्षम् अभजम् । अयं च तत्र हेतुः मया चिन्तितो यत् अनेन प्रकारेण संस्कृतपरीक्षापथे नूतना बाधाः निक्षिप्ताः स्युः एतत्तु मया न विचारितं यत् विषयोऽयम् अभ्यास-

क्षः । स चाभ्यासो यदि शैशवाद् अर्जितो भवेत् तर्हि शीघ्रमेव ते
ल्पिता अन्तराया अन्तर्हिताः स्युरिति । एकपदे तस्या आवश्यक
यवहारः अभीष्टफलजनकः स्यात् इत्यतो यदि उपक्रमसाधनत्वेन
र्षद्रूपरिमितः समयो दीयेत तर्हि मन्ये परीक्षार्थिनः परीक्षासु
मव्यसौकर्यं नानुभवेयुः । वर्तमानकालस्य प्रयोजनानि सम्यक् आ-
ोचितवता मया पूर्वमतमधुना परित्यक्तम् । अधुना एष मे दृढनिश्च-
ो यत् सर्वेषु प्रदेशषु एकस्या एव वर्णमालायाः एकस्याश्च वर्णलिपेः
वर्तनमेव विभिन्नदेशेषु भावनियमस्य भिन्नदेशीयसाहित्यपाठस्य च
ुगमतम उपाय इति ।

सम्भवत्येतत् यद् देवनागरीलिपेः प्रवर्तनं भारतीयभाषानिकरेषु
ंस्कृतशब्दानां बहुलप्रवेशस्य अलक्षितसाधनं स्यात् । वङ्गभाषायां
ंस्कृतमूलकानां शब्दानां बहुलप्रयोगः सुप्रतिष्ठितः । अयं हि प्रधा-
तस्तस्याः वर्तमानसौष्ठवस्य हेतुः । तस्यां दिशि अधुना हिन्दीभा-
ापि द्रुतपदविक्षेपं चलितुमारब्धा । अतश्चाधुनिकी हिन्दी विशेषतो
ाराणसीप्रचलिता हिन्दी संस्कृतायिता । आधुनिक-यूरोपीयभाषाणां
ुष्टिर्यथा ग्रीकलाटिनेति-प्राचीनमुख्यभाषामूलकानां शब्दानामुपक-
ानेन साधिता तथा भारतीयभाषान्तराणामपि सौष्ठवं तासु संस्कृत-
लकशब्दानामनुप्रवेशमपरिहार्यत्वेनापेक्ष्यते । एतन्मे विदितं यत्
ारतवर्षे एवं जातीयाः केचित् चिन्तका लेखकाश्च विद्यन्ते ये आधु-
ाकानां भारतीयभाषाणां वैभवसाधनाय साकल्येन प्राचुर्येण वा संस्कृ-
माहात्म्यग्रहणं नेच्छन्ति, इच्छन्ति च लिखितभाषाणामपि कथितभा-
ानुरूपत्वापादनम् इति । अन्यथाप्य तद्विषयम् अप्रविश्य वा तादृ-
कं मन्येऽहमेकस्मिन् विषये सर्वेषामस्माकमैकमत्यं विद्यते । स च
ाषयः अयं यद् याः खलु भारतीयभाषाः संस्कृतमूलकास्तासामियं
ंस्कृतभाषा चिरमेव शब्दानां मुख्यतमो निर्झरो भाण्डागारं चेति
थातुं प्रभवेत् । संस्कृतस्य शब्दकोशो धातुगणश्च वर्तमानभाषाणां
शागारमिव तिष्ठेताम् यस्मात् ताः स्वेषां रुचिरोन्नतभावानामनुरूपं

येशं ग्रहीतुं शक्नुयुः । यथा यथा लघु वयमेतत् मूलवस्तु उपसर्पेम यथा यथा चास्मात् बाहुल्येन शब्दमन्थनं कुर्याम तथा तथा त्वरितं वयं साहित्यानामस्माकं विकाशे साफल्यं लभमहि । अस्ति च मे आशंसा यत् दूरोत्तरकाले संस्कृतकोषात् प्रदेशीयभाषासु एतावत् शब्दवैभवं संप्रवेक्ष्यति यद् ईदृशं संस्कृतशब्दमन्थने पुनः नाधिकमावश्यकं भविष्यतीति । एवं संस्कृतभाषिकाणां तद्भाषामूलकानां च शब्दानां बहुलप्रयोगेन देवनागरीलिपिप्रवर्तनेन च भारतीयभाषिकाः परस्परम् अधिकतरं सन्निकृष्टसंस्पृष्टाः स्युः । विभिन्नप्रदेशवासिनश्च भाषाभेदे सत्यपि वर्तमानापेक्षया अधिकतरं शीघ्रं परस्परभावान् गृह्णीयुः । परस्परभाषासु च ते अधुनापेक्षया अल्पायासेन अल्पसमयेन च व्युत्पत्तिलाभे समर्थाः स्युः । संस्कृतज्ञानलवसाहाय्येनाहम् अनायासेनैव हिन्दीं विशेषेण आधुनिकीं हिन्दीं पठितुं, कृतविद्येन हिन्दीभाषिणा भद्रजनविशेषेण सह संलापे स्वाभिप्रायं प्रकटयितुं च शक्नोमि । हेतुश्चात्र परिस्फुट एव—उभयोरेवावयोः शब्दसम्पत् संस्कृतैकमूला । एवमेव बहूनामवास्माकं पक्षे वर्तते ।

जानाम्यहं कल्पनामिमां भवतां प्रवासिनां च मे देशबन्धूनां विचारार्थम् उपन्यसन् अहं वादयुद्धमामन्त्रयमाणोऽस्मि । तच्च वादयुद्धं बहुसमयव्यापि भवेत् उत स्वल्पकालस्थायि तन्न जाने । परमेषास्ति मे गाढाशंसा यत् तर्ककाले कटुभाषा सर्वथा परिवर्जिता स्यात् इति । संस्कृतसाधारणमूलानां संस्कृतेन च भूरिपोषितानां विभिन्नानां भाषाणां लिपीनां च प्रयोक्तॄणां देशबन्धूनां मध्ये मानसिकस्य साहित्यिकस्य च आदानप्रदानस्य प्रवर्तनं प्रोत्साहनं च प्राधान्येन मे लक्ष्यविषय इत्यस्य कथनं नावश्यकम् । संस्कृतस्य दर्शनसाहित्यरूपं समृद्धममूल्यं च भाण्डारम् अस्माकं साधारणाधिकारविषयः । एवं पाश्चात्याधिगत विद्यापि । नाय गरीयानर्थः यदि कश्चिद् भारतवासी त्रिवन्द्रनगरात् ढाकानगरातो वा अस्मान् अभिनन्दतु । स च वयं च वङ्गवासिनः अस्माकं सुदूरसिन्धुमुम्बाप्रदेशागताश्च

ध्यवः कालिदास-भवभूति-(Shakespeere)-सेक्सपीयर(Tennyson)-निसन प्रमुखानां कवीनां गुणदोषविचारानुभवादिषु किमपि सा-रणसहानुभवबन्धनम् अनुभवामः । बङ्गेभ्यो बहिः कति भारतीया ङ्गभग्रन्थानाम् आंगुभाषायाम् अनूदितान् स्वल्पसंख्यकान् ग्रन्थान् र्जयित्वा शिष्टान् पठितवन्तः ? कतिसंख्यका वयं वङ्गवासिनः 'दाल-प्राइ'-( Dalpatrai ) नाम्ना सुप्रसिद्धस्य गुर्जरकवेर्नाम श्रुतवन्तः ? भाषाविषयाद् बहिरस्मद्देशीयानां मनोवृत्तेर्विकासः कीदृश इत्ये-त् परिमातु नास्ति कश्चिदुपायः । देशाभिमानः अधुना उत्तरोत्तरं सपन्नस्ति, तस्य मूलानि च गभीराद् गभीरतरं बध्यमानानि सन्ति । धुना सर्वे वयं पाश्चात्यप्रभावाधीनाः संजाताः स्वीकुर्मश्च सहर्षं स्वा-तं प्रति अस्माकम् ऋणाधिक्यम् । कथं न काचित् स्थानिकस्य का-कस्य च प्रभावस्य विनिमयव्यवस्था क्रियेत येन दाक्षिणात्यसाहित्यं ङ्गसाहित्योपरि वङ्गसाहित्यं च मद्रसाहित्योपरि प्रभावं प्रवर्तयेत् । शबन्धूनस्माकं गाढं ज्ञातुं न वयं समर्थाः स्याम यावत् तेषां साहित्यं यं न जानीयाम । न च साहित्यजनितात् सहानुभवात् अधिकतरः हृतिसाधकः स्वार्थभावरहितश्च सहानुभावोऽन्यो विद्यते । एतन्मे नीतं मतं यत् कस्यचिश्चित् साधारण्याः वर्णमालाया वर्णलिपेश्च ग्रहः तस्यैव महतो लक्ष्यस्य साधने प्रवर्तकः स्यात् । यत्पथाव-म्बनेन मन्मते उद्देशस्य तस्य साधने स्वल्पान्तरायः सम्भवेत् तदपि या निवेदितम् । लाभस्त्वेतेन महान् स्यात् अन्तरायाश्च न एका-न दुरतिक्रमाः प्रतीयेरन् । अहो तद्दिनं भारतस्य कीदृग् गौरवकरं विष्यति यदा सर्वा भारतीया भाषा एकामेव लिपिं व्यवहरिष्यन्ति, कप्रदेशीयं साहित्यं च प्रदेशान्तराणां सहजबोध्यं भविष्यति । भस्य सौकर्यस्य च तुलनया परिश्रमो व्ययश्च ईदृक् अल्पौ प्रतीये-तां । भवत्पुरतो मया स्थापितस्य प्रस्तावस्यास्य अन्तिमं विचार-लं सविश्रम्भमहं प्रतीक्षिष्ये ।

श्री सारदाचरणमित्रः ।

# वाराणस्यां शारदचन्द्रः।

( काव्यम् )

वाराणस्यां भगवत्या भागीरथ्यास्तटभूमावेव पवित्रं नारदतीर्थम्
तत्र बहुभिः सुहृद्भिर्बहुभिर्विनोदालापैः, बहुभिः प्रमोदैश्च बहवः काल
अतीताः। परन्त्वीदृशं सुखदिनम्, एतादृशश्च शान्तिसमयो न जा
मदीये भागधेयेऽद्दृश्यत, कदाचित्पुनरपि द्रक्ष्यत इत्यपि नाशास्ति

ह्यः किल सकलकलस्य शारदशशाङ्कस्य निर्मलतमैः किरणप्रवाहै
समुद्भासितावयवा भुवननयनमोहिनी राकारजनी काञ्चिदभूतपूर्व
सुषमासम्पत्तिमाविरकार्षीत्। अद्य तु प्रतिहृदयपटं तस्या एव नि
पमसुखमयी परमकोमला शरीरिणीव मधुरता कापि स्मृतिलेख
समङ्किता।

तिथिरद्य कृष्णा प्रतिपन्नाम। चन्द्रमसः समागमेनाद्यापि जगत
रिपूतं भवेदिति पश्चिमसन्ध्यायाः पूर्वमेव भवनसौधस्य छदोपरि
सर्वोच्च स्थानमध्यतिष्ठम्। पश्यत एव वियन्मण्डलं क्रमेणास्फुट
स्फुटतरेण लोहितरागेण रक्तीभवितुमारभत। सुदूरतः पूर्वाकाश
न्तात् तिमिररेखापि धीरधीरमात्मनोऽपरिस्फुटां मलिनां छायां प्रका
शयितुं न व्यरमत्। नेत्रं चित्तं च मे ऐकाग्र्येण तामेव दिशमभ्यधा
घताम्। जाह्नव्या अपरस्मिंस्तटे विशालः सिकतास्तूपः; ततः प्रश
स्ताभिः शस्यपरम्पराभिः श्यामला सुविस्तीर्णा प्रान्तरभूमिः; ततश्च
समुन्नताग्राणां नैकविधानां पादपानामविरलसंस्थाना नयनाकर्षणनि
पुणा श्रेणी। अहं तेषामेव गगनचुम्बिनां विटपिनां शिखरप्रदेशमनु
लक्ष्य निर्निमेषाभ्यां नयनाभ्यां जडइव तूष्णीं मतिष्ठम्।

प्रादोषिकमारुण्यं गगनपटं विहाय गच्छद्गच्छदपि किञ्चिद् वि
भाव्येव न गच्छति; तिमिरं भुवनाक्रमणं कुर्वत्कुर्वदपि परावर्त्तत इ
अनन्तस्याकाशस्य सपदि क्वचिदेकैकं क्षीणं नक्षत्रं स्फुरितस्फुरितमपि
कुतोऽपि व्रीडया निवर्त्तत इव, पुनरागतागतमपि चान्योन्यं गूहत्येव

कलिप्रवृत्तमिव सद्य एवान्तर्धत्तइव; अचिन्तयं त्रिदिवगङ्गायाः कनसलिलस्य द्वित्रा बिन्दवः पतितपतिता अपि न पतन्ति; क्रीडाकौतुकन्या गगनलक्ष्म्याः कबरीमाल्यस्तवकतो वा स्खलितस्खलितान्यपि ानिचित् कुसुमानि न स्खलन्ति सा च तानि वा धृत्वा धृत्वापि न नर्धत्तुं शक्नोतीति ।

अधस्ताच्चानतिविस्तीर्णाया अनतिक्षुद्रायाश्च भगवत्या अमरस्रोतस्वत्या अनाविलं सलिलं न धवलं, न कृष्णं न वा लोहितम् अपितवर्णमेव कमपि वर्णमाधाय वाराणस्याश्चरणप्रान्तं प्रक्षालयत् नातिमृदुना नातितीव्रेण च वेगेन निःशब्दमनारतं प्रवहति । नगर्यां कतिषु दिक्षु कियन्तो नामानन्दाः, कियन्तो विषादाः, कियन्तो वा कोलाहला ात्पद्यन्ते; कियत्सु देवालयेषु नीराजनसमयाध्मायमानानां शङ्खघण्टाडिण्डमादीनां वाद्यभाण्डानां माङ्गलिको निनादो नगरस्यैकस्मादपरं प्रान्तं ावत् प्रतिसौधान्तः प्रतिहन्यमानः गुरुगम्भीरमांसलाकारेण पवनपव्यां न व्यगाहत । मम तु लोचनं वा हृदयं वा तत्सर्वं ज्ञात्वापि न जानाति, श्रुत्वापि न शृणोति, बुद्ध्वापि च न बुध्यते; केवलमेकया दृष्ट्या, एकेनैव च भावेन जाह्नव्या अपरोपकूलस्थितस्य खलभ्रभेदिनो महीरुहवृन्दस्योन्नतं चूडादेशमवलम्ब्य निश्चलनिःस्पन्दं निर्जीववत्, चित्रार्पितवच्चातिस्थिर मतिष्ठत् । तया चावस्थया तदानीं तत् खलु मे लोचनं हृदयं च सापराधमिव, कृतदुष्कृतमिव, च अपहृतपरस्वमिव ।। भीतभीतं निःशब्दं विविक्तं देशमाश्रयताम् । यदस्तु, मनो मे सद्य एव चन्द्र उदेष्यतीति गाढयोत्कण्ठया महतावेगेन, प्रबलेनोत्साहेन प्रभूतया चाशया पर्यपूर्यत । नातः परं तद्विलम्बः सह्यते । तिपदि चन्द्रस्यागमने स्तोकः कालातिपातो भवेदेवेति ज्ञात्वापि न ज्ञानामीव-अथवा ज्ञातुं नेच्छामीव व्यस्मरमिवास्य तत्त्वस्य अचिन्तयम्—अतिनिष्ठुरः,—अतिनिर्दयोऽयं चन्द्रमाः; अहं कियतोत्सुक्येन कियताग्रहेण, कियता चानुरागेण भगवंश्चन्द्र, त्वामाकारयामि, किन्त्वहो कष्टम्, न त्वं तत् किञ्चित् पश्यसि, न किञ्चिद् विवेचयसि,

न वा किञ्चिच्चिन्तयसि; अतएव कथयामि त्वमत्यन्तमसहृदयः, न त्वम् परमालोकयसि, न त्वमन्यस्य दुःखं वेत्सि न वा तत् प्रतिकरोषीति।

अथ परस्मिन्नेव क्षणे विज्ञानन्निव मे औत्सुक्यम्, चिन्तयन्निव मे हृदयस्य विगाढमुद्वेगम्, पश्यन्निव वा स्वकीयं युक्तं समयं शारदो विधुरुदयशैलशिलातल मधिष्ठातुम् उपाक्रमत। अहो सा काचिदपूर्वा सुषमा? अहो किं तदेकं नयनयोरमृतमयं रसाञ्जनम्। न तद् वर्णनीयम्, न तद्बोधनीयं, न वा तत् श्रावणीयम्। यदि नयनं स्यात्, हृदयं स्यात्, हृदयस्य वा भावः स्यात्, तर्हि सकृन्नयनमुन्मीलयताम्, हृदयं च क्षणार्द्धं तदभिगच्छतु, नातः परं किमपि ते करणीयं भवेत्,—नातः परं त्वया मनागपि प्रयतितव्यम्, अभिलषितं ते सेत्स्यति, इयत्कालमन्विष्यमानं धनमधिगमिष्यसि, यदवर्ण्यम्—अबोध्यम्-अश्राव्यमित्यवोचम्, स्वयमेव तत् त्वं वेत्स्यसि, स्वयमेव तद्रसं रसयिष्यसि, स्वयमेव च तन्मर्मण्युद्घाटयिष्यसि,—किं खलु तदेकमद्भुतं द्रव्यमिति स्वयमेव त्वं साधु ज्ञास्यसि।

तस्य किलोद्गच्छतः शारदेन्दोः सुकुमारैः पाटलपाण्डुरैः किरणकलापैः पूर्वगगनाङ्गनस्याधस्तलं परित्यज्य किञ्चिदुपर्युपरि परिव्याप्तुमारभ्यत, अपश्यम्—वासवाशायामाकाशमूले काचिदनतिदीर्घा अनतिनिबिडा नातिकृष्णा नातिधवला च जलदलेखा प्लवमानेव मलिनफेनपिण्डपंक्तिर्वियदुदधेः सुविशालाया वेलाभुव एकस्मिन्नंशे मारुतवेगेन संलग्नेति। कामं पुनस्तस्या एवोपरि किञ्चित्स्थानं व्यवधाय तादृश्येवापराप्येका मेघपंक्तिरात्मनश्चतुर्ष्वपि पार्श्वेषु चन्द्रमसः कनककिरणरेखया सदर्पं स्वसौन्दर्यं प्रकटयन्ती व्यराजत। अमृतदीधितेर्मयूखमालानां माधुर्यसम्पत्तिः क्रमेणैव स्फुटतरीभवितुमारभत। किन्त्वहो किमिदमापतितम्? क्वाहमुदयादेव शारदशशाङ्कस्य मोहिनीं कान्तिं पश्येयम्, क्व च हन्त प्रारम्भ एव जलददर्शनम्! नयनं चञ्चलमभवत्। उत्साहहीनं हृदयमभज्यत। चतसृभ्यो दिग्भ्यो विश्वस्येव विषादो मामावृणोत्। जलदखण्डादिव समागतं मालिन्यं मे

केवलं वदनमण्डलं, हृदयस्याभ्यन्तरमपि च परिव्याप्नोत् । कात-
ऽभवम् । चिरमुत्पन्नो मे सङ्कल्पः पूर्णपूर्णोऽपि न पूर्णः ! पाणिभ्यां
धृतोऽपि सुधांशुः न पुनर्धर्तुं पारितः । कियन्मे कष्टमुत्पन्नमिति
त्वं जानीयाः ? उदयन्निन्दुः क इव मया मन्यत इति न त्वं वे-
। किमुच्यते, निर्बल इवाहं तदानीमभवम्; शिरासु शोणित-
तो रुद्धमिव भवितुमारभत । किं कुर्य्याम् ? नास्ति कश्चित् प्रती-
र; दैवायत्तं खल्विदम् । नहि कश्चित् दैवस्य प्रभवति । सर्वप्रभु
दम् । दुःखविनोदस्य न कोऽप्युपायस्तदासीत् । अतोऽहं सुलभ-
भिर्निन्दागीतिभिर्विधातुः कर्माणि समालोचयितुं प्रावर्त्ते ।

हन्त किमिदम् ! किमिदमहं कर्त्तुमारभे ! कमहमनिन्दम् ! कि-
वा अनिन्दम् ? मेघलेखा ? किमेषा मे अपकृतवती ! अहन्त्वद्य
शं नैकमपि सुहृदं पश्यामि, नैकमप्येतादृशं परमं सहायं विजा-
मि । अहो मेघलेखे, धन्या त्वम्, धन्यं ते परोपकारव्रतम्, धन्यं च
जीवनम्; अपि चाहमप्यद्य अतितमां धन्यः, यो हि अपारस्य ते
रुण्यसिन्धोर्भाजनत्वमधिगन्तुं समर्थः । चन्द्रमास्तदानीम् अति-
माकाशवर्त्तिन्याः प्रथमाया मेघमालाया मन्दं-मन्दमात्मनो भुवन-
मोहनं सुकुमारं वदनबिम्बं प्रदर्शयितुमुदयुंक्त । तत् खलु जलध-
ण्डमुदयशैलशिखरस्य विशालस्य शिलापट्टस्य कृत्यमसाधयत् ।
मन्यस्मिन् यदालोकनं न जात्वाशंसे न वाशंसितुं शक्नोमि,-प्रभू-
सुकृतेनाद्य परिदृश्यमानस्यामुष्य जलधरशकलस्य प्रसादात् त-
वोदयशैलस्य कश्चिदाभासमध्यगच्छम् । इन्दुरुद्गन्तुमारभत ।
दानीं स निवार्यताम् । इदानीमहमेनमालोक्य आत्मनोऽपि व्य-
म् । चन्द्रः प्रथमां मेघपंक्तिमनतिगच्छन्नेव स्तोकस्तोकं द्वितीयां
वशत् । हन्त तामेतां शोभां नाहं कदाचिदवालोकयम्, न कुतो-
ऽश्रृणवम्, न क्वापि काव्यनिबन्धेऽप्यपठम्, न वा कस्मिंश्चिच्चित्र-
ऽप्यपश्यम् । कौशलं कथयितुः, वैचक्षण्यं वा चित्रकरस्य न तत्सी-
गन्तुमर्हति । सा हि केवलं चक्षुषा गृह्यते, मनसा च बुध्यते ।

साम्प्रतं हि चन्द्रमसः प्रान्तद्वयं तयोः किल प्लवमानयोर्जलदलेखयो
र्मलिनया छाययाऽदृश्यं संवृत्तम् केवलं मध्यभाग एव लोहितलौहि
तया स्निग्धप्रसन्नोज्ज्वलया हृदयङ्गमया आभया परिभासते स
उत्पाटितमिव क्रकचधारया पार्श्वद्वयमस्य तदानीमभवत्। अवलो
कयत एव, न ज्ञायते केन नाम सुकृतपरिपाकेण अपरा काप्यनालो
कितपूर्वा, अनाकर्णितपूर्वा, अचिन्तितपूर्वा च शोभासम्पत्तिर्व्यला
सीत्। शारदः शशी क्रमेणोद्गच्छन्नधोमेघरेखां सर्वथात्यगच्छत्
द्वितीया तु सा साम्प्रतं तस्य मध्यदेशमशोभयत। तदानीं किल भुवा
क्षणार्द्धं युगपदर्धचन्द्रद्वय मालोक्य स्वजन्मसार्थक्यं समपादयत्।
चन्द्रमण्डलमध्यवर्त्तिनी विलम्बमाना सा खलु मेघपंक्तिर्न तदानीं
तथात्वेन विभावयितुमशक्यत। सा हि सुनिर्मलस्य नभसः प्रसन्नेन
नीलिम्ना अपार्थक्येन प्रत्यभासीत्। लोचनद्वयमेतावन्तं कालमहम्पू
र्विकया एकमेव शशाङ्कमद्राक्षीत्, साम्प्रतं तु सपद्यनायासमखेदश्च
द्वौ खलु विलोक्य स्वस्वधनत्वेनैकैकं दृढतरमगृह्णात्। प्रफुल्लं चित्तं
मे प्रफुल्लतरमभवत्। कमप्यलौकिकं प्रमदसञ्चारमन्वभवम्। सांसा
रिकैर्द्रष्टव्यानां निरवशेषाणामपि सौन्दर्याणा मेकस्मिन्नेव सन्निवेश-
मवलोक्य कियत्सुखं मे समुदपद्यत इति न शक्यते प्रकटीकर्त्तुम्।
श्रीमन् पाठक, न खलु तस्याः सुषमायाः काचिदुपमा वा, उत्प्रेक्षा
वा, निदर्शना वा तुल्ययोगिता वास्ति। न मे तादृग् वाग्विभवो येन
वो निवेदयेयं कीदृशी सासीदिति। सा हि आलङ्कारिकाणां रसः,
वैदान्तिकानां च ब्रह्म। सा हि स्वयं ज्ञेया, सहृदयवेद्या च। याव-
च्छक्यं, क्षामकण्ठश्चातक इवोर्द्ध्ववदनस्तामेव पश्यन्नासम्। लोचन-
मचञ्चलम्, हृदयं सुधीरम्, शरीरञ्चास्पन्दम्। ततश्चाहं तदानीं ग्रह-
गृहीत इव, पिशाचपीडित इव, चित्रार्पित इव, उत्कीर्ण इव, मूर्च्छित
इव चातिष्ठम्।

कांश्चित् क्षणानित्थमेवायापयम्। कियान् स कालः? अत्य-
ल्पः—स्वल्पादपि स्वल्पतरः—सूक्ष्मादपि सूक्ष्मतरः। स खलु सुख-

मय आसीत् । नहि सुखसमयश्चिरं तिष्ठति । दुःखाकरः संसारः । कयत्समयमिह सुख माशास्यताम् । पूर्वक्षण एवाहं कियन्तं नामानन्द ध्यगच्छम्, परस्मिन्नेव तु क्षणे क्वापि स व्यलीयत; केवलं तु कोमतरा तस्यैका स्मृतिरेखावशिष्टा । जन्मन्यस्मिन् न जातु पुनरस्यान-स्यानुभवो भवेत्, स हि केवलमात्मनः स्मरणचिह्नत्वेनैव कामपि मृतिलेखां प्रदाय चिरायान्तर्हितः ।

अचिन्तयम्—भगवंश्चन्द्र, त्वमेव धन्यः । त्वमेव विधातुराद्या सृष्टिः । एकतस्त्वम्, अपरतो जगतो निखिला अपि रोचनाः पदार्थाः सारस्य त्वं कीदृशं वस्त्विति साम्प्रतमेवाहमज्ञासिषम् । अपश्यम्—कयत्ते सौन्दर्यम्, कियत्ते माधुर्यम्, कियांस्ते प्रसादः, कियान् वा ते लास इति । अस्थिते त्वयि जगज्जीर्णमरण्यं,—शून्यं मरु । जडस्य गतस्त्वमेव किञ्चिद् गौरवं रक्षसि । त्वमेवास्याभिमानपदम् । देव सुधांशो, इदं मे किमपि वक्तव्यम् । एतावन्तं कालं यत्खलु भवतः तिसन्दर्शनमेव मनस्युद्भूय महान्तमुद्वेगं मे समुदपादयत्, बहुतिषु कालेष्वतीतेषु तस्याद्य याथार्थ्यमुपलब्धुं समर्थोऽस्मि । अद्य मे रं शुभदिनम् । अद्याहमवबुध्ये—काव्येषु किमर्थं ते इयानत्यादर-ति,—किमिति वा तत्र ते इयती प्रतिपत्तिरिति । अवगच्छाम्यद्य—रीषसुकुमारेषु कविहृदयेषु केन रूपेण त्वं प्रतिभाससे इति । चिनाम्यद्य—भगवत्या परमप्रगल्भया कल्पनया को नाम ते गुणवैभवो लौकिको, येन त्वं कविहृदयेषूत्कीर्णोऽसीति । इयत्कालं प्रतिदिवसं तिकाव्यमेव ते भूयोवर्णनमालोकयतो मे चेतसि त्वां प्रति परा रकिरेवोत्पन्नासीत् । न तत्साहित्यमपश्यं यत्र त्वया सह कविना न शैकमपि क्रीडितम् । नाहं तदानी मजानां किमिति त्वमित्थं तैरा-द्रियसे इति । एवमपि तु अन्तरान्तरा तत्तद्ग्रन्थाध्ययनेन परां प्रीतिं प्नवम् । भगवन्, कुमुदबान्धव, किमन्यद् ब्रूयाम्, अद्यैवाहं ज्ञातो सि त्वं कवीनां कियत्प्रिय इति,—तेन सह ते कः सम्बन्ध इति,— न नयनेन च स त्वां पश्यतीति । योऽसौ ते उरसि कलङ्करेखा परि-

दृश्यते, न सा कविहृदयेन सोढुं शक्यते। कविः किलामुं कलङ्कं कलङ्कं कथयति। सोऽस्फुटोऽङ्कस्तेन विशदव्यापिषु सुनिर्मले किरणकलापेषु ते निमज्जितः। निमज्जत्येवैको दोषो गुणसन्निपाते न च स ते निःसीमस्य सौन्दर्यस्य कणामपि तिरस्करोति, प्रत्युत घर्द्धयत्येव, रम्यमेव हि शैवलेनावविद्धं सरसिजम्।

इत्थमेवाहं स्वचेतसि चिन्तयंस्तिष्ठामि, एतदन्तर एव न जाने केन नाम सुप्रसन्नेन ग्रहेण, केन नाम पाकोन्मुखेन प्राक्तनेन सुकृतभारेण, कया वा अत्यनुकूलया भवितव्यतया सपद्यपरमेकं दृश्यं लोचनमाकर्षत्। अवालोकयम्—भागीरथ्या मृदुस्रोतोमधुरस्यास्थिरचपलस्य शान्तगम्भीरस्य सलिलस्योपरि प्रतिविम्बिता शशाङ्ककिरणधारा सिकतासुन्दरात् पूर्वतटात् सोपानशोभितं पश्चिमकूलं यावत् लम्बमाना। उपविष्ट आसम्, उदतिष्ठम्। पूर्वां दृशमभिमुखं आसौधप्रान्तप्राचीरमगच्छम्। नातः परं किञ्चिदकार्षम्। अहं स्थाणुस्थिरः। अपश्यम्—गङ्गायाः स्फटिकविशदेन सलिलप्रवाहेण संमिश्रितश्चन्द्रमसः स्निग्धस्वच्छः सुकोमलः किरणपूरो धीरचपलासु लहरीमालासु प्लवमानः स्वकीयं निसर्गमाधुर्यं सहस्रगुणमवर्द्धयत्। बहुषु दिनेषु बहुषु स्थानेषु, बहुषु च जलाशयेषु, किं बहुना वाराणसीवाहिन्यां वाराणस्यामपि शशाङ्करश्मेर्विलासलीलामपश्यम्, न तु तन्निखिलमपि दृश्यम् इयत्सुखकरम्, इयन्नयनाभिरामम्, इयच्च हृदयस्पर्श्यासीत्। आपूर्वपश्चिमं शोभमानस्य भागीरथ्याः कौमुदीमयस्य कनकसलिलस्योपरि अन्तरान्तरैकैका क्षुद्रक्षुद्रा तरणी मन्दं मन्दं नृत्यन्ती दर्शकानां मुग्धं हृदयं मुग्धतरमकार्षीत्। क्षणानन्तरमेव च सा तं खलु हिरण्मयं गङ्गाप्रवाह मत्यक्रामत्। इत्थमेव जह्नुनन्दिन्याश्चन्द्रकिरणसम्पर्कैर्नैकविधां सौन्दर्य्यपरम्परां निरीक्षितुमभितो लोचनं सञ्चारयतो मे यदृच्छया 'रामनगरदुर्गं' दृग्विषयता-मुपागच्छत्, अपश्यं दूरतः प्रकाशमानः कश्चित्क्षीणालोकस्तस्य दुर्गस्यास्तित्वं सूचयतीति। दुर्गाधीशस्य महाराजस्य वाराणस्यधिपतेः प्राक्तनानां पुण्य-

तीर्त्तीनां शौर्यसाराणां महीपतीनां कियन्तो वृत्तान्ताश्चेतस्युदगच्छन्। क्षणाद् हर्षं, क्षणाच्च विषादमन्वभवम्। ततः प्रत्यावृत्तं नयनं क्षणमुपरिष्टादुद्दीपितदिगन्तरालं मधुरिमैकागारं चन्द्रमसम्, क्षणाच्चाधस्तात् समुल्लसन्तमुज्ज्वलं मन्दाकिन्याः प्रवाहमालोकयितुं प्रवृत्तम्।

इत्थमेवानन्तरमपि मे कश्चित्समयोऽतीतः। यद् द्रष्टव्यम्, यज्ज्ञातव्यम्, यद्वा भावयितव्यम्, अहं तत्सर्वं पश्यन् जानन् भावयंश्च तिष्ठामि। किं दुःखमिति व्यस्मरमिवाहं तदानीम्। अचिन्तयं किमिति जना मुधैव संसारं निन्दन्ति। संसारः सुखस्याकरो न तु दुःखस्येति स्पष्टं प्रत्यक्षीकृतं तदा वाराणसीवासिभिः। यस्मिन्नीदृशी शरत्, ईदृशो जलधरः, ईदृशश्चन्द्रः, ईदृशस्तस्य किरणकलापः, ईदृशी मन्दाकिनी, ईदृशश्च तस्य सलिलपूरः, सोऽपि नाम संसारो दुःखमयः? यः खल्विदमपि दुःखमाह, न स जानाति किं सुखमिति, जानतोऽपि वा तस्य तदनुभवसामर्थ्यं नास्ति। मम सुखं जायते, न तु तवेति किमस्य तत्त्वमिति न सोऽवबुध्यते। वस्तुस्वभावो हि स स्यात्?—वस्त्वेव सुखदुःखात्मकम्?* कि नु भो एतदेवावितथम्? किं खल्वनलश्च सलिलञ्चैकस्मिन् युगपदेव तिष्ठेताम्। अपि नाम तेजस्तिमिरयोः सामानाधिकरण्यं भवेत्? आन्तरं हि सुखं दुःखं च। कथमिमे बहिःपदार्थे तिष्ठेताम्? त्वं खलु स्वापराधमन्यस्मिन्नारोपयसि? नात्मनो दोषं स्वीचीकीर्षसि! अतिमधुरम्! परदोषानुसन्धानमतिमधुरम्, अतिप्रीतिप्रदञ्च। मन्ये, निर्ज्झरसौ पीयूषधाराणि नेयन्मधुरिममयीति। तत एव त्वमात्मगुणमनालोकयन् जगद्दुःखाकरमित्युद्घोषयितुं साहसमाधत्से। नेदं वेत्सि यत्त्वं स्वापराधेनैव शुक्तिकां रजतं करोषि, रज्जुं सर्पं पश्यसि, स्थाणुं च पिशाचं जानासीति। अन्धस्त्वं स्थाणुं न पश्यसीति स्थाणोरेष दोषः? अत एव

---

* सुखदुःखमोहात्मकं सर्वमृते चितिशक्तेरिति साङ्ख्यसिद्धान्तः। वासनाभेदादेकस्मादेव वस्तुनः सुखं, दुःखं मोहो वानुभूयत इति वेदान्तिनः।

त्वं सत्यप्यस्मिंश्चन्द्रमसि, सत्यप्यस्मिन् नभोमण्डले, सत्यप्यस्मिन्म-न्दाकिनीपूरे सत्स्वपि च वाराणसीसदृशेषु स्थानेषु संसारं त्वं दुःखाकरं कीर्त्तयसि ? यदि सुखमीहसे, हृदयं हृदयमिव सम्पाद्य 'सहृदयो' भव। ततस्त्वं किं दुःखमिति न पुनर्ज्ञास्यसि, न च ज्ञास्यसि वस्तुतो दुःखनाम्ना किञ्चिदासीन्नवेति। ज्ञास्यसि अभितस्त्वां सुख-पारावारः संस्फुरतीति। ततश्च चिराय "सा निष्ठा सा परा गति" भवेदिति।

प्रकृत्यास्तादृशेन सौन्दर्येण मुग्धचित्तवृत्तिरहम् इत्थं कियत् किमचिन्तयम्, कियान् प्रश्न उत्थितः, कियत्प्रतिवचनं जातम्, कियतीयुक्तिः प्रदर्शिता, कियान् दोषो विलोकितः, पुनश्च स विखण्डितः। नापरं किमपि कृत्यमासीत्। केवलं कामपूरं प्रकृत्या विहतोपमं माधुर्यं विलोकयन्नासम्। निशीथिन्याः कियन्तं कालमित्थमतिष्ठमिति न स्मरामि। परन्तु तत् खल्वेकं मे सुखदिवसमतिक्रान्तं, यद्धि मृत्योः प्राक्क्षणं यावच्चेतसि मे सुस्पष्टमङ्कितं स्यात्, यच्चाहं न जातु विस्मर्तुं शक्नुयाम्।

श्री प्रकाशानन्दशर्मा।

———:o:———

## महामङ्गलसुत्तम्।

पालितोऽनूदितम्

महामङ्गलसूत्रम्।

एवं मया श्रुतम्—एकस्मिन् समये भगवान् श्रावस्त्यां विहरति जेतवने (१) अनाथपिण्डिकस्य आरामे। अथ खलु अन्यतरा देवता

---

(१) जेतोनाम राज्ञः प्रसेनजितः पुत्रः, अनाथपिण्डिकेननाम्ना केनापि धनिकेन तत्सकाशात् स आरामः क्रीत्वा बुद्धदेवाय प्रदत्तः, तदेव जेतवनम्। अनाथ पिण्डिकः कदाचिद् अनाथ पिण्डदनाम्ना दृश्यते।

अभिक्रान्तायां रात्रौ अभिक्रान्तवर्णा केवलकल्पं जेतवनमवभास्य येन भगवान् तेनोपसमक्रंस्त; उपसंक्रम्य भगवन्तमभिवाद्य एकान्ते अस्थात्। एकान्ते स्थिता खलु सा देवता भगवन्तं गाथाभिरभाषिष्टः—

१

बहवो देवा मनुष्याश्च मङ्गलानि अचिचिन्तयन्।
आकाङ्क्षन्तः 'सोट्ठानम्,' (१) ब्रूहि मङ्गलमुत्तमम्॥

२

असेवना च बालानां (२) पण्डितानां च सेवनात्।
पूजा च पूजनीयानाम्—एतन्मङ्गलमुत्तमम्॥

३

प्रतिरूपदेशवासश्च पूर्वं च कृतपुण्यता।
आत्मसम्यक्प्रणिधिश्च,—एतन्मङ्गलमुत्तमम्॥

४

बहु सत्यं च शिल्पं च विनयश्च सुशिक्षितः।
सुभाषिता च या वाचा, (३) एतन्मङ्गलमुत्तमम्॥

५

मातापित्रोरुपस्थानं पुत्रदाराणां संग्रहः (६)।
अनाकुलाश्च कर्मान्ताः, (४)—एतन्मङ्गलमुत्तमम्॥

६

दानञ्च धर्मचर्या च ज्ञातकानां (५) च संग्रहः (६)।
अनवद्यानि कर्माणि, एतन्मङ्गलमुत्तमम्॥

---

(१) अस्य शब्दस्य संस्कृतं नाधिगम्यते 'स्वस्ति' शब्दः पालौ 'सोत्थि' उच्यते। तस्मादेवेदं पदं जातमिति सम्भाव्यते। ततश्च सुखमस्यार्थ इति पालिविदो वदन्ति।

(२) मूर्खाणाम्।

(३) वाक्।

(४) वृत्तिः, व्यवसाय इत्यर्थः।

(५) ज्ञातीनाम्। (६) रक्षणमितिभावः।

७

(१) आरतिर्विरतिः पापात्, मद्यपानाच्च संयमः ।
अप्रमादश्च धर्मेषु—एतन्मङ्गलमुत्तमम् ॥

८

गौरवं च "निवातो" (२) च सन्तुष्टिश्च कृतज्ञता ।
कालेन धर्मश्रवणम्, एतन्मङ्गलमुत्तमम् ॥

९

क्षान्तिश्च सुवचस्ता, च (३) श्रमणानां च दर्शनम् ।
कालेन धर्म-'साकच्चा' (४)—एतन्मङ्गमुत्तमम् ॥

१०

तपश्च ब्रह्मचर्या च आर्यसत्यानां (५) च दर्शनम ।
निर्वाणसत्यक्रिया च,—एतन्मङ्गलमुत्तमम् ॥

११

स्पृष्टस्य लोकधर्मैः चित्तं यस्य न कम्पते ।
अशोकं विरजं क्षेमम्—एतन्मङ्गलमुत्तमम् ॥

१२

एतादृशानि कृत्वा सर्वार्थमपराजिताः ।
सर्वत्र स्वस्ति गच्छन्ति; तेषां मङ्गलमुत्तमम् ॥

विधुशेखरशर्मा ।

———०———

(१) आरतिशब्दोऽत्र त्यागार्थो बोध्यः ।

(२) संस्कृतं नाधिगम्यते । अर्थस्तु 'विनयः'—'नम्रवृत्तिः' ।

(३) सुभाषितेत्यर्थः ।

(४) 'साकच्चा' शब्दस्य संस्कृतं दुर्लभम्; तदर्थस्तु 'आलाप' इति ।

(५) दुःखम् दुःखसमुदयः (दुःखकारणम्), दुःखनिरोधः, दुःखनिरोधोपायश्चेति बौद्धानां चत्वारि आर्यसत्यानि ।

# मित्रगोष्ठी-पत्रिका।

## ( मासिकं संस्कृतपत्रम्। )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् "।

ऋग्वेदः।

द्वितीये वर्षे } १८२७ शकाब्दाः, कार्त्तिकः { सप्तम संख्या

## वेदवृत्तान्तः।

विजानीमो वयं परमपण्डितेन श्रीमता मोक्षमूलरभट्टेन ऋग्वे- [illegible]स्य प्रथम प्रकाशनसमये पाश्चात्यानां विदुषां वेदानुशीलने प्रवृत्ति- [illegible]त्पादयितुं कियन्नाम प्रयतितमिति। उक्तं तेन क्वचित्—" असकृ- [illegible]हं पृष्टोऽभवम् यत्, कोऽयं वेदो नाम? किमर्थमयं प्रकाशनीयः? [illegible]: खलु ग्रन्थः प्रायश्चतुःसहस्रवर्षपूर्वं निबद्धः, यश्च प्रथमत एव मूर्त्ति- [illegible]जकानां वन्यानां ( Savages ) कस्याश्चिदशिक्षितायाः जातेः कृते [illegible]ञ्छितोऽभूत्; यश्च स्वयं भारतीयैरपि न जातु प्रकाशितः, यद्यप्येनं [illegible]म्प्रतं ते आत्मनो धर्मे, नीतौ, दर्शने च परं प्रमाणत्वेन स्वीकुर्वन्ति, [illegible]स्मादपि ग्रन्थाद् अस्माकं किं नाम शिक्षणीयं सम्भाव्यते? अपि [illegible]ाम वयम् इंलैण्डीयाः अथवा युरोपीया जनाः धर्म-नीति-दर्शन-स- [illegible]बंधीयेषु प्रश्नेषु ब्राह्मणानां प्राचीनाभ्यो गीतिभ्यः कमपि नूतनमा- [illegible]लोकं प्राप्नुयामेति सम्भाव्यते? अप्ययं तथा सुदृढो निश्चयोऽस्ति, [illegible]था नायं ग्रन्थो भारतीयानां कापि नवीना प्रवञ्चनाभवेत्, येन न [illegible]केवलमस्माभिः प्रयुक्तः श्रम एव विनष्टः स्यात्, अपितु चतुराणां [illegible]भारतीयानाम् उपहासकारणतां वयं न गच्छेमेति? एषाम्, ईदृशाना- [illegible]मपरेषां च बहूनां प्रश्नानां प्रतिवचनं मया सटीकस्य ऋगवेदस्य प्र-

काशनारम्भात् पूर्वं प्रदेयमासीदिति "* । श्रीमान् मोक्षमूलरमहा-हाशयः कैः कैः प्रकारैस्तान् प्रश्नान् प्रत्युक्तवानिति सम्यक् प्रकाश-यितुं क्षुद्रशरीरेयं पत्रिका न कथमपि शक्नोति । केवलं द्वित्राण्ये-तद्वचनानीह उद्ध्रियन्ते:—अतोऽहं पूर्वोक्तेषु प्रश्नेषु कांश्चित् प्र-त्युत्तरयितुं, कथितानां च संशयानां कांश्चिन्निरसितुमित्थं भवतो बो-धयन् यतिष्ये यत् प्रथमं तावद् वस्तुतो वेदः क इति, द्वितीयतस्तु किं तेन प्रयोजनं न केवलं भारतीयानामेव, किन्तु अस्माकं युरोपीया-नामपि,—तत्रापि न केवलं प्राच्यभाषाध्यायिनामेव, अपितु एकैकस्य विद्यार्थिनो यो हि धर्मं वा, पुरावृत्तं वा, दर्शनं वाधीते,—एकैकस्य मनुष्यस्य, यो हि मानवजाते र्महतश्चिन्ताप्रवाहस्यान्वेषणानन्दमनुभूत-वान्,......एकैकस्य च विद्यार्थिनो यो हि यथार्थनामधेयाया 'मानव-जातित' उत्पन्न इति" † ।

श्रीमन्तः पाठकमहाशयाः, नूनं प्रशस्यतमोऽयं महाभागो मोक्ष-मूलरः, अन्ये चैतादृशः पाश्चात्या विद्वांसः, ये हि आत्मप्रभावेन स्व-

* Max Müller : *Chips from a German Workshop* Vol. I. P. 1.

† तत्रैव २ ३ पृ० "I shall endeavour, therefore, as far as this is possible within the limits of one lecture, to answer some of these questions, and remove some of these doubts, by explaining to you, first, what the veda really is, and, secondly, what importance it possesses, not only to the people of India, but to ourselves in Europe,—and here again, not only to the student of oriental languages, but to every student of history, religion, or philosophy ; to every man who has once felt the charm of tracing that mighty stream of human thought on which we ourselves are floating on ward, back to its distant mountain-sources ; every one who has a heart for whatever has once filled the hearts of millions of human beings with their noblest hopes, and fears, and aspirations ;—to every student of mankind in the fullest sense of that full and weighty word."

तराभिर्वाचोयुक्तिभिः सर्वथा विमुखानपि प्रतीच्यान् सविशेषं
र्थालोचनायां प्रवर्त्तितवन्तः, तेन च लुप्तप्रायां भारतीयार्यकीर्त्ति-
ं दूराद् दूरतरेऽपि प्रतीच्याकाशे सम्प्रसारितवन्तः। इत्थं श्रीम-
मोक्षमूलरभट्टेन कीदृशाः प्रश्नाः प्रतिवचनीया आसन्निति? भारते
ायं दशाविपर्यास आगतः; (ईश्वरः प्रसीदतु, यथा नाभ्यागच्छेत्)
वेदो वञ्चनोपायो न वेति सन्दिह्यतेऽपि कैनचिद् भारतीया-
। परन्तु इत्थं वयमधः पतिताः, यथा सर्वविषयेषु वेदस्य प्राधा-
द्घोषयन्तोऽपि न स्वयं तदालोचने प्रवर्त्तामहे, न वा अन्यमपि
र्तयितुं यतामहे।

"कृत्स्नो वेदोऽधिगन्तव्यः सरहस्यो द्विजन्मना"॥

मनु.२.। १६५.

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"॥

मनुः, २ अ० १६८. श्लो०

"योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः।
स संमूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः॥
अधीत्य विधिवद् वेदं वेदार्थं न विचारयेत्।
स सान्वयः शूद्रकल्पः पात्रतां न प्रपद्यते"॥

कूर्म्म पु० उप.वि. १३ अ०.

इतीदृशं वचनशतं न खलु नास्माभिरसकृद् विलोक्यते? नेदं न
ज्ञायते यद्वेदानध्ययनेन सर्वथा परिहरणीयं शूद्रत्वमपि सम्पद्यत-
ते। परन्तु मुग्धचेतोवृत्तिभिरस्माभिः स्वयमेवात्मनो मस्तिष्कं
था चर्वितं यथा तदर्थपर्यालोचनायाः शक्तिरपि नास्ति। यद्दि सर्वं
हायापि पठनीयम्, यस्य च बलेनैव बलवद्भिरस्माभिः सभामण्ड-
षु साटोपमट्टाट्यते, येन विना च पदमात्रमपि गमने दुरोदर्कं पाप-
म्पद्यत इत्युच्चैस्तरामारटामः, हन्त तदेवाद्यास्माभिर्नाद्रियते, तस्यै-
ध्ययनमिदानीं निष्फलमिति विविच्यते तस्यैव चानुशीलनं जडत्वं

जनयतीति लिखितुमपि * न विरम्यत इत्यहो अस्माकं मूलोच्छे पाण्डित्यप्रकर्षः ।

मन्यामहे, वेदे वस्तुतः किमस्तीति सविशेषज्ञानाविषया वर्णित तेषां मधुरिमाणं रसयितुं कस्य नाम चित्तं न चाञ्चल्यमधिगच्छे पुरा किल भारतीयैरार्यैः कथमीश्वरतत्त्वम्, आत्मतत्त्वं वा अनुश लितम्; कथं कैश्च द्रव्यैर्यज्ञादिकमनुष्ठितम्; कथं युद्धरीतिरासी युद्धेषु कानि नामास्त्राणि व्यवाह्रियन्त; कीदृशी यानव्यवस्था; का वाणिज्यम्, किंरूपं गृहनिर्म्माणम्, किं प्रकारः कन्यकानां विवाह कीदृशी समाजस्थितिः, कीदृशमाहार्य्यम्, कीदृशी चिकित्सा, कं दृशं कृषिकार्य्यम्, पूर्त्तकार्य्यम् अन्त्येष्टिविधिः स्वर्गादिकं च, क वा पुराणादिप्रसिद्धानामाख्यायिकानां मूलमित्यादयो बहवो विष वेदादेवैकस्माज् ज्ञातुं शक्यन्ते । भाषातत्त्वाद्यनुशीलनमपि वेदज्ञा नादेव सुकरं भवति । किं बहुना, स्वयमालोचयन्तु भवन्तो वेदार्थम् जानन्तु च तस्मात् कीदृगिव प्रमोदाङ्कुर उत्पद्यत इति । इदं चेह वश्यं वक्तव्यम्-यत् सरसा इव नीरसा अपि वेदस्यांशाः सन्ति तदर्थं मनाग् धैर्य्यमवलम्बनीयम् ।

वयमपि चेतः प्रभृति नियमेन सचेतसां चित्तविनोदनानुकूला वेदांशान् पत्रिकायां प्रकाशयितुमिच्छामः । तत्र तावत् सपत्नीद्वे षस्य वेदे कीदृक् परिचय उपलभ्यते तदेवाद्य कुतूहलिनां पाठकान पुरत उपस्थाप्यते—

१

### सपत्नीद्वेषः ।

अयं सपत्नीद्वेष ऋग्वेदसंहितायां सूक्तद्वये वर्णितः । तत्राद्य सूक्तमित्थम् :—

---

* वदनडादिशब्दाः संस्कृते सुप्रसिद्धाः । प्राचीनेष्वपि ग्रन्थेषु दृश्यं श्यते । यथा—विक्रमोर्वश्याम्—"अस्याः सर्गविधौ" वित्यादिश्लोके "वेदाभ्या सजड" इति । एवमन्यत्र । वेदस्य स्वरमात्रज्ञान् प्रतीयसूक्तिर्न लर्थमा प्रतीति सम्भावयामः ।

१० म० १४५ सू.

देवता—सपत्नीबाधनम्, ऋषिः—इन्द्राणी । *

"इमां खनाम्योषधिं वीरुधं बलवत्तमाम् ।
यया सपत्नीं बाधते यया संविन्दते पतिम्" ॥ १ ॥

अतिवीर्यवतीं लतारूपामिमाम् ओषधिम् † अहम् उन्मूलयामि यया (वधूः) सपत्नीं बाधते, भर्त्तारं च सम्यक् (असाधारण्येन) लभत इत्यर्थः ।

"उत्तानपर्णे सुभगे देवजूते सहस्वति ।
सपत्नीं मे पराधम पतिं मे केवलं कुरु" ॥ २ ॥

हे ऊर्ध्वमुखपत्रविशिष्टे, सौभाग्यहेतुभूते, देवप्रेरिते, बलवति, ओषधे, मम सपत्नीं परागमय (दूरीकुरु), पतिं च ममासाधारणं कुरु ।

"उत्तराहमुत्तर उत्तरेदुत्तराभ्यः ।
अधा सपत्नी या ममाधरा साधराभ्यः" ॥ ३ ॥

हे ओषधे, त्वमुत्कृष्टासि, त्वत्प्रसादेनाहमुत्कृष्टा भवेयम्; लोके या उत्कृष्टाः सन्ति, ताभ्योऽप्यहम् उत्कृष्टतरा भवेयम् । अनन्तरं मम या सपत्नी, सा निकृष्टाभ्योऽपि निकृष्टतरा भवतु ।

न ह्यस्या नाम गृभ्णामि, नो अस्मिन् रमते जने ।
परामेव परावन्तं सपत्नीं गमयामसि" ॥ ४ ॥

अहमस्याः सपत्न्या नामापि नोच्चारयामि; नो खलु कापि सपत्नी-जने रमते । सपत्नीमतिशयेन दूरदेश मेव गमयामः—भर्त्रा अतिशयेन वियोजयामः ।

"अहमस्मि सहमानाथ त्वमसि सासहिः ।
उभे सहस्वती भूत्वी सपत्नीं मे सहावहै" ॥ ५ ॥

---

* येन सूक्तेन यत्प्रतिपाद्यते, तस्य सूक्तस्य सा देवता भवति । अनेन सूक्तेन सपत्नीबाधनं प्रतिपाद्यत इति तदेवात्र देवता । यस्य सूक्तं स ऋषि-रिति नियमः; तथा च सूक्तमिदम् इन्द्राण्या इति । तस्या एवात्र ऋषित्वम् ।

† पाठेति प्रसिद्धाम् इत्यापस्तम्बमतेन सायणः ।

हे ओषधे, अहमभिभवकर्त्री अस्मि, त्वमपि अभिभवित्री भवसि। अत आवामुभे अभिभवित्र्यौ भूत्वा मम सपत्नीम् अभिभवाव।

"उप तेऽधां सहमानामभि त्वाधां सहीयसा।
मामनु प्र ते मनो वत्सं गौरिव धावतु पथा
वारिव धावतु" ॥ ६ ॥

हे पते, अभिभवित्रीमिमामोषधिं तव शिरस उपधानं करोमि। अभिभवितृतरेण तेनोपधानेन त्वामभितो धारयामि। यथा गौर्वत्सं प्रति, यथा वा जलं निम्नेन पथा वेगेन धावति, तथा तव मनो मामनुलक्ष्य प्रधावतु।

भगवता आपस्तम्बेनास्य सूक्तस्य कस्मिंश्चित् सपत्नीघ्न प्रयोगविशेषे विनियोगः प्रदर्शितो यथा—

त्रिःसप्तैर्यवैः पाठां परिकिरति—"यदि वारुण्यसि वरुणात् त्वा निष्क्रीणामि, यदि सौम्यसि सोमात् त्वा निष्क्रीणामीति"। श्वो भूत उत्तरयोत्थाप्य, उत्तराभिस्तिसृभिरभिमन्त्र्य, उत्तरया प्रतिच्छन्नां हस्तयोराबध्य, शयनकाले बाहुभ्यां भर्त्तारं परिगृह्णीयात् उपधानलिङ्गया, वश्यो भवति सपत्नीबाधनं चेति।

अयमर्थः—प्रथममेकविंशतिं यवान् पाठानामिकां लतां परितः "यदि वारुण्यसीत्यादि"मन्त्रेण किरेत्। ततः प्रभाते आद्यया ऋचा "इमां खनामी"त्यादिकया सा पाठा उन्मूलनीया। ततः "उत्तान"-त्यादिभिः तिसृभिरृग्भिः सा अभिमन्त्रणीया पञ्चम्या ऋचा आच्छाद्य हस्तयो स्तां बध्नीयात्, अन्तिमया तु बाहुभ्यां भर्त्तारमाश्लिष्येत्, तेन स वश्यो भवति, सपत्न्याश्च बाधनं भवतीति।

द्वितीयं सूक्तम्,—१० म० १५९ सू०.

देवता पौलोमी शची, ऋषिरपि सैव। *

* "पुलोमतनया शची अनेन सूक्तेनात्मानमस्तौत्। अतः सैवर्षिः, सैवदेवता। इति कात्यायनकृत—"सर्वानुक्रमा"नुसारी सायणः।

"उद्सौ सूर्यो अगादुदयं मामको भगः ।
अहं तद्विद्वला पतिमभ्यसाक्षि विषासीहः" ॥ १ ॥

यदसौ द्युलोकस्थः सूर्यं उदगात्, तन्ममेदं सौभाग्यमुदगात् । तदहं ज्ञातवती । अहं सपत्न्या अभिभवित्री सती भर्त्तारमपि अभिभूतवती—यथा वशीकृतोभर्त्ता मय्येव चिरं वर्त्तते, तथाकार्षमिति भावः ।

अहं केतुरहं मूर्धाहमुग्रा विवाचनी ।
ममेदनु क्रतुं पतिः सेहानाया उपाचरेत् ॥ २ ॥

अहं सर्वं जानामि; "अहं मर्धा"—सर्वेष्ववयवेषु शिर इव प्रधानभूता भवामि; अहमुग्रा सती मां प्रति पतिं प्रियवचनभाषिणमेव करोमि; सपत्नीनामभिभवकारिण्या ममैव बुद्धिं ( कर्म्म वा ) अनुसृत्य पतिरुपागच्छेत् ।

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट् ।
उताहमस्मि संजया पत्यौ मे श्लोक उत्तमः ॥ ३ ॥

ममैव पुत्राः शत्रुनाशका भवन्ति; ममैव कन्या विशेषेण राजते; अपिचाहं सपत्नीनां सम्यग् जेत्री अस्मि; पत्युः सकाशे च ममैव यश उत्तमम् ।

येनेन्द्रो हविषा कृत्यभवद् द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्ना किलाभुवम् ॥ ४ ॥

येन हविषा इन्द्रः ( ममभर्त्ता ) कर्मणां कर्ता, येन च स यशस्वी ( भगवान् वा ) उत्तमश्चाभवत्, हे देवाः, अहमपि तदकार्षम्, अत एवाहं शत्रुरहिता अभूवम् ।

असपत्ना सपत्नघ्नी जयन्त्यभिभूवरी ।
आवृक्षमन्यासां वर्चो राधो अस्थेयसामिव ॥

अहं शत्रुरहिता, अहं शत्रुं हन्मि, जयामि, अभिभवामि च । अस्थिरतराणां जनानामिव अन्यासां सपत्नीनामहं धनं तेजश्च खण्डयामि ।

समजैषमिमा अहं सपत्नीरभिभूवरी ।
यथाहमस्य वीरस्य विराजानि जनस्य च ॥ ६ ॥

अभिभवकारिण्यहम् इमाः सपत्नी स्तथा सम्यग् जितवती, यथाहमस्य वीरस्य ( इन्द्रस्य—पत्युः ), तदीयस्य परिजनस्य चोपरि विराजिता भवानि ।

"एतेनैव कामेन ( सपत्नीबाधनरूपेण ) उत्तरेणानुवाकेन सदादित्यमुपतिष्ठत" इति सूत्रयता भगवता आपस्तम्बेन इदमपि सूक्तं सपत्नीनाशने सूर्योपस्थाने विनियुक्तम् ।

पूर्वं बहुविवाहपद्धतिरासीदिति उदाहृताभ्यां सूक्ताभ्यां स्पष्टमेव प्रकाशत इति पाठकैर्लक्षणीयमिति ।

विधुशेखरशर्मा ।

---

## संस्कृतसाहित्यं पाश्चात्य विद्वांसश्च ।

१

पाश्चात्यैः संस्कृतपण्डितैः संस्कृतसाहित्यविषये बहु सलूकतं, तेषामुक्तिराङ्ग्लोप्रभृतिभाषानिबद्धत्वाद् अस्मदीयैः संस्कृतविद्यार्थिभिर्नसुबोधा, ज्ञातव्या तु सावश्यमेवेति माधुकरीं वृत्तिमवलम्बमानेन मया इतः प्रभृति पत्रिकायां तेषां विदुषां मतं समासेन संगृह्य प्रदर्शयितुमिष्यते । इदञ्चाशास्यते—श्रीमन्तो विद्यार्थिनः विद्वांसश्च तत्सर्वमालोच्य उपादेयं गृह्णीयुः, अनुपादेयं तु युक्त्या साधारणजनानां पुरतः प्रकाशयेयुः,—यथा हि पाश्चात्यानां भ्रान्तैर्वचनैर्भारतीयानाम् अपरेषां च न मोह उत्पद्यते । अवज्यं खल्विदं कृत्यमापतितमिदानीं भारतीयानां विदुषामिति मन्यामहे ।

अद्य तावद् विक्रमादित्य समयप्रभृतिप्रचलितानां साहित्यानां तत्कर्त्रादीनां च समयः पाश्चात्येषु प्रथिततमस्य श्रीमता मोक्षमूलरस्य मतेन स्थूलतः प्रदर्श्यते ।

विक्रमादित्यः कदोत्पन्न इति तन्नाम्ना 'संवद्' इति प्रचलितमब्द-
ानमेव प्रकाशयति, साम्प्रतं विक्रमाब्दस्य ११६२ तमो वत्सरो वर्त्तते।
तेन खीष्टजन्मतः ५६ वत्सरपूर्वमेव विक्रमादित्य आसीदिति ज्ञा-
ते। किन्तु मोक्षमूलरेणापरैश्च पुरातत्त्वविद्भिर्नेदमङ्गीक्रियते। ते
दन्ति—साम्प्रतं विक्रमनाम्ना प्रसिद्धोऽब्दो वस्तुतो न विक्रमेण
वर्त्तितः, किन्तु खीष्टपूर्वभाविना केनापि प्रवर्त्तितः स खीष्टतः बहु-
र्वाचीनेन विक्रमेणात्मनात्मनाम्ना कृत इति। (अत्र विस्तरः सन्दर्भा-
न्तरेण वक्ष्यते) अतो मोक्षमूलरेणेत्थं कालो निर्णीयते :—

ीष्टतः परम्—५५०, विक्रमादित्यो हर्षः उज्जयिन्यधिपतिः।

,, ५३१—५७१ खोसरुनुसिरवान् पारस्यराजः। अय मात्म-
नश्चिकित्सकं 'बारजई'-नामानं प्रसिद्धस्य पञ्च-
तन्त्रस्यानुवादाय भारतं प्राहिणोत्।

,, ५४४ कोरारयुद्धम्, अस्मिन् युद्धे विक्रमादित्येन
म्लेच्छाः सम्यक् पराभूताः। अस्मिन्नेवाब्दे
तान् पराभूय विक्रमादित्यः प्राक् प्रचलितमब्द-
विशेषं संवदिति स्वनाम्ना कृतवान्।

जैनः सिद्धेश्वरसूरिस्तत्र विक्रमस्य साहाय-
कमकरोत्।

मातृगुप्तः—काश्मीरशासकः, भर्तृमेण्ठश्चै-
तत्समकालीनौ।

कालिदासो दिङ्नागस्य बौद्धेषु सुप्रथितग्र-
न्थकारयोरसङ्गस्य वसुबन्धोश्च समकालीनः।

कालिदासो भारविणा सह ६३४ तमाब्दी-
यानुशासनलेख उक्तः।

षष्ठशतकोत्पन्नेन दण्डिना कालिदासस्य से-
तु काव्यं प्रशंसितम्।

कालिदासेन भासस्य सौमिलेश्च नामनी गृहीते।

खीष्टतः परम्—५८७ वराहमिहिरो मृतः । अनेन ४७६ तमा॰
त्पन्नस्यार्यभट्टस्य नाम गृहीतम् । एते च ग्र॰
धृताः, यथा—५०५ तमाब्दोत्पन्न-श्रीसेनकृ॰
रोमकसिद्धान्तः, पौलुस-अल-युनानीकृतः
लिशसिद्धान्तः, विष्णुचन्द्रकृतो वसिष्ठसिद्धा॰
न्तः, सौरसिद्धान्तः, पैतामहसिद्धान्तश्च ।

,, ५६१—५६६ चीनभाषया अमरकोषोऽनूदितः ।

,, ५९८ ज्यौतिषिक-ब्रह्मगुप्तस्य पिता जिष्णुः ।
दिङ्नागस्य मतमुद्योतकरेण-(न्याय वार्त्तिक॰
कृता)समालोचितम् । उद्योतकरः सुबन्धुना(वा॰
सवदत्ताकारेण),सुबन्धुश्च बाणभट्टेन कीर्त्तितः

,, ५५०—६०० शिलादित्यः प्रतापशीलः ( मालवाधीशः )
प्रभाकरवर्द्धनः, एतस्य परिषदि माधवगुप्त॰
तारकः, सुषेणश्चासन् ।
राज्यवर्द्धनः-प्रभाकरवर्द्धनस्य ज्येष्ठः पुत्र॰
अनेन मालवराजो जितः स्वयन्तु गौडाधिपे॰
गुप्तेन, कर्णसुवर्णेश्वरेण शशाङ्केन वा पराभूतः

,, ६०५ चीनदूतः फेइ-तु (Fei-tu)

,, ६१०—६५० शिलादित्यो हर्षवर्द्धनः प्रभाकरवर्द्धनस्य क॰
निष्ठः पुत्रः । अस्य स्वसा राज्यश्रीर्नाम ग्रहव॰
र्मणे दत्तासीत् । ग्रहवर्मा मालवाधीशेन मारितः,
हर्षस्य मन्त्री भाण्डिर्नाम । प्राग्ज्योतिषपुराधि-
प-कुमारेण भास्करवर्मणा तस्य मैत्री आसीत् ।
महाराष्ट्रपतिना द्वितीय पुलकेशिना युद्धम् ।
अयं चीनपरिव्राजकस्य 'हुयेनत्सां' इत्यस्य सम-
कालीनः ( ६२१-६४५ )
काव्यादर्शदशकुमारचरितकारो दण्डी ।

सुबन्धुर्वासवदत्ताकारः।

बाणः--हर्षचरित--कादम्बरी--चण्डीशतक प्रणेता *।

मयूरः, भक्तामरस्तोत्रकारो मानतुङ्गः, नारायणः, आढ्यराजः।

भर्त्तृहरिर्मृतः (५५०) जयादित्यः (काशिकाकारः) मृतः (६६०)

ब्रह्मगुप्त उत्पन्नः (६६०)

प्रदर्शितायामस्यां समयक्रमपरिपाट्यामद्यापि क्वचित् क्वचित् सन्देविग्यत एवेति मोक्षमूलरेणोक्तम्।

श्रीसंग्राहकः।

---

प्रश्नः

"साम्प्रतं कीदृशीसंस्कृतशिक्षाऽपेक्ष्यते ?"

उत्तरम्—

श्रीमहेशचन्द्र तर्कचूडामणेः।

अस्य प्रश्नस्योत्तरदानात् प्रागेव जिज्ञासूनां तात्पर्यग्रहः कर्त्तव्यः। न्यथास्योत्तरदानं दुष्करमेव, तथाहि प्रश्नघटकस्य "अपेक्ष्यत" इत्य। पदस्य कर्त्तृपदमूहनीयं भवति। कीदृशैर्जनै रपेक्ष्यते, इतिप्रश्नकर्त्तुकव्यमासीत् परन्तु तदनुक्त्या ग्रन्थकर्त्तुराशयः सम्यङ्नावबुध्यते थंकारमुत्तरं दीयेत ? तथापि मन्यामहे कस्यचिदाङ्गलविद्याध्यायिऽयंप्रश्न इति, यदि तस्यैवप्रश्नः स्यात्तदाऽऽङ्गलविद्यार्थिभिश्छात्रैङ्गलविद्यासहकारित्वेन कीदृशीसंस्कृतशिक्षाऽपेक्ष्यतइति प्रश्नस्याशय उन्नेतव्यः। तादृश आशये सत्युत्तरं सुकरमेव, डिग्रीपरीक्षा-

---

* पार्वतीपरिणयनाटकं बाणेन कृतमिति मोक्षमूलरेणोक्तम्। तदस्माभ्यं रोचते।

कृत्वेन निर्द्धारितासंस्कृतशिक्षैव साम्प्रत मपेक्ष्यत इत्युत्तरं देयम्।
अथ यदि तादृशं तात्पर्य्यं न स्यात् तदापि बृटिशां मतानुसारे
संस्कृते या या विद्याः सन्ति तासां सर्वासामेव स्थूलज्ञानं यथास्यात्
तथैव संस्कृतशिक्षाऽपेक्ष्यत इत्युत्तरं दातव्यम् ।

प्राचां पुनरेकाविद्यासुशिक्षितेति मतमासीत् इदानीन्तु सर्वासां
विद्यासु प्रवेशः कर्त्तव्य इति बहूनां मतं श्रूयते । तदनुसारेण सर्वासां
विद्यानां सामान्यतः शिक्षाऽपेक्ष्यत इत्युत्तरं देयम् । विशेषशिक्षा
दीर्घकालव्यापिनी दुःसाध्याचेति सा नेदानीन्तनानां हृदयङ्गमा । अ
ल्पीयसा कालेन यथाकथञ्चित् किञ्चित् किञ्चिच्छास्त्रमधीत्य यश्चि
मर्थमुपार्जयेत् स एव पुरुषो धन्यः स एव सार्थकजन्मा तस्यैव सिद्धा
पुरुषार्थाः इत्यतः शास्त्रं यथा यथा संक्षिप्तं संक्षिप्ततरं संक्षिप्ततमं
लभ्यते तथा तथा विद्यार्थिनां तदुपादेयमुपादेयतरमुपादेयतमं
भवतीति प्रायेण संग्रहग्रन्थानामेवाध्ययनप्रवृत्तिर्दृश्यते । एकं व्याक
णमेव पश्यन्तु भवन्तः पाणिनिं त्यक्त्वा कातन्त्रमधीते तदपि हि
मुग्धबोधं तच्च परिहृत्य सारस्वतचन्द्रिकां पठतीति सर्वेषां शास्त्र
णामीदृश्यध्ययनव्यवस्था, ज्योतिषं स्मृतिशास्त्रं दर्शनशास्त्रं
प्राञ्जलं कोऽपि नेच्छत्यध्येतुं अत एव केनचित् कविनोक्तम्—

ज्ञातेव्याकरणं हतं तदखिलं श्रीबोपदेवेकवौ
गङ्गेशप्रभृतौ च नष्ट मधुना न्यायादिशास्त्रं परम् ।
श्रीमद्भागवते कुविन्दकविनाख्याते पुराणं हतं
जातेश्रीरघुनन्दने कलिघरे तद्धर्मशास्त्रं हतम् ॥ इति ।

तदिदानीं बहूनामपि शास्त्राणां किञ्चित् किञ्चिदध्ययन मेवा
क्ष्यत इति जानीमः । अस्माकं पुनर्मतं शब्दशास्त्रं तथाध्येतव्यं य
संस्कृतं वक्तुं बोद्धुं लिखितुञ्च शक्यते, अन्येषां शास्त्राणान्तु साम
न्यतो ज्ञानमपि शोभते व्याकरणस्यतु न तथा "उक्तं ह्यव्य कार
स्त्वन्धइति" प्रयोजनविशेष श्चेदपेक्ष्यते तदा विशेषत एव तत्तच्छ
स्त्रमध्येतव्यमित्यलं विस्तरेणेति ।

## वार्त्ताःसम्पादकाभिप्रायाश्च ।

### वङ्गेषु दुर्गोत्सवः ।

वङ्गेषु शारदो दुर्गोत्सव इवापरः कश्चिन्महानुत्सवो वङ्गवसुन्धरया ( अथवा भारतवसुन्धरयैव ) नेदानीमालोक्यते, पुराप्यालोक्यत न वेति न जानीमः । चत्वारि दिनानि पुण्यमङ्गलदुन्दुभिनिनादेन वङ्गगगनमण्डलं परिपूरितमभवत् । प्रतिगृहं प्रमोदप्रवाह उदतिष्ठत् । समं मदस्मदीयैर्हिन्दूनां पुरतः कानिचिद्दिनानि मूर्त्त इव सुखसन्दोह आविरासीत् ।

दुःखबहुलस्य संसारस्य सेवनादतितमां ग्लानस्य मन्दीभूतोत्साहोद्योगस्यान्तःकरणस्य विश्रमणाय पुनरुद्दीपनाय चान्तरान्तरा प्रमोदहेतुरुत्सवो विहितोऽस्मदीयैर्विचक्षणैः शास्त्रकृद्भिः । नह्यन्तरान्तरा अगृहीतयवसकवलः, असेवितसलिलश्चाश्ववरोऽपि शकटनियुक्तः सन्नविश्रामं धावितुं शक्नुयात् । स चायं शास्त्रज्ञैर्विहितो भारतीयोत्सवो न केवलं प्रमोदैकप्रयोजनः । धर्म्यः खल्वयं, शिक्षितव्यानि चात्र बहूनि सन्ति । अन्यथा सुरापान-वेशसेवनादिभिरपि प्रीतिलाभस्य सौकर्यं कस्य नामाविदितम् ? तदिह महति दुर्गोत्सवे किमस्माकं शिक्षणीयमस्ति, किमर्थं वात्र सधनाश्च निर्धनाश्च, पण्डिताश्च ...लिशाश्च, सज्जनाश्च पामराश्च वैष्णवाश्च, शाक्ताश्चाविशेषेण परमा...ष्यन्ते, किमिति चायमुत्सवः शास्त्रेषु * नित्यत्वेनाप्यङ्गीकृत इति ...सर्गत एवामी प्रश्नाश्चिन्तयितु श्चेतस्युत्तिष्ठेयुः तत्समाधानमेवेह ...मासेन पाठकेभ्योऽस्माभिरुपहर्त्तुमिष्यते । सर्वैरेव हि सेवनीयोऽयमुत्सवः ।

दुर्गोत्सवेऽभ्यर्च्यमानेयं देवी दुर्गा केति निर्णीत एव तेषां प्रश्नानां निरवद्यमुत्तरं लभ्येत । ज्ञायत एव सर्वैरस्या देव्या महीमयी मूर्त्तिः विविधास्त्रशस्त्रोल्लसितैः क्वचिच्चतुर्भिः, क्वचिद् दशभिः, क्वचित् षो-

---

* संयोगपृथक्त्वन्यायेन काम्यनित्योभयरूपा दुर्गापूजेति स्मार्त्ताः ।

ङ्शभिः कचिच्चाष्टादशभिर्भुजैर्निर्मीयते, सिंहाधिरूढा महिषासुरम र्द्दनोद्धता च सेति ।* दृष्ट्वैनां युद्धदेवतेयमिति बुध्यते । वस्तुतोऽपि तत्तथैव । पुरा किल युद्धविजिगीषुभिर्महीपालैरेव साराध्यासीत प्रयोजनं च तस्य शत्रुविनिपातनमासीत् । देव्या बोधने प्रयुक्तं मन्त्र जातमेवेदं द्योतयति । तद्यथाः—

"शक्रेण संबोध्य च राज्यमाप्तं
यथा, तथाहं प्रतिबोधयामि ।
यथैव रामेण हतो दशास्य-
स्तथैव शत्रून् विनिपातयामि" । इति

बोधनविनियुक्ता अन्येऽपि मन्त्रा आलोचनीयाः । अतएव हि राजभिराश्विनसितसप्तम्यादि दिन चतुष्टयेषु महता सम्भारेण देवीमेतामर्च्चयित्वा विजयप्रस्थानमक्रियत । अस्या देव्याः पूजनाव्यवहितपरं युद्धयात्राव्यवहितपूर्वं च अपराजितेति अन्यापि काचिद्युद्धदेवता राजभिरर्च्चनीयेति दृश्यते । अस्या उपरिस्थितयो र्भुजयोर्दक्षिणे खड्गं, वामे चर्म्म; अधःस्थयोर्दक्षिणे वरः, वामे त्वभयमिति । "शरीरारोग्यमैश्वर्यं विजये संप्रयच्छ मे" इति सा प्रार्थ्यते । प्रस्थाने सहैव देवीसापराजिता गच्छेदितीव तस्या मूर्त्तिरूपाया 'अपराजितेति' प्रसिद्धाया लताया वलयधारणमपि विधेयं दृश्यते अयं तन्मन्त्रः-

---

* केषाञ्चित्पाठकानां कृते दुर्गादेव्या ध्यानमन्त्रात् किञ्चिदिहोद्ध्रियते:-

*　　*　　*　　*　　*

त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् । मृणालायतसंस्पर्शदशबाहु समन्विताम् । त्रिशूलं दक्षिणे धेयं, खड्गं चक्रं क्रमादधः । अधस्तान्महिषं तद्वद् विशिरस्कं प्रदर्शयेत् । शिरच्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् । हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् । रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् । शपाशवामहस्तेन धृतकेशं च दुर्गया । वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् । देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ॥

*　　*　　*　　*　　* इत्यादि ।

"जयदे वरदे देवि दशम्यामपराजिते ।
धारयामि भुजे दक्षे जयलाभाभिवृद्धये" ॥ इति ॥

देवीं महिषासुरमर्दिनीं दुर्गाम्, अपराजितां च पूजयित्वा । दशम्यां राजभिर्विजययात्रा क्रियते इति हि सा तिथि 'विजया' दशमीति गीयते । न कथञ्चित्तिथिरसौ विजयार्थिना राज्ञोल्लङ्घनीया । कार्यगौरवादसमर्थपक्षे विधानमाह राजमार्त्तण्डः—

"कार्यवशात् स्वयमगमे भूभर्त्तुः केचिदाहुराचार्याः
छत्रायुधाद्यमिष्टं वैजयिकं निर्गमे कुर्यात्" ॥ इति

इत्थं च यत्पूजनं पुरा किल शत्रुविनिपातनेच्छूनां राज्ञामेवाभूत्, मन्यामहे, तस्य सर्वत्रैव महोपकारकत्वं पर्यालोच्य मणीषिभिः सर्वेषामेव कर्त्तव्यत्वेन तद्विहितम् । कारण मत्र क्रमेण प्रपञ्च्यते ।

यदि कश्चिद्यथार्थपुरुषार्थस्य सिद्धिमर्थयेत, लौकिको वा पारलौकिको वास्तु तस्य स पुरुषार्थः, सर्वत्र ऐक्यं तेनावश्यमेव सेवितव्यं स्यात् । यद्यस्यैक्यबुद्धिर्नोत्पद्येत तर्हि प्रतिपदं तस्य विपत्तिः । पारलौकिके तावद् वेदान्तदर्शनमेवोच्चैस्तराम् ऐक्यज्ञानमुद्घोषयति—"आत्मैवेदं सर्वम्, ब्रह्मैवेदं सर्वम्," "ऐतदात्म्यमिदं," सर्वम् "मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति" इत्यादिभिः परःशताभिरद्वैततत्त्वप्रतिपादनपरायणाभिः श्रुतिभिः । लौकिके तु शास्त्रानुसन्धानस्य प्रयोजनमेव नास्ति, स्वयं सर्वं प्रत्यक्षीक्रियताम् । प्रदर्शयतु भवान् को नाम स्वजनविरोधमापन्नः परां श्रियं, कुशलसम्पत्तिं वाधिगच्छतीति । स्वस्वपरिवारवर्ग एव किं दृष्टिं सञ्चारयतु भवान् यदि नामैकैकः परिवारेषु परस्परं भिद्यते, तर्हि कियत् सुखमुत्पद्यते इत्याबालं सर्वत्र प्रसिद्धम् । अस्मादेव हेतोः आ पञ्चतन्त्राद् आ च वेदात् सर्वस्मिन् खल्वमुमेवार्थं गीयमानं पश्यामः । उपदिष्टा अस्मच्छिशवो नीतिविद्वर्येण :—

"अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।

तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः" ॥

अस्यैवार्थस्य मूलं चिरं ऋग्वेदसूक्तिग्रन्थनकृता सर्वं वेदं श्रावयित्वोपसंहरणसमये सर्वशास्त्रनिर्यासस्वरूपमिव प्रदर्शितम्—

"संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्"। इति *।

एतस्यैवोभयलोकश्रेयस्करस्यैक्यस्य शिक्षणार्थमेव भगवत्या दुर्गायाः पूजनस्य प्रवृत्तिः तदुक्तं देव्यैव— †

"एकैवाहं जगत्यत्र द्वितीया का ममापरा।
पश्यैता दुष्ट, मय्येव विशन्त्यो मद्विभूतयः" ॥ इति

यदस्मिन् वाक्ये संक्षिप्तं, तदेवान्येषु सुविशदं प्रपञ्चितम्। अवधार्यतां का नामेयं भगवती महिषासुरमर्द्दिनी, अस्ति न वानया राज्ञामिवापरेषामपि प्रयोजनमिति। इयं हि दुर्वारभुजवीर्येण दुरात्मना महिषासुरेण स्वर्गान्निराकृतानां त्रिदिवाधिवासिनां तत्प्रतिघातार्थं सम्मिलिता शक्तिः, तेषामेकस्मिन् समागतं तेजः, न त्वपरं किञ्चित्। तद्यथा—

"इत्थं निशम्य देवानां वचांसि मधुसूदनः।
चकार कोपं शम्भुश्च भ्रूकुटीकुटिलाननौ ॥
ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः।
निश्चक्राम महत्तेजो ब्रह्मणः शङ्करस्य च ॥
अन्येषां चैव देवानां शक्रादीनां शरीरतः।
निर्गतं सु महत्तेज स्तच्चैक्यं समगच्छत" ॥

---

* ऋग्वेदस्य दशममण्डलान्तिमसूक्ते अयमेवार्थो बहुधा प्रपञ्चितः।

† अतः परमधृतग्रन्थादिनामानि वचनानि मार्कण्डेयपुराणान्तर्गतस्य 'देवीमाहात्म्य' स्येति बोध्यम्। इदं देवीमाहात्म्यमेव 'दुर्गासप्तशती' 'चण्डी'ति च नाम्ना प्रसिद्धम्।

पे च—

"अतुलं तत्र तत्तेजः सर्वदेव शरीरजम् ।
एकस्थं तदभून्नारी व्याप्तं लोकत्रयं त्विषा ॥
यदभूच्छाम्भवं तेजस्तेनाजायत तन्मुखम् ।
याम्येन चाभवन् केशा बाहवो विष्णुतेजसा" * ॥

* * * * *
* * * * * इत्यादि ।

वं पृथगवस्थिते दैवैर्यः शत्रुर्विनिपातयितुमशक्योऽभूत्, सर्वेषां श-
तीनां सम्मेलने कृते तु स एव लीलया विनाशितः । अस्याः समष्टि-
क्तेरीदृशमुपकारित्वं विविच्यैव देवीमाहात्म्यवक्त्रा मुनिवरेण मेध-
प्रोक्तं—दुर्गादेव्याश्चरित्रं—

"संघातभेदे च नृणां मैत्रीकरणमुत्तममिति" ।

या महाशक्त्या पश्यत एव दुर्धर्षा महिषासुरशुम्भनिशुम्भादयो दैत्या
विनाशिताः, देवताश्च परमामृद्धिं प्रापिताः, सापि यद्युपास्या न
स्यात्, तर्हि केव सा भवतु ।

शत्रुविजयवदन्यान्येष्वपि सांसारिकेषु अस्या महाशक्त्या आव-
श्यकत्वमिति हि राजभिरिव अपरैरपि तस्याः पूजा विधातव्येति
नियमः । इयमेवास्माकं सर्वां विपत्तिमपाकर्त्तुमीष्टे । परस्परम-
क्ये पदमपि गन्तुं वयं विपद्यामहि । विपत्तिं विनाशयतीत्यस्मात्
सा दुर्गेति कीर्त्यते । तदुक्तम्:—

---

* एवं शुम्भनिशुम्भवधे—

एतस्मिन्नन्तरे भूप विनाशायामरद्विषाम् ।
भवायामरसिंहानामतिवीर्यबलान्विताः ॥
ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः ।
शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥
यस्य देवस्य यद्रूपं यथाभूषणवाहनम् ।
तद्वदेव हि तच्छक्तिरसुरान् हन्तुमाययौ ॥

२६ ३

"विपत्तिवाचकोदुर्गं आकारो नाशवाचकः ।
तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता"॥ इति * ।

अतो यदियं शक्तिः 'सर्वमङ्गलमङ्गल्या' 'सर्वार्थसाधिका,' 'सृष्टि-स्थितिविनाशानां हेतुभूता' च न तत्र स्तोकोऽपि संशयावकाशः। अतएवास्या देवीमाहात्म्योक्तं चारित्रं—

"श्रुतं हरति पापानि तथारोग्यं प्रयच्छति" ।

अतएव च तस्या युद्धेषु यद्दुष्टदैत्यनिवर्हणं चरितम्—

"तस्मिन् श्रुते वैरिकृतं भयं पुंसां न जायते" ।

अतएवास्या महामहोपकारित्वात् सकलकुशलनिदानभूतत्वाच्च उप-निबद्धतन्माहात्म्याया दुर्गासप्तशतिकायाः पाठो विहितः । परन्त्वहं वत्सरान्तेऽपि सकृदयं सविशेषं पर्यालोच्य सप्तशतीं न पठामः नहि युक्तार्थानुसन्धानं विना सहस्रकृत्वोऽप्यक्षराणामुच्चैरुच्चारणे समीहितसिद्धिर्भवति । अत एव वयं तस्या महाशक्तेः प्रसादेन व-ञ्चिताः, अत एव च सा रुष्टा सती सकलानभीष्टान् कामानपहन्ती त्यहो भाग्यं येन हि पुरःस्थितमपि रत्नं न पश्यामः, दृष्ट्वापि वा गृह्णीमः, गृहीत्वापि वा हृदयेसंस्थाप्य न यथोचितं सम्मानयामः तदागच्छन्तु भोः श्रीमन्तो भ्रातरः, आगच्छन्तु सर्वे वृथाविरोधवि-द्वेषादिबीजं दूरमपहाय परमाभ्युदयार्थं तामिमां महाशक्तिं देवीम सकृत् साष्टाङ्गेन विधिना प्रणिपत्य प्रसादयामः—

"देवी प्रपन्नार्त्तिहरे प्रसीद,
प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि, पाहि विश्वं,
त्वमीश्वरी देवि, चराचरस्य ॥
विश्वेश्वरी त्वं परिपासि विश्वं,
विश्वात्मिका धारयसीति विश्वम् ।

---

* अपरापर निर्वचनार्थं शब्दकल्पद्रुमो द्रष्टव्यः । तत्रापि अयमेवा उपलभ्येत ।

विश्वेशवन्द्या भवतो, भवन्ति—
विश्वाश्रया, ये त्वयि भक्तिनम्राः" ॥

———o———

## स्वावलम्बनम्।

किं सुखं, किं वा दुःखमिति संक्षेपेणेदं मीमांसितमस्माकं सकलतत्त्वनिष्णातैर्भारतीयैर्मणीषिभिः—

"सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम्।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः" ॥ इति।

स्वल्पाक्षरं वाक्यमिदम्, अर्थस्त्वस्य महान् गम्भीरः परमोपकारकश्च। लौकिकालौकिकेषु सर्वेष्वेव भारतीयशास्त्रेषु अयमेवार्थस्तैस्तैःप्रकारैश्चिन्तितः प्रपञ्चितश्च। परन्त्वसकृदेनं वचसोच्चारयन्तोऽपि न किञ्चित् कर्मणा कर्तुं प्रभवाम इति धिगस्माकं शिक्षाम्। मनस्यन्यत्, कर्मण्यन्यच्च कुर्वाणा वयं दुरात्मनः स्मः संवृत्ताः। परमुखापेक्षिणः कस्य नाम सुखप्रत्याशा? परतन्त्रजीवनस्यान्धस्य दुःखपूर्णं जीवितं केन चक्षुष्मता न प्रत्यक्षीकृतम्—यावत्तस्य कश्चिदनुग्रहबुद्ध्या तदपेक्षितां यष्टिं प्रदाय न स्वयं गच्छति न तावत् स पदमपि गन्तुं प्रभवति; यावत्तस्मै पानीयं न दीयते, तृष्णाक्षामकण्ठोऽपि निर्गच्छत्प्राणोऽपि च स न कथञ्चित्तदुपादातुं शक्नुयात्। एवमेवं सर्वत्रापि। अस्माकमपीयमेवावस्थोपस्थिता। सांसारिकेषु कृत्येष्वपेक्षितानां द्रव्याणां संग्रहे वयमियत् परापेक्षिणो यदस्य भीषणां परिपाकमालोचयतो महद्दुःखमुत्पद्यते। तुच्छेष्वपि कर्मसु साम्प्रतं वैदेशिकानामनुग्रहं विना नास्त्यस्माकं गत्यन्तरमत्र। पश्यत एव ते कौशलेन तथास्माकं गेहमाक्रान्तवन्तो यत् तत्र नयनं सञ्चारयतो वैदेशिकान्येव द्रव्याण्यभित आलोक्येरन्, धर्मकृत्येष्वपि तान्येव व्यवह्रियन्ते, गृहशोभाकराणि तान्येव मन्यन्ते, विलासोचितानि तान्येव गण्यन्ते, गौरवावहानि च तान्येव विचार्यन्ते। न केवलं कुटिलकलाप्रवीणैर्वैदेशिकै

गृहमेवास्माकमधिकृतम्, हृदयमपि तत्तेषामेवाधीनं सम्पन्नम्। यथा ते नर्त्तयन्ति, तथैव नृत्यामः; यत्ते साधु वा असाधु वा कथयन्ति, यन्त्रपुत्तलीवत् तत्प्रतिध्वनि मेवाविष्कुर्मः। तेषामेव कल्याणेन सुन्दरमपि स्वदेशशिल्पं चरणावताडनेन दूरतः क्षिपामः; वस्तुतो वैदेशिकादुत्तमतरमपि स्वदेशीयं द्रव्यं मुक्तकण्ठं निन्दामः। भारतेतिवृत्ताक्षराणि भारतभाग्यदोषेण साधारणेष्वप्रकाशितान्यपि नाद्यापि विलुप्तानि। किञ्चित्परिचिताक्षरैरपि तान्यनुसन्धाय द्रष्टुं शक्यन्ते देशहितचिकीर्षुभिर्विहितानि विधीयन्ते च साम्प्रतं तानि सुलभानि, तदालोचनया ज्ञायते यद्—यद्भारतमद्य वैदेशिककरुणाकटाक्ष मन्तरा वसनाभावेनात्मनो लज्जानिवारणसमर्थं सम्पन्नम्, तदेव नातिपूर्वं देशान्तराणां लज्जां विनिवार्य विलासवस्तुसम्भारं च सम्पाद्य परोलक्षाणि धनान्युपार्ज्जयितुं परं समर्थमासीत्, यद्भारतेऽद्य समुद्रोपकूलवर्त्तिषु नगरेषु वैदेशिकानां वाणिज्यपोतानां समुच्छ्रितैर्गुणवृक्षकैर्गगनमण्डलं समाकीर्णम् तदेवानतिपूर्वं महासमुद्रमुत्तीर्य अपरापरदेशानुपस्थाय न खलु हीनतरं गौरवमध्यगच्छदिति। आत्मोदरं कथमिव पूरयितुं शक्यत इति भारतं नानभिज्ञमासीत्, निसर्गोऽयं, यत्स्वोदरपूरणं नाम, तिर्य्यञ्चोऽप्यत्र नापरमपेक्षन्ते, किमङ्ग पुनर्भारतं तादृशमभूदिति सम्भावयितुमपि शक्यते परन्त्वहो कालप्रभावः! हन्त च शिक्षाप्रकारो भारतीयानाम्, येनासम्भाव्यमपि सम्भवति, अचिन्त्यमपि च स्पष्टं पुरतो दृश्यते। तिर्य्यग्भिरपि यन्न क्रियते, हन्त भोः मुग्धं भारतं कतिचिद् वर्षाणि बहुगौरवबुद्ध्या तदेवानुसरति।

अथवा कृतमतीतचिन्तया। भूतं यद्भवितव्यमासीत् वर्त्तमानमिदानीमालोच्यताम्। अयमयम् उदयशैलशिखर मधिरूढ इव भगवान् भारताभ्युदयसहस्रकिरणः। प्रकाशिता इव दृश्यन्ते समुद्योगकिरणमालिकया अन्धतामिस्रमया भारतीयहृदयाकाशभागाः। प्रवहतीवानुकूलः सुभगो मातरिश्वा। अपहृतकण्टका इव समुज्ज्वला भाति

स्थानः। उच्चैस्तिष्ठन्तीव ग्रहगणाः प्रसीदतीव च भगवती भवितव्यतापि। तदलं विलम्बितेन, उत्तिष्ठन्तु आगच्छन्तु च सर्वे, यावच्छक्यं प्रयतेमहि वयं पुनरपि प्रसादयितुं देवीं भारतलक्ष्मीम्। सङ्कल्प्यतां सर्वैर्न वयमितः प्रभृत्यात्मोदरं पूरयितुं परकरुणाकटाक्षमीक्षेमहि। न किं वैदेशिकानामिवैव अस्माकमपि तदेव चक्षुः, तदेव श्रोत्रम्, तदेव च पाणिपादमस्ति? न वयं गाव इव घासकवलं चर्वयामः। न खलु नास्माकं बुद्धिः शास्त्रेषु वा शिल्पेषु वा यथोचितं क्रमते। न वा नास्मद्भारते सम्प्रत्यपि स्वल्पत्वेऽपि शिल्पादिव्ययवहनोचितं धनमस्ति। न वा नास्ति देहबन्धेऽपि तदर्हं सामर्थ्यम्। केवलं यदभावाच्छिवं दौर्गत्यं सा हि 'इच्छा' नाम। यदीयम् इच्छा स्यात्, तर्हि सत्स्वप्यपरेषु साधनेषु किमित्यस्मत्-समीहितं न सिद्धेत्? पश्यत, यदेते तन्तुवाया स्तुरीवेमादीनि वयनसाधनानि दूरं परिवर्ज्य भिक्षामेव जीविकामाश्रित्य स्वावश्यकवसनोत्पादनेऽप्यसमर्थाः सन्तः साम्प्रतं पुनरपि प्रागिव सोत्साहं प्रतिदिनं प्रभूतानि वस्त्राणि वयन्ति, किमत्र कारणम्? कारणम्—पूर्वं वयं तस्य तपस्विनः कुविन्दस्य सुन्दरमपि वस्त्रं चरणाघातेनापाकार्ष्म, इदानीन्तु तत्सादरं स्वीकुर्म्म इति। इत्थमस्माकमेवापराधेन भारतशिल्पानि मन्दी भूतानि। अद्य तावत्तद् विरोधेन योऽयं देशव्यापक उद्योग आरब्धः तेन शिशुरपि सम्भावयति तूर्णमेव भारतं प्रतिदिनापेक्ष्यं सकलमेव वस्तु सम्पादयितुं प्रभविष्यतीति। यः पुरुषः 'अहं भारतीय' इति स्वल्पमप्यभिमानं पुष्णीयात्, तस्य निरुद्योगावस्थानस्य नायमवसरः। यावच्छक्यं सोत्साहं सर्वैरेव वैदेशिकं परित्यज्य मन्दतरमपि स्वदेशीयमेव द्रव्यमाद्रियताम्। नात्र लेशतोऽपि संशयो यत् यद्धि भारतीयं द्रव्यमिदानीं वैदेशिकापेक्षया किञ्चिद्धीनतरम् अधिकमूल्यं वा प्रतीयेत, स्वल्पैरेवाहोभिस्तच्चारुतरम् अतिसुलभं च सम्पत्स्यत इति। नहि वैदेशिकादि द्रव्याणि प्रथमत एव इत्थं सुलभान्यासन्; क्रमेण हि तेषां सौलभ्यं जातम्। भारतीयद्रव्येऽपि स एव नि-

यमो न विस्मरणीयः । भारतयन्त्रोत्पन्नं यद्यपीदानीं वैदेशिकापेक्षया स्थूलं भवति, भवतु नाम तत् तथा, न तेन किञ्चित्, स्थूलमेव तद्वयं गृह्णीयाम । नहि स्थूलवसनेन अङ्गक्षतिरुत्पत्स्यते, न वा तेन गौरवह्रानाशङ्का । कस्त्वां निन्दिष्यति ? गृहीतस्थूलवसना हि सर्व एव वयं समानाः । काले चेदमेव स्थूलं वसनं सूक्ष्मतया परिणंस्यते । अथ नितान्तं सूक्ष्मवसनेच्छा, किञ्चिदधिकं मूल्यमर्प्यताम्, ढाका—चन्दनगर—शान्तिपुराद्युत्पन्नानि सुबहूनि सूक्ष्मतमानि रमणीयानि वसनान्युपलभ्येरन् । भारतं हीदं न इंलैण्डादिसदृशं स्थानम् । अस्मिन् हि अस्य अवश्यापेक्षं सर्वमेव वस्तु लब्धुं शक्यते इंलैण्डं तु परदेशोत्पन्नं शस्यं विना प्राणितुमेव न प्रभवेत् । यद्वि वसनादिवस्तु भारते विदेशेभ्य आगच्छति, मूलोपादानन्तु तस्य प्रथमं भारतादेव संगृह्य तत्तत्स्थानेषु प्रेर्यते । मूढा वयं यदीदृश्यां सर्वसुखमय्यां भारत वसुन्धरायां स्थित्वापि हन्त कुक्कुरा इव प्रभूणां वैदेशिकानां सदयां दृष्टिं पश्यामः, तेन च शयनासनविहरणादिषु सर्वत्रैव परतन्त्राः सन्तो दुःखमपि सुखमिति धारयामः । इदानीं चक्षुरुन्मीलितं, चैतन्यं चोदितम् अवधीयतां-यथा बहुकौशलकुशलैर्वैदेशिकैरुपच्छन्दिता वयं मधुविषान्नमिव वैदेशिकानां द्रव्यं न गृह्णीम इति । स्मर्यताम्—

"सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम्" इति ।

———:0:———

## "अनुकूलो गलहस्तः" ।

एतावन्ति वर्षाणि तावता श्रमेण तावता चार्थव्ययेन स्वदेशहितचिकीर्षवो वाग्मिनः पत्रिकासम्पादकाश्च जनानां हृदयेषु यं खलु स्वदेशप्रेमाणं जनयितुं नाक्षमन्त, स एवाद्य सपदि वङ्गव्यवच्छेदरूपं निमित्तमुपादाय प्रबलेन रंहसा स्वत एव समुत्पन्नः । वङ्गानामेकस्या अपरां सीमानं गच्छ, पश्येः बालस्य वा तरुणस्य वा, प्रौढस्य वा स्थविरस्य वा स्त्रीजनस्य वा, सर्वेषामेव हृदयं स्वदेशप्रेम्णो रमणीयेन

प्रचुरिम्णा स्फीततरमुल्लसति, सर्वेषामेव वदनं स्वदेशोन्नतिमेवालपति, सर्वेषाञ्च प्रयासः तद्विषयक एव भवन्नभितः प्रस्फुरतीति । न केवलं वङ्गानामेवायं भावः; योऽसौ महान् प्रवाहो वङ्गैककोणे समुज्जृम्भितः, पश्यत्स्वेव सर्वेषु स प्रचुरेण वेगेन समग्रमेव भारतमाप्लावयन् देदीप्यते । सर्वेष्वपि देशेषु गृहाभ्यन्तरे वा बहिर्वा समानमेव चित्रं प्रतिभासते । सर्वत्रैवैक एव व्यवहारः—परित्यक्तवैदेशिकवस्तुव्यवहारा वयं स्वदेशोत्पन्नमेव सर्वं गृह्णीयाम अप्राप्यं च स्वयमुत्पादयामेति । ये हि धनिनः पूर्वं नयनधारिणोऽप्यनयना इव मनसा भारताहितमबबुध्यमाना अप्यबुद्धा इव भारतोन्नतये न किञ्चिदकार्षुः, त एवेदानीमग्रणीत्वमवलम्ब्य वस्त्रादिसम्पत्तये यन्त्रादिकं स्थापयन्ति, यथोचितं च तांस्तानुपायान् विदधति । कैश्चिद् आङ्गलोपत्रिकासम्पादकैः कतिभिश्चान्यैस्तत्पदानुसारिभिर्भारतविद्वेषकैः भारतीयानामयमुद्योगः सावज्ञमुपहसितः न तदानीं तैरदूरदर्शिभिरुत्प्रेक्षितमासीद् यद् भारतीया अन्योन्यमैकमत्येन इयद्गुरुतरं कृत्यमनायासं लीलान्यायेनैव कर्त्तुं क्षमेरन्निति । साम्प्रतं तु नयनसम्मुखमेव तदिदमचिन्तितचरं वृत्तमालोकयतां तेषां विस्मयरसपरीतमिव हृदयमण्डलं संवृत्तम् । दुरोदर्कोऽपि वङ्गव्यवच्छेद एवैतस्य निखिलस्य परिवर्त्तनस्य बीजम् । अतएव कथयामःसोऽयं भारतीयानाम्—"अनुकूलो गलहस्त" एवेति ।

## ऐक्यसूत्रबन्धनम् ।

भारतशासकमतेन सौराश्विनस्य त्रिंशे दिवसे ( १६ अक्टोबर, ११०५ ) वङ्गानां काश्चिद् भागानाच्छिद्य सार्द्धम् 'आसाम-प्रदेशेन भारते कोऽप्यभिनवो विभागो भारतीयानां हृदयमर्मव्यथया सह सृष्टः। अनिच्छतामपि पूर्वोत्तरवङ्गाधिवासिनां भ्रातॄणां परस्परं विच्छदबीजमुप्तं तस्मिन्नहनि भारतसम्राट्प्रतिनिधिना । विभक्तेऽपि वङ्गभूमिमण्डले न वयं हृदयेन भिन्ना इतीदं तु मिथो निवेदयितुमेकैकैः पूर्व-

वङ्गाधिवासिभिः पश्चिमवङ्गाधिवासिभ्यः, एतैश्च तेभ्यस्तस्मिन् दिने पीतरागरञ्जितं सूत्रमेकं प्रहितम्। ऐक्यबन्धनसूचकमिव तत्सूत्रं सर्वैः प्रकोष्ठे धृतमासीत्। स्वस्वविभागस्थितैरपि वङ्गीयैरन्योन्यमित्थं पीतसूत्रविनिमयः कृतः। तदानीं तेषां परस्परं हृदयानुभूतस्यैक्यस्य वदनमण्डलसूच्यमाना मनोहारिणी छविः कस्य नामप्रेक्षकस्य नातितमामानन्दमुदपादयत्। प्रतिवर्षमेवेदमैक्यसूत्रबन्धनं क्रियेत। श्रेयो हृदयैक्यं स्थानैक्यात्।

## स्वदेशद्रव्य व्यवहारे वङ्गीय पण्डितानामुद्योगः।

वङ्गीयानां संस्कृतपण्डितानां समाजसंस्कारे देशाभ्युदये चैतावन्तं कालं वर्त्तमानं दुरन्तमौदासीन्यं क्रमेण विलीयमानमिव लक्ष्यते। स्मृतमिव साम्प्रतं तैर्यत् निर्धनानामपि तेषां प्रयासेन देशसमाजादीनामनन्यसाधारणं प्रभूतं कल्याणं साधयितुं शक्यत इति। अभित एव श्रूयते—पण्डितमहोदयैः समितिषु सम्मिल्य शास्त्रीयप्रमाणोपन्यासपूर्वकं वसनलवणशर्करादीनां देशान्तरागतानां द्रव्याणामव्यवहार्यता उच्चैस्तरामुद्घुष्यते, स्वयं प्रतिज्ञाय चान्येऽपि तद्वर्जनं प्रतिज्ञाप्यन्ते चेति। इदमप्यस्मत्कर्णगोचरमागतं यत् केऽपि पण्डिता एवमेवार्थं व्याख्यातुं स्थानात् स्थानं पर्यटन्तीति। जानीमो वयम्—

"यद्यदाचरति श्रेयांस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते" ॥ इति ॥

अतः श्रेयोभिः पण्डित महाशयै रेतदाचर्यतां, तच्च प्रमाणं क्रियतां येनताननुवर्त्तमाना लोकाः श्रेयसो न परिभ्रश्येयुः; अनर्थं च न ऋच्छेयुः। असन्दिग्धमिदं यद् यदीत्थं ते कानिचिद्दिनानि प्रयासमादध्युस्तर्हि तेषु निसर्गश्रद्धालवः साधारणजना न पुनर्वैदेशिकवस्तुव्यवहारस्य नामापि मुखतो गृह्णीयुरिति। संस्कृतविदुषां तमिमारम्भं वयं हृदयेन समर्थयामहे। प्रसीदतु भगवान् विश्वम्भरः, प्रपूरयतु च भारतम् अनन्यनिरपेक्षं स्वकीयमुदरम्।

# मित्रगोष्ठी-पत्रिका ।

( मासिकं संस्कृतपत्रम् । )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् " ।

ऋग्वेदः ।

द्वितीये वर्षे } १८२७ शकाब्दाः, अग्रहायणः । { अष्टम संख्या

## वेद वृत्तान्तः ।

२

### द्यूतः वनम् ।

ऋग्वेदस्य दशममण्डलीयं चतुस्त्रिंशं सूक्तं सुष्ठु खलु द्यूतका-
ाणां परिणामं प्रदर्शयति । अस्मिन् सूक्ते १४ चतुर्दश ऋचः सन्ति ।
ात्र १,७,९,१२,१३ ऋक्षु अक्षकृषिप्रशंसा, अपरासु तु अक्षकितव-
निन्दा । अस्य सूक्तस्य ऋषिः कवष ऐलुषो नाम, मौजवान् वा ।
बहुषु वैदिकसूक्तेषु द्यूतदेवनपरिचय उपलभ्यते । इदन्तु सूक्तं नि-
ान्तं मनोरममिति भावार्थेन पाठकानां पुरत उपस्थाप्यते :—

"प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्य मच्छान् " ॥

बृहतोऽक्षा यदा पाशकाधारे तत इतः सञ्चरन्ति, तदा ते मां
कामं मादयन्ति । * मूजवत्पर्वतोत्पन्न-सोमलतारसास्वादनवत्
विभीदककाष्ठनिर्मिता अक्षा मामुत्साहयन्ति प्रीणयन्ति च ।

२

"न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् " ॥

---

* मूजवान् नाम कोऽपि पर्वतः । तत्र सोमलतोत्पद्यते ।

एषा मे पत्नी द्यूतदेवनाद्धेतोर्न कदापि मामखेदयत्, न चाभर्त्सयत्, सा खलु मां वा, मम बन्धून् वा प्रति शिवैवासीत्। अहन्तु केवलमस्यातिप्रियस्य अक्षस्य हेतोस्तामनुव्रताम् अवधीरितवान्।

३

"द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम्" ॥

द्यूतकारं तस्य श्वश्रूर्द्वेष्टि, जाया च परित्यजति। स हि याचमानोऽपि न कुतोऽपि किञ्चिदधिगच्छति, विक्रयार्थमुपस्थापितस्य वृद्धस्याश्वस्येव नाहं कितवस्य कमप्युपयोगं पश्यामि।

४

"अन्ये जायां परिमृशन्त्यस्य यस्यागृधद्वेदने वाज्यक्षः।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम्" ॥

यस्य अश्वरूपोऽक्षो धनगृध्नुर्भवति, अन्ये जनास्तस्य जायां स्पृशन्ति ( सा व्यभिचारिणी भवतीति भावः ) पिता माता भ्रातरश्च कथयन्ति—"नैनं वयं जानीमः, बद्धमिमं नयत ( पुरुषाः )"।

५

"यदादीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव" ॥

यदाहं चिन्तयामि नैभिः क्रीडासहचरैरक्षान् देविष्यामीति, तदा क्रीडार्थं गच्छद्भिः सखिभिस्त्यक्तः सन्नहं तिष्ठामि। किन्तु यदा पश्यामि पिङ्गलवर्णा अक्षाः पाशकाधारोपरि निक्षिप्ताः शब्दायन्ते, तदा नाहं स्थातुं शक्नोमि—व्यभिचारिणीव स्त्री स्वोपपतिम् एषां सखीनां समीपेऽहं द्रुतं गच्छामि।

६

"सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा शूशुजानः।
अक्षासो अस्य वितिरन्ति कामं प्रतिदीव्ने दधत आकृतानि" ॥

कितवः 'किं भो जेष्यामीति' पृच्छन् शरीरेण वर्द्धमानः ( सदप-

द्रम्) सभां प्रविशति । परन्तु अक्षाः प्रतिपक्षाय एतदीयं धनादि समर्पयन्त। एतस्याभिलाषं व्याहतं कुर्वन्ति।

७

"अक्षास इदंकुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा" ॥

अक्षाः खलु अङ्कुशयुक्ता इव, निच्छेदका स्तपना स्तापप्रदानशीलाश्च। एते हि जेतृजनाय प्रथमं किञ्चिद्बालोचितं क्रीडनकं प्रदाय पश्चात्तं घ्नन्ति। एवमप्येतेऽक्षाः कितवजनानां मधुसंपृक्ता इव प्रतिभान्ति।

८

"त्रिपञ्चाशः क्रीलति व्रात एषां देव इव सविता सत्यधर्मा।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत् कृणोति" ॥

एषां त्रिपञ्चाशत्संख्यकानामक्षाणाम् एष समूहः सत्यधर्मा सवितेव शोभमानः क्रीडति। उग्रस्यापि जनस्य मन्युना नैते वशीभूता भवन्ति। किं बहुना राजाप्येतान् नमस्करोति।

९

"नीचा वर्त्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति" ॥

एतेऽक्षाः क्षणं नीचा वर्त्तन्ते, क्षणाच्चोपरि स्फुरन्ति। यद्येषां हस्तो नास्ति, तथापि हस्तवन्तं जनं पराभवन्ति। पाशकाधारे निक्षिप्ता एते दिव्या अङ्गाराः (अक्षरूपाः) शीतला अपि जनानां हृदयं दहन्ति।

१०

"जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्वस्वित्।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति" ॥

कितवस्य जाया हीना सती तप्यते, यत्र क्वापि चरतः कितवस्य पुत्रस्य मातापि तप्यते। उत्तमर्णैः प्रदत्तं धनं तस्मात् कितवात् पुनः

प्राप्येत न वेति बिभेति । स्वयं च स कितवो रात्रौ रात्राविन्येषां गृहमुपसर्पति ।

११

"स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद" ॥

द्यूतकारो यदा पश्यति तस्य स्वकीया स्त्री दुर्दशाग्रस्ता, परकीयास्तु स्त्रियः सुसमृद्धाः, परकीयाणि च गृहाणि सुन्दराणीति, तदा नितान्त खिन्नो भवतीति । स हि द्यूतकारः पूर्वाह्णे पिङ्गलान् अश्वान् ( अक्षरूपान् ) अयुनक्, किन्तु क्रीडाग्न्युपशमे स दीन इव व्यचरत् ।

१२

"यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि" ॥

युष्माकं महतो गणस्य मध्ये यः सेनानीः यश्च युष्माकं व्रातस्य मध्ये राजा, तत्पुरतोऽहं दशाङ्गुलिभिरञ्जलिं बध्नामि, नाहं मदीयं धनं रुणध्मि इतीदमहं सत्यं वदामि ।

१३

"अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमार्यः"* ॥

हे द्यूतकार, अक्षैर्मादीव्य कृषिमेव कुरु, तदुपार्जितं वित्तं बहुमन्यमानस्तस्मिन्नेव रमस्व । कृषिकर्मणैव गावो भवन्ति, तेनैव च जाया । अयमार्यः सविता मे इदमाह ।

१४

"मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु" ॥

---

* तुलनीयम्—"यल्लभसे निजकर्मोपात्तं, वित्तं तेन विनोदय चित्तम्"।
"विधिवप्रातु प्रामेन मन्तुषातम्" इति शङ्करः ॥

हे अक्षाः, अस्माकं मित्राणि कुरुत; सुखयत चास्मान् । मास्मान् स्वकीयेन तीव्रेण कुहकेन मोहय; अस्मान् प्रति युष्मदीयो मन्युरुप-शाम्यताम्, अपरः कोऽप्यरातिः पिङ्गलवर्णानामक्षाणां यो वागुरायां निपततु ।

श्रीमन्तः पाठकाः, विचार्यतां भवद्भिः कीदृङ् माधुर्यमस्य सूक्तस्य। यावत्सम्भाव्यं सर्वमेवाहिमकातिसुन्दरं वर्णितं द्यूतस्य । यत्सत्यमे-तद्वाचयतामस्माकमपरं किञ्चित् तद्वर्णनमवशिष्यत इति न चेतस्यु-देति । द्यूतकारस्य पत्न्या दौर्गत्यम्, मातुर्व्याकुली' पितुर्भ्रातॄणां वैमनस्यम्, परिवाराणां स्नेहाभावः स्वस्य च तास्ता अवस्थाः कस्य नाम पाठकस्य हृदयं नानन्दतुन्दिलं कुर्युः ? द्यूतकारो देवनेच्छां ह-न्यानोऽपि तदर्थं समागतान् बन्धून् प्रत्याचक्षाणोऽपि च पाशकाधारे सञ्चलतः शब्दायमानान् अक्षानाकर्ण्य तामिच्छां रोद्धुमसमर्थो द्रुततरं सभां गच्छतीति 'यदादीध्ये ने'त्यादिभिः (५) कथं हृदयङ्गमं वर्णि-तम् । * नजानीमो वयमस्य सूक्तस्य कतमामृचं प्रति पाठकानां सवि-शेषानुरागमाकर्षाम इति ।

---

* तुलनीयम् - मृच्छकटिके द्वितीयाङ्के संवाहके द्यूतसुवर्णदानाक्षमतया भयाद्देवमन्दिरं प्रविश्य स्थिते जाते च तथात्वेन माथुरद्यूतकाराभ्याम्—

"द्यूतकारः । कथं काष्ठमयी प्रतिमा ?

माथुरः । अरे नहि नहि, शैलप्रतिमा । ( इति बहुविधं चालयति, संज्ञाप्य च ) एवं भवतु, एहि द्यूतं क्रीडावः ।

( बहुविधं द्यूतं क्रीडतः )

संवाहकः ( द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा स्वगतम् )

अरे ! कत्ताशब्दो निर्माणकस्य हरति हृदयं दरिद्रस्य ।
ढक्काशब्द इव नराधिपस्य भ्रष्टराज्यस्य ॥
जानामि न क्रीडिष्यामि सुमेरुशिखरपतनकल्पं द्यूतम् ।
तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति ॥

द्यूत। मम पाठः, मम पाठः ।

द्यूतव्यसनस्य तैस्तैः प्रकारैर्दुरोदर्कत्वं प्रतिपाद्य परमर्षिणा कवषेण—

अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमार्यः॥

इत्युपसंहृतमिति यत्सत्यमतितमां रमणीयानि खल्वेतान्यक्षराणि। कियत्सरलं कियच्च नैसर्गिकमिदमिति सचेतस एव विचारयन्तु।

एतादृशैः परोलक्षैर्निरुपमैः रत्नैरुपशोभितमपि वेदं वयं नास्ति तत्र किञ्चिदालोच्यमिति मन्वाना इव यन्नानुशीलयामस्तदेव नितान्तं दुःखमुत्पादयति।

विधुशेखर शर्मा।

---:o:---

## महानाटकम्।

अस्ति किलेयं किंवदन्ती—महानाटकं नाम ग्रन्थं किष्किन्धाधिपतेः सुग्रीवस्य सहचरो हनूमान् निर्मितवान् इति। अतएव 'हनूमन्नाटक'मित्यस्यापरं नामधेयम्। इदं च प्रसिद्धमस्ति यद् हनूमता महानाटकीयाः श्लोका आदौ पाषाणफलके उत्कीर्णाः, ततः कारणविशेषेण काले तेषु प्रस्तरफलकेषु समुद्रनिमग्नेषु तत उद्धृत्य मधुसूदनेन कविना ग्रन्थाकारेण ते सज्जीकृता इति। यद्भवतु, कोऽयं हनुमान् कविरिति विचार्यम्। किमयं त्रेतायुगावतारी दशवदनदहनकारी भगवतो रामभद्रस्य सेनानीः उत तदाख्यः कश्चिन्मनुष्य एवेति संशयः सामाजिकानां चेतसि भवितुं युक्त एव। नहि शाखामृगस्य काव्यनिर्माणे शक्तिरस्ति। इदन्तु ध्येयम्—यदि भगवतो वाल्मीकेर्वचनं सत्यत्वेन स्वीक्रियेत, तर्हि शाखामृगस्यैव महानाटकनिर्मातृत्व-

---

माथुरः। न खलु, मम पाठः, मम पाठः।
संवाहकः। (अन्यतः सहसोपसृत्य) ननु मम पाठः"।
सर्वेषां बोधसौकर्यार्थमत्र संस्कृतमेव सन्निवेशितम्।

मस्तु । अन्यथा मानुषीं जानकीं प्रति तस्य दूतत्वं नितान्तमसङ्गत-मेव प्रतिभाति । कथं नु तस्य स्त्रीजनप्रतिपत्तिकारिणी वाक्, कथं रामस्यावस्थावर्णनं सीतायास्तत्र विश्वासोत्पादनं च सङ्गच्छतु । अथ वाल्मीकेर्वचनं न तथात्वेनाङ्गीकृतं भवेत्, तर्हि कश्चित्तदाख्यो मानुषः कविरेव तत्प्रणेतास्तु । सुग्रीवसहचरस्य हनूमत एतत्काव्यनि-र्मातृत्वे त्रेतायुगीयं तदिति वक्तव्यम् । अपरस्मिंस्तु पक्षे कालिदास-भवभूत्यादिभ्योऽर्वाचीनमेवेति कथनीयं स्यात् । यथा चेदं तथोपरि-ष्टात् स्पष्टो भवेत् ।

महानाटकमिदं कलिकातायां मुम्बानगर्यां च प्रकाशितम् । उभयोः पुस्तकयोरङ्कसमावेशे वृद्धिह्रासावनुभूयेते । कलिकाता पुस्तके नवा-ङ्कमात्रं दृश्यते, मुम्बापुस्तके तु चतुर्दशाङ्काः । किञ्चादिमे पुस्तके प्रत्य-ङ्कसमाप्तौ—"एष श्रीलहनूमता विरचिते श्रीमन्महानाटके, श्रीमधु-सूदनेन कविना सन्दर्भ्य सज्जीकृत..." इत्यादिश्लोकदर्शनात् प्रागुक्ता किंवदन्ती समर्थ्यते, मधुसूदनकवेश्च श्लोकानां ग्रन्थाकारेण सज्जीकर-णमधिगम्यते । अन्तिमे तु दामोदरमिश्रः सन्दर्भकार इति लिखितम् । अन्यच्च सन्दर्भकारौ काव्यान्तरेभ्यः संगृह्य कांश्चित् श्लोकान् महानाटके संनिवेश्य किं तेषां काव्यानां मूलकविरेव प्रणेता, अपरे वा केचि-दिति संशयमुत्पादयतः । एतच्च किञ्चिदनुपदमेव प्रदर्शयिष्यामः ।

आलोच्यं काव्यमिदं महानाटकसंज्ञयाभिहितं भवति, परं न जानी-महे कथमस्य नाटकत्वं स्यादिति । नाटके यान्युचितानि, विहायाङ्कं प्राय एव तानि न सन्त्यत्र । 'पञ्चादिका दशपरा' हीहाङ्का इष्यन्ते, मुम्बापुस्तके तु चतुर्दशेऽङ्के ग्रन्थसमाप्तिर्दृश्यते । प्रवेशनिष्क्रमणा-दिकमप्यत्र नास्ति । यद्यप्यत्र अन्तरान्तरोक्तिप्रत्युक्तिर्दृश्यते, न त-थापि तावन्मात्रेण किमपि नाटकं भवितु मर्हति । प्रवेशकविष्कम्भ-कादीनां नामापीह न कृतं ग्रन्थकृता । न निवेशितं पताकास्थानम् । नोक्ताः सन्धयः । न प्रयुक्ता च नाटकरीत्या स्त्रीणां नीचपात्राणां च प्राकृतभाषा । अत एतन्नाटकत्वादपि हीयते, कुतः पुनरस्य महत्वनि-

शेषणं सङ्गच्छताम्? एवमप्यस्य नाटकत्वस्वीकारे श्रव्यकाव्यानां रघुवंशादीनामपि तथात्वप्रसङ्गः। दृश्यश्रव्ययोश्च काव्ययोर्भेदो न स्यात्।

ग्रन्थेऽस्मिन् पद्येन, कदाचिच्च गद्येन रामचरितं वर्णितम्। अतो गद्यपद्योभयरूपत्वादस्य 'चम्पू'-नाम्नैव युक्तो व्यपदेशः । तदुक्तं दर्पणकृता—

"गद्यपद्यमयी वाणी चम्पूरीत्यभिधीयते" । इति ।

'महानाटक'मिति नाम तु संज्ञामात्रं, न तु नाटकत्वेनेति साधीयान् सिद्धान्तः ।

अस्य ग्रन्थस्य कतिचिच्छ्लोका ग्रन्थान्तरेष्वपि दृश्यन्ते, अतो मन्यामहे तथाविधैः श्लोकैः तद्ग्रन्थकलेवरवृद्धिं कृत्वा सन्दर्भकारैरात्मनोऽदूरदर्शित्वं ग्रन्थान्तरानभिज्ञत्वंच दर्शितमिति, अथवा सन्दर्भ्यमाणस्य ग्रन्थस्य सौन्दर्यविधानाय तैरन्यकर्तृकत्वं ज्ञात्वैव तेषां ग्रहणं कृतमिति । पठित्वैव च ज्ञायते न तेषां श्लोकानां मूलकविः प्रणेतेति । तथाहि—हरधनुर्भङ्गं श्रुत्वा आगत्य च परशुरामो रामचन्द्रं कथयति—

"येन स्वां विनिहत्य मातरमपि क्षत्त्रास्त्रमध्वासव-
स्वादाभिज्ञपरश्वधेन विदधे निःक्षत्त्रिया मेदिनी ।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
द्द्याप्यस्थिकणाः पतन्ति, स पुनः क्रुद्धो मुनिर्भार्गवः॥

रामः । स्त्रीषु प्रवीरजननी जननी तवैव,
देवी स्वयं भगवता गिरिजापि यस्यै ।
त्वद्दोर्वशीकृत विशाखमुखावलोक-
क्रीडा विदीर्णहृदया स्पृहयाम्बभूव" ॥ इति

तथा—

"जातः सोऽहं दिनकरकुले क्षत्त्रियः, श्रोत्रियेभ्यः" ॥

अन्यत्र च—

पुरोजन्मा नाद्य प्रभृति मम रामः स्वयमहम्,
न पुत्त्रः पौत्त्रो वा रघुकुलभुवां च क्षितिभुजाम्" । इति ।

सर्वेऽपि श्लोका मुरारिमिश्रकृते अनर्घराघवे सन्ति । किञ्च—

"रक्षोऽभिचारि चरुभाण्डमिव स्तनं यः" ।

इत्यादिः श्लोकोऽनर्घराघवस्य एव । तत्र 'रक्षोऽभिचारचरुभाण्ड'-ईदृशः पाठः । अन्यत्तुल्यम् ।

'जातिं मानय मानुषीमभिमुखो दृष्टस्त्वया हैहयः' ।

इत्यादिश्लोकोऽप्यनर्घराघवीय एव । किं बहुना प्रायः प्रत्यङ्कमनर्घराघवीयः श्लोको दृश्यते । न केवलं मुरारेरेव श्लोका महानाटके, किन्तु कालिदासभवभूत्योरपि । यथा—

"चूडाचुम्बित कङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो ।
भस्मस्निग्धपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्" ॥

इत्यादिश्लोकः प्रियसमासस्य महाकवेर्भवभूतेः । एव मुत्तरचरिते—

"वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते,
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते" ।

इत्यादिश्लोकेऽपि 'किं वर्ण्यताम्' इत्यत्र 'हुं वर्त्तताम्' इति पठित्वा महानाटके रावणाङ्गदसंवादे धृतः । अपिचाभिज्ञान शकुन्तले—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः,
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

एवं श्लोको महानाटके रामकृतमारीचवर्णने धृतः । यद्यपीदं वर्णनं रलतया मनोहारितया चास्य कवेः सम्भवति; तथापि नात्रग्रन्थे संगच्छते, वनचारिणो रामचन्द्रस्य कुतस्तदानीं स्यन्दनाधिगमो भवतु, येन स मृगः स्यन्दने दत्तदृष्टिः स्यात् । अतः सर्वथा महाकवेः कालिदासस्यैवायं श्लोकः । इत्थं मधुसूदनादि सन्दर्भकारेण ग्रन्थान्तरेभ्यः श्लोका उद्धृत्य महानाटके संनिवेशिताः ।

काव्यमिदमालोचयतां नः प्रतिभाति यन्मूलकविनादौ केचिच्छ्लोका एव प्रणीता आसन्, ततः काले सन्दर्भकारेणापरै रपि मधुरैः

श्लोकैः सन्दर्भ्यं ते पुस्तकाकारेण प्रकाशिता इति । यथा वा भवतु, काव्यमिदं रसालङ्कारादीनामाकरभूतं । सरलतया च व्युत्पादकं शिशूनामपि, रचनानैपुण्येन च विनोदयति चेतः सचेतसाम् । विरलप्रचारमीदृशं पुस्तकरत्नमिति कः सन्देहः । परीक्षापाठेषु अस्य ग्रहणाय पाठशालाध्यक्षैर्यतनीयम् । एतत्काव्यं चेन्न पठन्ति विद्यार्थिनः, तर्हि विफलं तेषां विद्यार्थित्वम्; निष्फलश्च तेषां संस्कृतशिक्षार्थं श्रमः । आस्वाद्यतां रसिकैरस्य ग्रन्थस्य किञ्चित् कवितामाधुर्यं, परीक्ष्यतां चेदं कीदृशमिति—

प्राचीभागे सरागे धरणिविरहिणीक्रान्तचक्रे समुद्रे,
निद्रालौ नीरजालौ विकसति कुमुदे निर्विकारे चकोरे ।
आकाशे सावकाशे तमसि शममिते नागलोके सशोके,
कन्दर्पे मन्ददर्पे वितरति किरणान् शर्वरीसार्वभौमः ॥१॥

हे गोदावरि, रम्यवारिसुभगे, दृष्टा त्वया जानकी ?
साऽऽहर्तुं कमलानि किं गतवती, याता विनोदाय वा ?
इत्येवं प्रतिपादपं प्रतिपथं प्रत्यापगं प्रत्यगम्,
प्रत्येणं प्रतिबर्हिणं तत इतस्तां याचते मैथिलीम् ॥२॥

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्,
मेघैरन्तरितः प्रिये ! तवमुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतय स्ते राजहंसा गताः,
त्वत्सादृश्यविनोदमात्रमपि मे दैवं नहि क्षाम्यति ॥

राम, राम, तव नाम जपन्तः पामरा अपि तरन्ति भवाब्धिम् ।
अङ्कसङ्गिभवदङ्गुलिमुद्रः किन्नु चित्रमतरत्कपि-
रब्धिम् ॥ इति ॥

श्रीचन्द्रधर शर्म्मा ।

# काशिकावृत्तिः ।

पाणिनि व्याकरणस्य काशिका नाम वृत्तिः सर्वत्र सुप्रसिद्धा काशिकराजकीयपाठशालाध्यापकस्य तत्रभवतः श्रीमतो बालशास्त्रिणः प्रसादेन साम्प्रतं सर्वसुलभा च । एतद्विषयकमेवाद्य किञ्चिच्चिन्तयिष्यते ।

इयं काशिकावृत्तिः वामनो जयादित्यश्चेति द्वयोः पण्डितयोः कृतिरिति तदावरणपृष्ठालोकनेनैव प्रतीयते । कदेयमुत्पन्नेति बहुभिश्चिन्तितम् । अध्यापको बोधलिङ्को महाशयः ( Prof. Boethlingk ) स्वप्रकाशितस्य पाणिनिव्याकरणस्य भूमिकायां ( ४५ पृ० ) प्रायोऽष्टमे शतके (खी०) सा स्यादित्युक्तवान् । इदं तत्प्रमाणम्—काश्मीरेतिहास-राजतरङ्गिणी-कारेण श्रीमता कल्हणपण्डितेनोक्तं यत् काश्मीरराज्याधीश्वरो महाराजो जयापीडोऽत्यन्तं संस्कृतानुरागी आसीत्, तेन स्वराज्ये व्याकरणाध्ययनस्य सविशेषप्रचाराय परं प्रयतितम्, तस्य सभायां बहवः पण्डिता आसन्, तेषां नामानि यथा:—क्षीरः ( अयमेव धातुतरङ्गिणीकार इति बूलर-( Bühler )महाशयः), दामोदरगुप्तः, मनोरथः, शङ्खदत्तः, चाटकः, सन्धिमान्, वामनश्चेति । अयमेव वामनः काशिकावृत्तेरन्यतरो ग्रन्थकार इति । जयापीडश्चाष्टमे शतके अभूदिति । अत्रेदं विवेच्यं—यदि जयापीडसभास्थो वामन एव काशिकावृत्तेरन्यतरः कर्त्ताभविष्यत्, किं तर्हि कल्हणपण्डितो न तन्महद्वृत्तमवर्णयिष्यत्; किमिति वा तेन अपरापरपण्डितानां नामान्युल्लिख्य प्रसिद्धतरस्य वामनस्य नामधेयमात्रं सर्वशेषे सन्निवेशितमिति ।

श्रीमान् विल्सन् महाशयः( Wilson, Asiatic Researches, XV. P. 55 ) कथयति—जयापीडसभास्थो वामनः काव्यालङ्कारसूत्रवृत्तिं व्यरचयदिति । वामनकृत-काव्यालङ्कारवृत्तेः प्रकाशकेन श्रीमता कप्पेलरमहाशयेन तु ( Dr. Cappeller ) तद्भूमिकायामुच्यते—वामनेन काव्यालङ्कारसूत्रं तद्वृत्तिश्चेत्युभे एव विरचिते; तत्र च तेनैतेषां

नामानि धृतानि—शूद्रको-मृच्छकटिककारः, कालिदासः, अमरुः, भवभूतिः, माघः, हरिप्रभः, कविराजः, कामन्दकीनीतिः, नाममालेत्यादयः। अत्र यद्ययं कविराजो राघवपाण्डवीयकाराद्भिन्नः स्यात्—यो हि दशमशतकोत्तरवर्त्तीति निर्णीयते, तर्हि काव्यालङ्कारसूत्रवृत्तिकारो वामनोऽवश्यमेव दशमशतकोत्तरवर्त्ती भवेदिति। अष्टमशतकोत्पन्न जयापीडसभास्थो वामनः कथमस्मात् काव्यालङ्कारसूत्रकाराद् वामनादभिन्नो भवत्विति।

कप्पेल्लरमहाशयो विचारेण काव्यालङ्कारसूत्रवृत्तिकृतं वामनं द्वादशशतकोत्पन्नत्वेन निर्णीय कथयति यदयमेव वामनः काशिकावृत्तिकार इति। कप्पेल्लरमहाशयेन श्रीबालशास्त्रिणो मतमेव प्राधान्येन स्वीकृतम्।

तत्रभवान् श्री बालशास्त्री आह—१५१५तमशकाब्दे(१६७३ख्री०) वामनो नाम कश्चित् "लोकोत्तरललितकाव्यनिर्माता" महाराष्ट्रभाषाकविरासीत्, काशिकाकारो वामनस्तस्माद् वामनात् पञ्चवर्षशत्या प्राचीन इति। तथाच काशिकाकारो वामनो द्वादशशतकोत्पन्न आसीदित्यायाति। अत्र तेन 'नवनीत'नामके महाराष्ट्रभाषीयकाव्यसंग्रहे तत्सम्पादकेन यदुक्तं तदेव किञ्चिदनुल्लिख्य स्वीकृतम्। काव्यालङ्कारसूत्रवृत्तिकारेण आलङ्कारिकेण वामनेन काशिकाकारस्य वैयाकरणस्य वामनस्य कोऽपि सम्बन्धोऽस्ति न वेति न किमप्युक्तं तेन।

अध्यापको गोल्डष्टुकारोऽपि (Professor Goldstucker, *Pánini*, *P. 89*) सविशेषं प्रमाणमनुपन्यस्यैव सिद्धान्तकौमुदी-नागेश-पुरुषोत्तमादिसमकालीनैव (त्रयोदशशतकादप्यर्वाचीना) काशिकावृत्तिरित्यभिहितवान्।

एतन्मीमांसायाः पूर्वमिदमेव तावन्निर्णेयं किमियं काशिका केवलं वामनेनैव विरचिता, आहोस्विज्जयादित्येनापीति। कोलब्रूक-(Colebrooke, Sanskrit Grammar P. 9) महाशयस्य मते काशिका वामनेन अथवा वामनजयादित्येन नाम केनचिदेकेनैव रचितेति।

श्रीमता बालशास्त्रिणा प्रथमं तावद् वामनजयादित्यनाम्ना एक एव पुरुषः काशिकाकार इति मतं (काशीस्थ-'पण्डित'-पत्रे, १८७८ ई०, जुन, पृ० २० ) प्रकाश्य काशिकाप्रकाशसमये वामनजयादित्यौ परस्परं भिन्नाविति सप्रमाणं प्रदर्शितम् । तदिदं "भट्टोजिदीक्षितकृत-'प्रौढमनोरमायां' तद्धितप्रकरणस्थ-बहुलग्रहणार्थाद् इति (५·४·५२·) सूत्रे 'एतत्सर्वं जयादित्यमतेनोक्तं, वामनस्तु मन्यते' इति तयोः पार्थक्येन प्रदर्शनात्, 'प्रथमद्वितीयपञ्चमषष्ठा वामनकृतवृत्तयः, इतरे जयादित्य कृता इत्यभियुक्ता' इति, तत्रत्यशब्दरत्नग्रन्थाच्चेतरेतरं भिन्नावेव (वामनजयादित्यौ ) इति" ।

अध्यापको देवदत्तापराख्यः अफ्रेक्टमहाशयः ( Professor Aufrechet ) स्वप्रकाशितस्य सुसंस्कृतस्य 'उणादिसूत्रस्य' भूमिकायां बालशास्त्रिणः परं मतं पूर्वमेव प्रदर्शितवान् ।

श्रीमता बालशास्त्रिणोक्तं यत् काशिकायाः प्रथम-द्वितीय-पञ्चम-षष्ठाध्याया वामनकृताः अपरे तु जयादित्यकृता इति । किन्तु डा० श्रीमता बूलरेण ( Dr. Bühler ) काश्मीराधिगते प्राचीने हस्तलिखितपुस्तके ज्ञायते यदादिमाश्चत्वारोऽध्याया जयादित्यकृताः, अन्तिमास्तु चत्वारो वामनकृता इति * । यथा वास्तु, वामनजयादित्यावन्योन्यं भिन्नाविति निश्चय एव ।

शब्दकौस्तुभे, मनोरमायां चायं श्लोक उपलभ्यते :—

" बोपदेवमहाग्राहग्रस्तो वामनदिग्गजः ।
कीर्त्तेरेव प्रसङ्गेन माधवेन विमोचितः" ॥ इति ॥

एतेन काशिकाकारो वामनो वेदार्थप्रकाशकभाष्यकाराद् माधवात्, ततोऽपि प्राचीनाद् बोपदेवाच्च प्राचीन, इति स्पष्टमेवावबुध्यते । श्रीमान् मोक्षमूलरमहाशय उदाहृतश्लोकस्य याथार्थ्यं स्वप्रकाशितस्य

* See Journal of the Bombay Branch of the R. A. S. 1877. P. 72 and Professor Kielhorn's Kátyayana and *Patanjali*. P. 12 note.

ऋग्वेदस्य भूमिकायाम् ( २१ पृ० ) समाहितवान् यद् ऋग्भाष्ये माधवेन बोपदेवो न कुत्रापि धृतः, वामनस्तु सकृदपि धृत इति। सायणधातुवृत्तौ वामनोऽसकृदेव धृतः । माधवः १३५० तमाब्दे, बोपदेवश्च द्वादशशतके आसीदिति वामनो द्वादशशतकात्प्राचीन इति सिद्धम् । अस्माच्च वामनो माधवादिभ्यः प्राचीनः, यतः सायणेन काशिकाव्याख्या-'पदमञ्जरी'-कारो हरदत्तः, न्यासापरनामधेय-'काशिकावृत्तिपञ्जिका'-कारो 'न्यासकार' इति प्रसिद्धो जिनेन्द्रश्च धृतौ । बोपदेवकृत-'काव्यकामधेनु'-व्याख्याकारेण चेयं 'काशिकावृत्तिपञ्जिका' धृता । ततश्च व्याख्याकारात् व्याख्येयग्रन्थकारो यत् प्राचीन एव भवेदिति किमु वक्तव्यम् ।

इदं विविच्यैव काशिकावृत्तिः द्वादशशतकपूर्ववर्त्तिनीति कैश्चित् ( Burnel प्रमुखैः),कैश्चिच्च (Bühler प्रभृतिभिः)सेयं नार्वाचीना कृतिरिति पूर्वमुक्तम् । वस्तुतस्तु कस्मिन् काले सोत्पन्नेति न निर्णीतम् ।

उभावपि वामनजयादित्यौ बौद्धौ जैनौ वेति प्रमाणतोऽवबुध्यते। प्रतिपादितमिदं श्रीमता बालशास्त्रिणा । यथा—आस्तिकैर्ग्रन्थारम्भे आशीर्नमस्क्रियादिरूपं मङ्गलाचरणं क्रियते, काशिकावृत्तौ तु न तद् दृश्यते; 'वृत्तौ भाष्य' इत्यादावत्रत्यश्लोके "समाहृत्यान्यतन्त्राणी" त्यमरश्लोकसमानच्छायोपलभ्यते, एताभ्यां केषाञ्चिद् अप्रसिद्धानां पदानां साधनार्थं पाणिनिसूत्रं परिवर्त्तितम्—यथा 'ग्रामजनबन्धुभ्यस्तल्' ( ४.२.४३ ) इतीदं सूत्रं 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति कृतम्, नहि कश्चिदास्तिक एवं कुर्यात् । अपराण्यपि प्रमाणानि सन्ति विशेषजिज्ञासुभिस्तस्य शास्त्रिणः काशिकाया भूमिका द्रष्टव्या। आसीत् किल तदानीं बौद्धानां वैयाकरणानां बहुलः प्रचारः;—यथा न्यासकार-जिनेन्द्रबुद्धिप्रभृतयः । भट्टोजिदीक्षित-हरिदीक्षित-नागेशभट्टप्रभृतिभिस्तु परस्मिन् काले तेषां कृतिः पराभूता । यथा वा भवतु । उभावपि वामनजयादित्यौ यद्बौद्धौ, उभावपि च काशिकायाः कर्त्ताराविति, सर्वैरेव तत्स्वीक्रियते ।

इदानीं विचार्यतां कदैतावुत्पन्नाविति । चैनिकपर्यटकस्य श्रीमतः
इत्-सिं'-नामकस्य किञ्चित् परिचयः पत्रिकापाठकैः पूर्वमेवाधिगतः।
अयं महाभागः प्रायः ६३५ तमाब्दे चीनदेशे जातः, भारतागमनार्थं
स्मात् ६७१ तमेऽब्दे निष्क्रम्य ताम्रलिप्तिनगरे ( वर्त्तमानतमलुक )
६७३ तमाब्दे आजगाम, इतश्च नालन्दविहारे बहुविद्यामधिकृत्य बहूनि
बौद्धतत्त्वादीनि विज्ञाय ६९५ तमाब्दे चीनदेशं प्रतिनिवृत्तः,
अथ ७१३ तमाब्दे परं लोकं भेजे । अनेन स्वकीये भ्रमणवृत्तान्ते
रतवर्षस्य सुसूक्ष्मा आचारव्यवहारा उपनिबद्धाः, तदानीन्तनी पठ-
पाठनरीतिरपि तस्मिन् पुस्तके तेनोपवर्णिता ।

श्रीमता 'इत्सिं'-महाशयेन स्वग्रन्थस्य ३४ परिच्छेदे भारतीय-
शिक्षापद्धतिरालोचिता । अत्रापि शब्दविद्या-विषयकमेव तेन बहू-
क्तम् । शब्दविद्याध्ययनमनेन पञ्चधा विभक्तम् । अयमाह—षड्वर्षीयै-
र्बालकैः प्रथमं "मूलसिद्धान्तः" ( Elementary Sidhánta ) अधी-
यते, 'सिद्धिरस्त्विति' च तस्य प्रारम्भे वर्त्तते । इमं सिद्धान्तं मूलतो
महेश्वरोऽशिक्षयत् । षड्भिर्मासैर्बालका एनं सम्यगधिकुर्वन्तीति ।

'इत्-सिं-कथितोऽयं सिद्धान्तो' 'माहेश्वराणि सूत्राणि' स्यादिति
सम्भाव्यते । परन्तु तत्प्रदत्तं वर्णनमेतद्विरोधि । तथाहि तेनोक्तम्—त-
स्मिन् सिद्धान्ते ४९ अक्षराणि सन्ति, तैरक्षरैः १०,००० दशसहस्रतो-
ऽप्यधिकाः शब्दाः एतैः शब्दैर्निर्मिताः ३०० श्लोकाः, प्रतिश्लोकं च
३२ अक्षराणीति ।

द्वितीयं व्याकरणपुस्तकं 'पाणिनिसूत्रम्' । स कथयति—अत्र
१००० श्लोकाः द्वात्रिंशदक्षरैरेकैकश्लोकगणनयेतिभावः विद्यन्ते ।
बालैरष्टमे वर्षे तत्पठनमारभ्य अष्टाभिर्मासैः सम्पाद्यत इति ।

तृतीयं व्याकरण पुस्तकं धातुः । अत्र १,००० श्लोकाः अयं कश्चि-
द्धातुपाठो भवेत् ।

चतुर्थस्त्रेधा विभक्तः खिलग्रन्थः—(१) अष्टधातुः, अत्र १,०००
श्लोकाः, (२) मञ्जाः ( *Man-ka* )—अत्रापि १,००० श्लोकाः,—(३)

वणादिः, इहापि १,००० श्लोकाः। बालैर्दशमे वर्षे ग्रन्थत्रयीमेनां पठितुमारभ्य त्रिभिर्वर्षैः समाप्यते।

अत्रत्यो द्वितीयो ग्रन्थः 'मञ्ज' इति इत्-सिं महाशयेनोक्तम्, परन्तु कोऽयमिति प्रकामं प्रयतमानैः पाश्चात्यैरपि विद्वद्भिर्निर्णेतुं न प्रभूयते। जापानीयविदुषा मि० कासवरेणोक्तं 'मञ्ज-शब्दोऽयं 'मण्डो' भवे-दिति सम्भाव्यते इति। एवमपि न कश्चिन्निर्णयः। न हि तन्नाम्ना प्रसिद्धः कोऽपि व्याकरणग्रन्थोऽस्ति। बह्वालोचनतत्परेण मोक्षमूल-रेण तदेव सूत्रमधिकृत्य सम्भाव्यते यद् यदि 'मञ्जो' वस्तुतो 'मण्डः' स्यात् तर्हि स शब्दो मण्डूकार्थे प्रयुक्त इति शक्यत आशङ्कितुम्। यतो माण्डूकेयाः व्याकरणविद्यायामतिप्रसिद्धा आसन्। * तेषामेव कापि कृतिः कृदन्तपठनसमये इत्सिं-महाशयेन 'मञ्ज' शब्देन धृता स्यादिति।

अस्मत्पर्यटकस्य पञ्चमो व्याकरणग्रन्थः पाणिनिसूत्रव्याख्यारूपं वृत्तिसूत्रम्। तेनोक्तं बहुषु व्याख्यासु तदेव श्रेष्ठम्। तत्र १८,००० श्लोकाः (अक्षरतः) सन्ति। सूत्रस्थं पदमादाय सुष्ठु तत्र व्याख्या-तम्। पञ्चदशवर्षैर्बालकैस्तत्पठनमारभ्य पञ्चभिर्वर्षैः सम्पूर्यते। अस्य ग्रन्थस्य कर्त्ता 'जयादित्यो' नाम। तस्य प्रतिभा अत्यन्तं तीक्ष्णासीत्। स किमपि सकृदाकर्ण्यैव सम्यगवबोद्धुं समर्थोऽभवत्। यथोचितं धर्मकृत्यानुष्ठानं तेन कृतम्। प्रायस्त्रिंशद् वर्षाणि जातानि स मृत इति।

अत्र यदि प्रागुक्तानुसारेण इत्सिंमहाशयस्य स्वकीयभ्रमणवृत्तान्त-ग्रन्थविरचनकालो न्यूनतः ६१० तमाब्दो ध्रियेत (सहि ६९५ तमाब्दे चीनं प्रतिगत इति प्रागुक्तम्) तर्हि पूर्वोक्तपाणिनिसूत्रवृत्तिकारस्य 'जयादित्यस्य' मृत्युः ६६० तमाब्दे संघटित इति शक्यत एव वक्तुम्।

उल्लिखित-पाणिनिसूत्र-विषये इत्सिंमहाशयेन यदुक्तम् काशि-

---

* See Max Muller's History of ancient Sanskrit Literature P. 146.

कावृत्तिस्तच्छ्राजनतामर्हति । अतो नेदमयुक्तं विवेचनं यत् काशिका-वृत्तिरेव तेन पर्याटकेन वर्णितेति ।

अथेदं महत् सङ्कटमापतितम्—एकतः श्रीमता इत्सिं-महाभागेन जयादित्यः तद्वृत्तिकार इत्युक्तम्, वामनस्य नाम तेन न धृतम् । एतद-नुसारेण जयादित्यसमयः सप्तमशतकम् ( ६६० ) इति वक्तव्यम् । अन्यतः काश्मीराधीश—जयापीडस्य ( ७५५-६६ ) सभास्थो वाम-नोऽष्टमे शतके ऽभूदित्युक्तपूर्वम् । न चास्मात् प्राचीनः कोऽपि वामन-उपलभ्यते । कथं नु जयापीडसभास्थोऽर्वाचीनो वामनः एकशतक-पूर्ववर्त्तिना जयादित्येन सह ग्रन्थं विरचयतु ?

इत्थं काशिकासमयस्य सूक्ष्मरीत्या निर्णयस्य दुःशकत्वेऽपि स्थूलत इदं शक्यते कथयितुं यत् सा सप्तमशतकाच्च प्राचीना, न चाष्टम-शतकादर्वाचीनेति । तत्रेदं प्रमाणम्—

काशिकावृत्तौ "क्रतूक्थादिसूत्रान्ताट्ठक्" ( ४.२.६० ) इत्यस्मिन् सूत्रे 'तदधीते तद्वेद इत्यस्मिन् विषये' 'आख्यानाख्यायिकेतिहासपु-राणेभ्यष्ठक्' इति वार्त्तिकमुल्लिख्य आख्यायिकोदाहरणे 'वासवदत्तिक' इति दृश्यते । वासवदत्ताख्यायिकाकारः सुबन्धुर्नाम सप्तमे शतके बभूवेति वदन्ति । अतः सप्तमशतकीयग्रन्थोल्लेखको न ततः प्राचीनो भवति । न च वैयाकरणो जयादित्यो वामनो वाष्टमशतकोत्तरवर्त्ती कश्चिल्लभ्यते । काव्यालङ्कारसूत्रवृत्तिकारस्तु वामनः काशिकाकारो भवितुं नार्हतीति पूर्वमुक्तम् ।

काशिकाविषये यावदुपलब्धं प्रदर्शितं मया, साम्प्रतं सचेतसः संस्कृतविद्वांसः सुष्ठुतरं मीमांसन्तामिति प्रार्थयामहे ।

कश्चित् संग्राहकः ।

## मम गृहरहस्यम् ।

अहं श्रीविश्वेश्वरशिरोमणिः । नाहं स्वयमेव पण्डितः, पितृपितामहा अपि मे परमपाण्डित्येन देशेषु सुप्रथिता आसन् । अहं धर्मशास्त्रज्ञः, धर्मशास्त्रमेव चाहमन्तेसदानध्यापयामि । मदन्तेवासिनः साम्प्रतं प्रचलन्तीषु परीक्षासु न निकृष्टं स्थानमधिकुर्वन्ति । किं बहुना आभिजात्येन वा देशमध्ये न मे मन्दं गौरवमस्ति ।

अद्याहमपृष्ट एव स्वगृहवृत्तं किमर्थं वक्तुमुत्सहे, नाहं न जानामि यन्मतिमता जनेनात्मनो वित्तं, गृहस्यच्छिद्रं, दुश्चरितं च न प्रकाश्यानीति बहूनामेवेदं चेतसि समुत्तिष्ठेत् । इदमेव मे तत्रोत्तरम्—सह्यं मया तल्लाघवं, यद्धि गृहवृत्तप्रकाशेन सम्भाव्यते, मम तु महत्याशास्ति यन्मदीयेन वृत्तेन बहूनामेव शिक्षा स्यात्, बहुष्वेव परिवारेषु च अशान्तिपिशाचिकायाः प्रवेशो निषिद्धो भवेदिति ।

इदानीमहमतीतपञ्चाशद्वर्षोऽस्मि । केशकलापः शारदाकाशश्वेतिमानमाश्रयति । चर्माणि लोललोलानि, इन्द्रियाणि शिथिलानि, शरीरबन्धश्च दुर्बलतरः ।

पुत्रभाग्यं नितान्तं मन्दम् । प्रथमपत्नी मे निर्दयहृदयेव किमपि पुत्ररत्नमनुपहृत्यैव स्वल्पे वयसि मम दीर्घाशया सहैव स्वर्गलोकं प्रयाता । संसारधर्मरक्षणेच्छुरहं द्वितीयां पर्यणयम् । तस्याः कतिचित्पुत्रा दुहितरश्च जाताः । दुहितरः सर्वा अपि युक्तेभ्यः पात्रेभ्यः सम्प्रदत्ताः । तासु प्रायः सर्वासामेव पुत्रकन्या उत्पन्नाः । नप्तारो ममैव गृहे तिष्ठन्तः पाठशालास्वधीयते । मम मन्दभाग्येन पुत्रेषु तु द्वावेवावशिष्येते, अन्येतु विमातुरेव पन्थानमनुगता अभूवन् । इमावपि जीवेतामिति कः कथयितुं प्रभवेत् ? प्रतिपदमेवाहं तयोरनिष्टमाशङ्के । भाग्येन हि पुत्ररत्नं तिष्ठति । मम तु भाग्यं नितान्तं मन्दम्, अन्यथा कथं मे तादृशी पतिव्रता प्रथमा पत्नी अकाण्डेऽम्रियत; कथं वा हन्त द्वितीयापि प्रथमाया एव पदवीमनुसृता स्यात् ।

पत्नीर्वा विराय विरतोऽहं कांकां दशां नागच्छम् । किमुच्यते अरण्यमिव शून्यमिव चाहं तदानीं सर्वमचिन्तयम् । गृहिण्येव हि गृहस्य लक्ष्मीरिति वदन्ति । धर्मशास्त्रज्ञोऽहं मनुसंहितायां दृष्टवान्—

"स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चनेति" ।

तदानीं लक्ष्मीविरहितस्य मे शान्तिर्नाम केति सर्वथा विस्मृतमिवाभवत्, हृदयमस्थिरमासीत्, वदनमण्डलं च नियतं चिन्ताग्लानमतिष्ठत् । केवलं पत्नीवियोग एव ममास्याः कष्टावस्थायाः कारणमासीत् । अपरापि महीयसी-चिन्ता मामतितमामदुनोत् । प्रतिक्षणमेव धर्मशास्त्रस्य महाश्लोकश्चैतस्युत्थाय विधुरमपि मां विधुरतरीकर्तुमारभत । नाहमजानां कथं नु दृष्टा अपि बहवः पुत्रा मया लभ्येरन्निति । वयो मे इदानीमधिकं जातम्, नाहं कस्मैचित् स्पष्टं कथयितुमशक्नवं शास्त्रमर्यादारक्षणार्थमहं पुनरपि दारान् ग्रहीतुमिच्छामीति । अस्मत्सधर्माणः केचिद् वृद्धा ग्रामे सम्प्रत्यपि सन्त्येव, परन्तु तेषां वचनं नाद्यत्वे तथा प्रमाणं भवति, यथा साम्प्रतिकशिक्षितानां तरुणानाम् । एते हि स्त्रिया इव पुरुषस्यापि द्वितीयं विवाहं न युक्ततयाभिमन्यन्ते । मम तु दग्धभागधेयस्य साम्प्रतं तृतीयस्यावकाश इति तत्कथापि नावसरं प्राप्नोति । श्रुतिपथमागतम्—मम पुनर्विवाहजनश्रुतिमाकर्णयतोः कृतयौवनपदार्पणयोः पुत्रयोर्महद् वैमनस्यमुत्पन्नम् इति । उच्छृङ्खलं लपितमिव पुत्रयोर्वचनमहमवाजानाम् । मन्मतविरुद्धं किमपि शृण्वतो मे महान् क्रोधोऽभवत् । इतः साम्प्रतमपि तत इतः• परिभ्राम्यन्तः पिशाचापरमूर्त्तय इव द्विजा घटकाः सुन्दरीणां कन्यकानां वार्त्तां स्वेष्टदेवतामन्त्रमिव कर्णयोः पूरयितुमारभन्त । अहं तु पुत्रयोरन्येषां च वस्तुतो मद्धितैषिणां वचनमवज्ञाय स्थिरसङ्कल्पमकार्षं पुनरहं दारान् गृह्णीयामिति ।

अचिरमेव सर्वं सम्पन्नम् । शास्त्रमर्यादारक्षणार्थं पुनर्मया दारा परिगृहीताः । शून्यं गृहं मे पूर्णमभवत्, निर्गतालक्ष्मीः पुनस्तत्र समागतवती मनसाहं कियन्ति नाम सुखचित्राण्यङ्कयितुमारभे ।

नवपरिणीता पत्नी कमला नामासीत्, कमलस्येवैव तस्याः ला-ण्यमभवत्। गृहाद् गृहान्तरं गच्छन्ती प्रतिचरणक्षेपमेव लावण्य-लहरीलेखामाविष्कुर्वाणा सा कस्य नाम मानसं नाहार्षीत्। तस्या वि-लासविभ्रमं दर्शं दर्शं सुभगम्मन्योऽहं परं गर्वमध्यगच्छम्। सार्थकः संसार इतोऽहं तदानीमचिन्तयम् अहो स्पृहणीयायाश्चन्दनलताया भुजगसंसर्गो मे मूढस्य मनसि न जातु तदा भ्रमेऽपि समुदित आसीत्

प्रथमं कानिचिदहानि—

"दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता,
शय्यायां परिवृत्य तिष्ठति, बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते,
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया"॥

इत्यादि बहुविधं स्मरतो मे नवोढा 'वामा' प्रिया प्रीतय एवासीत्, परन्तु नातः परम्। वामत्व मस्या क्रमेण वर्द्धितुमारभत। वृद्धोऽहं प्राणेभ्योऽपि गरीयस्यास्तरुण्या भार्यायाः प्रसादनपरायणः क्रमेण स्व-गौरवं हारयन् किङ्कर इव तत्करुणाकटाक्षं निरीक्षमाणः कालेन मनु-ष्यनामानर्हं इव सञ्जातोऽभवम्। सामदानभेददण्डात्मकाश्चत्वारो-ऽप्युपायाः प्रयुक्तप्रतिहताः। यदहं कथयामि, चण्डी कमला तिष्ठत्सु प्राणेषु न तत्कुर्यात्, प्रत्युत विरुद्धमाचरेत्। क्रोधमूर्त्तिरिव सादीप्यत कस्यैषा शक्तिर्यया तत्सकाशमपि गन्तुं प्रभूयेत। कथं कथमिवा तत्समीपेऽभवम्। तामेवाहमन्वसरम्, न पुनः सा माम्। सीताया सावित्र्या अरुन्धत्यादीनां च चारित्रमसकृदश्रावयम्, न तु सा किञ्चि शृणुयात्। अकथयमहं तस्यै—

"नेक्षेत् पतिं क्रूरदृष्ट्या श्रावयेन्नैव दुर्वचः।
नाप्रियं मनसा वापि चरेत् पत्युः पतिव्रता"॥ इति *

सा तु आकर्ण्यैतत् तद्विपरीतं कर्त्तुमारभत। तस्याः स्वभाव प

---

* महानिर्वाण तन्त्रम्। ८६९.

पर्यवस्यत; यदहं कथयेयं तद्विरुद्धाचरणे धर्म इव तस्या नितान्तमाग्रहोऽदृश्यत । पत्नी पत्युर्दीर्घमायुः कामयेत, इयन्तु प्रतीक्षणमेव मन्मृत्युमेव प्रार्थयत । पतिव्रतया अस्मिन् जन्मनि यः पतिः स्यात् जन्मान्तरेऽपि स एव प्रार्थ्यते । अनया तु किं कृतमिति गृहदासी मे न्यवेदयत्—कासुचिद् अन्तःपुरिकासु कदाचित् सावित्रीव्रतालोचनतत्परासु 'सावित्रीव्रतेन किं फलं जायते' इत्यनयापृष्टे 'वर्तमानजन्मनः पतिरेव जन्मान्तरेऽपि लभ्यत इति' प्रतिवचनं श्रुत्वावोचद्—यदि वर्त्तमानजन्मनः पतिर्जन्मान्तरे न स्यात्, तर्हि अहमपि सावित्री व्रतं कुर्याम् इति इयं गर्विता पत्नी केन चक्षुषा मामपश्यदिति तावतैव सुस्पष्टम् ।

पत्न्याः सन्तोषमाधित्सुरहं पुत्रादिपरिवारस्य विभिन्ने गेहेऽवस्थानं व्यवस्थाप्य तत्रैव न्यवसम् । यदेव किञ्चिद् अकथयत्सा तदेवाहमन्यत् किञ्चिदविचारयन्नन्वतिष्ठम् । परन्तु मदादेशविरुद्धाचरणस्य लेशतोऽपि ह्रासो नादृश्यत । यद्यहं किञ्चिज्जलं प्रार्थयेय, तर्हि क्रुद्धा सा जलपात्रं बलवन्निक्षिप्य द्विधा कुर्यात् । यदि कदाचिदपरदिनापेक्षया पूर्वमेव रन्धनाय प्रार्थिता स्यात्, तर्हि तस्यास्तस्मिन्नहनि निशीथे रन्धनं सम्पन्नं भवेत्; कदाचिच्च विलम्बितभोजनापेक्षायां प्रातरेव रन्धनं सम्पाद्य मामुच्चैराह्वयेत् । यदि जातु धर्मकृत्याय प्रणुद्येयम्, तत्क्षणमेव सा प्रत्युत्तरयेत्—'न मे तेन किञ्चित्प्रयोजनमिति' । इत्थं यदहमिच्छेयं, न जाने कथं, ब्राह्मणी तद्विरुद्धमेवाचरेत् । कामं तामहमन्वनयं, न तु सा स्वप्नेऽपि मे कदाचिन्मृदुलां वाणीं श्रावितवती । सा मत्समीपमेव नागच्छेत् । ब्राह्मण्या अनभिमतेन किमपि कर्त्तुमपि न मे शक्तिरासीत् ।

अथ कदाचित् पितुः संवत्सरश्राद्धदिवसं सन्निहितमभवत् । पूर्वं पूर्वस्मिन् वर्षे श्राद्धवासरे ब्राह्मण्या यद्यत् कृतं तदालोचयतो मे हृदयमकम्पत । सर्वं सुसहं, पितुः श्राद्धं त्वयज्ञातं द्रष्टुं न सह्यते । इत्थं चाहं हस्तपदविहीन इवाभवं यत् तस्यै किमपि कथयितुं शक्ति

मे नासीत् । एवमहं व्याकुलहृदयश्चिन्तयन्तिष्ठामि, अस्मिन्नेव सः
कश्चिन्मम प्रत्युत्पन्नमतिर्वयस्यः सतीर्थ्यश्चागत्य पूर्वं किञ्चिदु
सन्नुपायमुपादिशत्—'ब्राह्मणी मया कथनीया यदस्मिन् वर्षे पि
श्राद्धं न करिष्यामीति सा तु स्वभाववामा तद्विरुद्धमेवाचरेदिति फल
मेऽभीष्टमेव सम्पन्नं स्यादिति सतीर्थो विज्ञाप्य प्रस्थितः । अहम
तन्मत माश्रित्य ब्राह्मण्यै न्यवेदयमस्मिन् वर्षे पितृश्राद्धं न करिष्या
कार्यान्तराय स्थानान्तरं मया गन्तव्यम्, न च श्राद्धकरणे किञ्चित्फ
दृश्यते, किमर्थं सञ्चितधनव्ययं कुर्याम् इति । निसर्गवामा ब्राह्म
'अवश्यं श्वशुरस्य श्राद्धं करणीयम्, अहं तत्त्वां कारयेयमिति दृढमु
क्तवती । अहमप्यधीरोत्तरैस्तस्यास्तां प्रवृत्तिमुद्दीपयन्ननिच्छयेव पि
श्राद्धं कर्त्तुं स्वीकृत्यावोचं यद् यदि नितान्तमेव ते श्वशुरश्राद्ध सम
दनायाभिलाषः तर्हि मूढा, दुश्चर्माणो, दन्तुराः हीनाङ्गाः, अधिक
ङ्गाः श्वित्रिणः कुनखिनश्च ब्राह्मणा आहूयन्ताम्, तेषां भोजनार्थं च य
किञ्चिन्मलिनतरतण्डुलादिकं क्रीयताम्; दधिदुग्ध-घृतशर्कराः लड्डु
कमण्डकादीनि दुर्लभतराणीति कृतं तैः, दक्षिणयापि किमपि प्रयो
जनं नास्तीति । ब्राह्मणी तु मद्वचसि कर्णमनिपात्य स्नातकान्, यतीन्
गृहस्थान्, साधून्, श्रोत्रियान्, अनवद्यान् वृद्धांश्च श्राद्धे निमन्त्रित
वती, बहुविधसूप... सुरभितममन्नं पक्वती, प्रचुराणि लड्डु कम
ण्डकमोदकादीनि ...कादीनि च नैकप्रकाराणि सुस्वादू
भोज्यानि सम्पादितवती, दक्षिणां च पुष्कलां विहितवती । अहमेत
दालोक्य फलतः स्वाभीष्टमेव पूर्णं ... प्रमोदभ्रान्तचित्तः पूर्व
वृत्तं सपदि विस्मरन् गृहिणीमकथयम्—ब्राह्मणि पितुर्मे श्राद्धपिण्डः
विप्रेभ्यो वा, गोभ्यो वा देयं, अथवा सलिलमध्ये विसर्जनीयइति ।
प्रतिकूला गृहिणी स्वभावत एव तदकृत्वा हन्त अमेध्यद्रव्यकुण्डे तं
श्राद्धपिण्डं निक्षिप्तवती । मम पितृश्राद्धमित्थं सुसम्पन्नम् ! अवज्ञानु-
तापलज्जादिभिर्विदीर्णमिव मे हृदयमण्डलम् । विग्रहिणीमिव नृत्य-
न्तीं पिशाचीं ब्राह्मणीं पश्यतो मे केन प्रकारेण दिनं गच्छतीति

ऽन्यो मां विना विजानातु। वृद्धस्य तरुणी भार्य्या कथमिव भवति ज्ञायते मयेदानीम्।

श्रीविश्वेश्वरशिरोमणिः।

—:o:—

## वार्त्ताः सम्पादकाभिप्रायाश्च।

### भारते द्यूतम्।

वर्षेऽस्मिन् सह केषाञ्चिद् विभवेन तिथिर्द्यूतप्रतिपन्नाम कियत्कालार्थं तिरोहिता। तदानीं प्रतिवर्त्मैव विकटमारटतां स्पर्द्धमानानां जयतां कितवानां मुहुःसहैः कोलाहलैर्वाराणस्यभ्यन्तरं प्रतिध्वनितमभवत्। बालवृद्धनिर्विशेषं बहव एव तस्मिन् दिने स्वं स्वं भाग्य परीक्षितवन्तः। राजशासनेन निषिद्धेऽपि द्यूतदेवने तत्रत्यानां पौरजनानां सुदुर्दमनीयेन निर्बन्धेन केवलं तद्दिनार्थं कथञ्चित् तदनुमोदितं भवति। अन्यत्राप्यन्येद्युः पठितं, सरामो, मुम्बाप्रदेशेषु कतिचित् कितवा राजद्वारेऽभियुक्ता अभूवन्निति। मज्जान्तर-प्रविष्टमिवेदं द्यूतदेवनं भारतीयानां विशेषस्तूत्तरभारतीयानाम्। न तैस्तत् सर्वथा परित्यक्तुं शक्यते। आवैदिककालात् खल्विदं प्रचलितं भारते। यथा चेदं तथास्यामेव संख्यायामन्यत्र प्रकाशितो 'वैदिकवृत्तान्तः' (द्यूतदेवनम्) कथयिष्यति। द्यूतं नामेदं यदतिप्राचीनं नत्वभिनवं क्रीडनमिति तत एव विज्ञायेत। अपरापरजातीनामपि आचाराद्यनुशीलनेनास्य प्राचीनत्वं तु तद्वेदसूक्तमवलोकयता न कथञ्चिन्निह्नोतुं शक्यम्। अथ कश्चिदस्य नवीनया पद्धत्या प्रक्षिप्तत्वमाचक्षीत, शृणोतु स महाभागः परमाप्तत्वेन मन्यमानस्य मोक्षमूलरस्यात्राभिप्रायम्—"येहि प्राचीनसमाजविज्ञातारः पुरुषानिःशङ्कमुद्घोषयन्ति यन्नेदृश ऋचोऽकृत्रिमा

भवितुमर्हन्तीति, यदि ते तत्तथैव प्रमाणयितुमशक्ष्यन् तर्हि वयं तेषु कृतज्ञतमा अभविष्याम इति । *

प्राचीनभारते दूयतमित्थं प्रचलितमासीद्यद् आकृषीवलाद् आच महीपालात् सर्वैरेव तदसेव्यत । † मन्त्रब्राह्मणसूत्रसंहितापुराणेतिहासेषु सर्वत्रैव दूयतपरिचय उपलभ्यते । राजसूययज्ञे राज्ञां दूयतक्रीडा प्रसिद्धा । प्राचामियती दूयतासक्तिरासीद्यत्तत्र विजयलाभार्थं शास्त्रीयानुष्ठानमप्युद्भावितम् । दृश्यते हि स्मृतिषु तिथिविशेषेषु श्राद्धकरणे दूयते विजयो लभ्यत इति यथा—"दूयतर्द्धिः षष्ठ्याम्" इतिगोभिलनाम्ना प्रसिद्धं गृह्यपरिशिष्टम् । "दूयतविजयं षष्ठ्यामिति" विष्णुः । एवमन्येष्वपि सूत्रग्रन्थेष्वधिगम्यते, ब्रह्मपुराणे कार्त्तिकशुक्लप्रतिपदि दूयतदेवनमित्थं विहितम्:—

शङ्करश्च पुरा दूयतं ससर्ज सुमनोहरम् ।
कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि भूपते ॥
जितश्च शङ्करस्तत्र जयं लेभे च पार्वती ।
अतोऽर्थाच्छङ्करो दुःखी गौरी नित्यं सुखोषिता ॥
तस्माद्दूयतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ।
तस्मिन् दूयते जयो यस्य तस्य संवत्सरः शुभः ॥
पराजयो विरुद्धश्च लब्धनाशकरो भवेत् ॥ इति ॥

---

* "Some people who know all about primitive Society declare whithout hesitation that such verses can not be genuine. If they would prove it, we should feel most graetful" Max. Muller, Physical Religion. P. 77.

† ऋग्वेदस्य सूक्तान्तरेऽस्ति -

"चतुरश्चिद्ददमानाद् बिभीयादानिधातोः । न दुरुक्ताय स्पृहयेत्" ।

१.४१.९.

यथा द्यूतक्रीडां कुर्वतोः कितवयोर्मध्ये एकस्मिन्नपरस्मै किञ्चिद् धारयित्वा क्रीडामारभमाणे सति, यावद्यं धारितं धनं न प्रोधयति, तावदपरो·

द्यूतस्य असिंहासनराज्योपमत्वाद् यथास्योपादेयता तत्र तत्राधिगम्यते, एवं महानिष्टकारित्वादनुपादेयतापि तेष्वेव ग्रन्थेषु न दुर्लभा। द्यूतसेवनात्पाण्डवानां कियद्दौर्गत्यमासीदिति महाभारतीयो वृत्तान्तः कस्याविदितः। यथा—विराट पर्वणि—

"किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद।
देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत्॥
श्रुतस्ते यदि वा दृष्टः पाण्डवो हि युधिष्ठिरः।
स राज्यं सुमहत्स्फीतं भ्रातृंश्च त्रिदिवोपमान्॥
द्यूते हारितवान् सर्वं तस्माद् द्यूतं न रोचये॥ इति।

अत एवेदं व्यसनमध्ये गणितम्। यथा—

"मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः।
तौर्यत्रिकं वृथाढ्या च कामजो दशको गणः" ॥ इति।

अत एव चेदं मनुना सविशेषं निषिद्धम्—

"द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवर्त्तयेत्।
राजान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्॥
प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ॥
तयोर्नित्यं प्रतिघाते नृपतिर्यत्नवान् भवेत्॥
द्यूतं समाह्वयं चैव यः कुर्यात् कारयेत वा।
तान् सर्वान् घातयेद् राजा शूद्रांश्च द्विजलिङ्गिनः॥

---

[illegible]न 'किमर्थं जघास्ति न वेति' अस्मात् [illegible], तद्वद् [illegible] [illegible]
[illegible]स्य हृयेदिति तद्भावार्थः। ( निरुक्तं ३.२.४. द्रष्टव्यम् )

अन्यत्रापि—

"अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानां। [illegible]
ऋग्वेदे [illegible]

अत्र 'गर्त्तारुगिवे'त्यादे व्याख्यामाह यास्कः ( ३.१.५ ) [illegible]
[illegible] दक्षिणाजी। गर्त्ता, सभास्थाणुः, ..तं तत्र या पुत्रा [illegible] मार्गे इति, तां तत्राक्षैराघ्नन्ति, सा रिक्थं लभत इति।

एवमन्यत्रापि बहुसूक्तेषु॥

अप्राणिभिर्यत् क्रियते लोके तद्द्यूत मुच्यते।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः॥ *
द्यूतमेतत् पुराकल्पे सृष्टं वैरकरं महत्।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्"॥ इति।

पुरा द्यूतकाराणां कीदृग् दण्डो विहित आसीदित्युपरिष्टाद् विन्यस्यमानो मृच्छकटिकश्लोक एव प्रकाशयिष्यति—

"यस्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितो,
यस्योद्घर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः।
यस्यैतच्च न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते,
तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किम्"॥ इति

———:o:———

## वार्त्ताः सम्पादकाभिप्रायाश्च।

### भारते अक्षरैक्यम्।

नेदमनङ्गीकर्त्तुं शक्यते यद्भारते अक्षराणामनैक्यान्महदनिष्टमायत इति। भारतीयानामन्योन्यमनैक्ये भाषाभेदवदक्षरभेदोऽप्यन्यतमं कारणम्। एतद्विषये धर्म्माधिकरणिकेन श्रीमता सारदाचरणमित्रमहोदयेन यच्चिन्तितम्, पत्रिकायामस्यां प्रकाशितपूर्वस्तदीयः सन्दर्भ एव तत्प्रकटीकरोति तन्मतमनुमोदामहे वयम्। नागराक्षरस्यैव अक्षरान्तरापेक्षया भारते बहुलः प्रचारोऽस्तीति स्वीकर्त्तव्यमेव। अतो यदि नाम भारते अक्षरैक्यसम्पादनमवश्यकरणीयं स्यात्, तर्हि नागराक्षरमेव सर्वैर्ग्रहीतव्यम्, इदमेव हि सुकरमिति निर्व्याजमस्माभिः कथनीयं भवेत्। भारतस्य भविष्यन्तमभ्युदयमनुचिन्त्य

---

* तिरश्चामन्योन्यं योधनमित्यर्थः। समाह्वयोऽपीदानीं क्रियत एव बरोदाराज्ये तदधीश्वरस्य महती समाह्वयभूमिरस्ति। महाराजेन सकौबपशूनामेव योधनं क्रियत इति प्रायशः। युरोपेऽपि पुरा किलायं व्यवहार आसीत्

स्वस्वप्रदेशवासिभिः दूरोदर्कः स्वस्वाक्षराभिमानो दूरतः समुत्सारणीय इत्यपि ब्रूमः।

---

## जगत्पुराश्रमः।

जगत्पुरं चट्टग्रामप्रदेशे। तत्र शैलशृङ्गस्योपरि कश्चिदाश्रमो विद्यते। अयमेव जगत्पुराश्रम इति कथ्यते। आश्रमाध्यक्षस्तत्रभवान् श्री पूर्णानन्दस्वामी नाम। अस्मिन् पुमांस इव स्त्रियोऽपि तिष्ठन्ति। आश्रमपदं कियद्भिर्वटुभिरपि समलङ्कृतं दृश्यते। तत्र संस्कृतं विना भाषान्तरस्य नावकाशः श्रूयते, पञ्चवर्षीयः शिशुरपि कश्चित् केनापि दर्शकेन सह संस्कृतेनैवालापमकार्षीदिति। अपरः कश्चिदेकादशवर्षीयो वटुर्निरर्गलेन संस्कृतेन व्याख्यानं कर्त्तुं शक्नोति। स्त्रियोऽपि तत्र न निरक्षराः। वासन्ती नाम काचिदेतासु कलिकातायाः 'तीर्थ-परीक्षां'( व्याकरणविभागे ) सम्यगुत्तीर्णवती। उत्तीर्णसांख्यदर्शन-मध्यमपरीक्षामेनामचिरेणैव कालेन 'साङ्ख्यतीर्थ'-पदवीपरिशोभितां द्रक्ष्यामः। अन्याप्येका हेमाङ्गिनी नाम साङ्ख्यदर्शनस्य प्रथमपरीक्षामुत्तीर्णा। इदं सर्वमालोच्य हन्त प्राचीन समयेषु तत्तदाश्रमस्थितानां गार्गी-मैत्रेयी-प्रभृतीनां स्मरामः। प्रधानाध्यापकः पण्डितश्रीरमेशचन्द्रशर्मा। अयं चतुर्षु विषयेषु कलिकातायास्तीर्थपरीक्षामुत्तीर्णः। आश्रमवासिनः सर्वे नैष्ठिकं ब्रह्मचर्यमनुतिष्ठन्ति। विलास-सम्भोगस्य लेशोऽपि तस्मिन्नोपलभ्यते। शयनभोजनादिषु कठिनतरो नियमः। न तु तेन कस्यापि शरीरक्षयो दृश्यते कथं वा भवेत्, नहि संयतेन्द्रियस्य योगस्थितस्य दौर्बल्यं नाम किञ्चिदस्ति। आश्रमस्थै रौपनिषदो धर्मोऽनुष्ठीयत इति सम्भावयन्ति। सर्वथा पक्षपातिनो वयमेवंविधानामाश्रमाणाम्। एतद्वार्त्तामधिगम्य कियन्तं मानन्दमनुभवाम इति यत्सत्यं हृदयमेव केवलं तद्विजानाति। भगवानस्याश्रमस्य कुशलं विदधातु।

## वङ्गीयरेखाक्षरम्।

आङ्ग्लभाषायां रेखाक्षरस्य (Short hand writing) उद्भावः तस्याः क्रियानुपकारः सञ्जात इति कस्याविदितम्? तद्भाषयात्वरित्वरितं किञ्चिल्लिखितुं साम्प्रतमयमेवोपायोऽवलम्ब्यते। भारतीभाषायां नैकत्रापीयं रीतिरेतावन्तं कालं केनाप्याविष्कृता। अ महता हर्षेणेदं प्रकाशयितुमस्माकं साधीयानवसर आगतो यद् वङ्ग भाषायामियमाविर्भूतेति आविर्भावको वङ्गेषु सुप्रथितनामधेयः प्रा च्यप्रतीच्योभयदर्शनतत्त्वनिष्णातो गाणितिकः सुगृहीतनाम्नोमहर्षे श्रीदेवेन्द्रनाथठक्कुरस्य ज्यायानात्मजः श्रीद्विजेन्द्रनाथठक्कुरो नाम साधारणेष्वप्रकाशित मपि रेखाक्षरमिदं कैश्चिदुत्साहिभिस्तरुणैरनु शील्यते। अस्माभिरपीदं विलोकितम्। परमोपयोगित्वमस्य कः खलु पलपितुं क्षमेत नातिचिरमेवैतद् प्रकाशयिष्यते इति सम्भावयामः अक्षरेषु हिन्दीप्रभृतीनां भाषाणां वङ्गभाषया वर्णसाम्यमस्तीति तासा मपि भाषाणां स्यादेवोपकारोऽनेन वङ्गभाषीयरेखाक्षरेण।

---

## "नीचा महत्त्वं गताः"।

येषां छायास्पर्शोऽपि पापकमिवायमन्यैर्ब्राह्मणत्वैरस्माभिः स्वप्नेऽपि जातु न चिकीर्ष्यते, तेषु केषाञ्चित् शबरादिजातीयानामेवाद्य विस्मयावहं किमपि वृत्तमिह प्रकटीकर्त्तुमुत्सहामहे। भिल्लसन्ताला दिजातीनाम् अमेध्यभोज्यभोजनं, कुत्सिताचारादिकं च सर्वविदितम्। अद्य तु सर्वमेवेदं परिवृत्तम्। सविशेष जानीमो वयम्—वङ्गेषु गौडमण्डले (जि० मालदह) हरिश्चन्द्रपुराभिधग्रामसमीपे केचित् सन्तालादिदेशीया निवसन्ति; तैः सर्वैरैकमत्येन दृढतरं प्रतिज्ञातं यन्न ते मद्यं वा, मत्स्यं वा, मांसं वा सेवेरन्, न ते अस्नात्वा वा, अकृत्वा देवतोपासनम्, अपरिष्कृत्य वा गेहम्, अनुन्मृज्य वा उच्छिष्टतैजसपत्रादिकं किञ्चिद् भुञ्जीरन्, रविवासरे च हविष्यं गृह्णीयुरिति। कृषिरेव हि तेषां जीविका भवेदित्यपि निर्णीतम्। तेषां सजातीय एव

कश्चित्तेषु प्रागुक्तं धर्मं प्रचारितवान् । श्रूयते अन्यत्राप्येतज्जातीयै-रयमेव पन्था गृहीतः । अथ वयं पुनः किं कुर्मः ? यत्तैः क्रमेण परि-वर्ज्यते, तदेव समीचीनतरमिति सादरमङ्गीकुर्मः सर्वथा सनाथो-ऽयमनाचारः ! निरवलम्बस्य शरणार्थिन एतस्याश्रयादानात् पापमेवा-स्माकमभविष्यदिति यत्सत्यं परं धर्मज्ञा वयम् । एतद्विजानतामपि प-ण्डिताभिमानिनां वदनकुहरात् 'नीचा महत्वं गता' इति कालमहि-मोद्घोषणं विना नान्यत् किमपि श्रोतुं शक्नुमः न वा किञ्चित्प्राप्तकालं करणीयं तेषां द्रष्टुं प्रभवाम इत्येव परं दुःखमावहति ।

---

## देशीय विश्वविद्यालयः ।

भारते राजकीयेषु विश्वविद्यालयेषु प्रचलितेन प्रकारेण वस्तुतः समीचीना 'शिक्षा नाधिगम्यत इति बद्धमूलोऽयं संस्कारः कतिपय-दिनप्रभृति भारतीयानां महान्तमसन्तोषमावहंस्तिष्ठति । एतदर्थम-सकृन्निवेदितैरपि तदधिकृतै राजपुरुषैर्निष्प्रयोजनमितीव नास्मिन् वि-षयेऽवधापि किञ्चित् प्रतिकृतम् । साम्प्रतिकेषु विश्वविद्यालयेषु केवलं केचिद् 'भृत्याः' सृज्यन्ते, न चैतेभ्यो देशस्य कश्चिदुपकारः सम्भाव्यते अथवा कृतं तावद्देशनामोदाहरणेन, एते खल्वात्मनोऽपि ऋते दास्या दन्यत् किञ्चिद् वस्तुतः कुशलं भावयितुं शक्नुवन्तीति पुष्णन्ति विश्वासं सर्वे भारतीयाः । यदि नाम भूयो विज्ञापितैरपि शिक्षाधि-कृतै राजपुरुषैर्नायं दोषोऽपाक्रियते, तर्हि स्वयमेव प्रयत्नं विना कि-मपरं कर्त्तुं शक्यम्; नहि शिरसि पतन्तं शस्त्रसंघातमन्यो न निरा-करोतीति आत्मनापि हस्ताभ्यां स न निराकरणीय इति वस्तुस्वभाव उपदिशन् । इतीदं विविच्य बद्धोत्साहपरिकरैरस्माकं वङ्गीयैर्बन्धुभिः 'देशीय-विश्वविद्यालयः'' ( National University ) इति नाम्ना कोऽप्यभिनवो 'विश्वविद्यालयो' राजकीयसाहाय्यकापेक्षां दूरतो परि-त्यज्य स्वयमेव स्वमनोरथानुरूपं संस्थापयितुं महान् प्रयास आस्थी-

यते। साम्प्रतं वङ्गेष्वेकतः श्रमशिल्पाभ्युदयसाधनेन स्वदेशी व्योत्पादनप्रसारणादिषु अन्यत इचैतादृशविश्वविद्यालयस्थापन चालनादिषु च विशेषतो जनानां चित्तवृत्तिः समाकृष्टा दृश्यते। अ त्रैव च सर्वेभ्यस्तदालोचनमेवाकर्ण्यताम्। कृतेऽपि विश्वविद्या छात्रान् विना निष्फल एवायमिति कियन्तो नामान्तेवासिनां र कीयं विश्वविद्यालयं विहाय नवीनेऽस्मिन् पाठमङ्गीकरिष्यन्ती तेषां सम्मतिर्गृह्यते। विश्वविद्यालयाध्येतारः सानन्दं सोत्साहञ्च म्पूर्विकया स्वस्वनामधेयं कीर्त्तयन्ति। दुर्लभास्ते छात्रा, ये स्मिन्महत्यारम्भे वैमुख्यमादधति। विश्वविद्यालयापेक्षित-व्ययसा त्तये नातिचिरमेव बहुलक्षाणि धनानि संगृहीतानि संगृह्यन्ते च सफलयतु सङ्कल्पमिमं वङ्गीयबन्धूनामनुकूलो भगवांस्त्रिभुवनाधीश्वर भवतु च भारतं समुद्भासितं भूयोऽपि तदुचितेनाभ्युदयेन।

———:o:———

## स्वदेशीयवस्तुव्यवहारे बङ्गानामवस्था।

स्वदेशाभ्युदयनाटकस्य प्रथमसूत्रधाराणां वङ्गीयानां छात्राणामु परि तदुद्योगानुचिताचार-व्यथितचित्तस्य शासनाधिकृतस्य रोषर षितलोचनानलसन्निपातः संवृत्तः। उद्घोषितमनेन यद्यदि कश्चि राजकीयविश्वविद्यालयान्तर्गतपाठशालीयश्छात्रः यथा कथमपि 'स्व देशीयव्यापारे' संसृज्येत, दण्डनीय एव स भवेदिति। छात्रैस्त श्रुत्वापीदं न श्रूयते, उचितमिति यतन्त एव ते तैस्तैः प्रकारैः स्वदे शाभ्युदयाय। अत्रासन्तुष्टेन 'रङ्गपुर'-जनपदाधिकृतेन तत्रत्यराज कीय विद्यालयान्तेसदानां प्रत्येकं रूप्यकपञ्चकदानरूपो दण्डो विहितः आज्ञप्तंच यावत् स दण्डो नाङ्गीक्रियेत, न तावत् तेषु कश्चिद्विद्या लये प्रवेश्यो भवेदिति। हविषा कृष्णवर्त्मवद् भूय एव वृद्धिमापन्नेः स्वदेशोत्साहेन गृहीतैकमत्याः (विहाय त्रयोदश) सर्वे बालका राज कीयविद्यालयं पर्यत्यजन्। अनुपदमेव तेषां यथोचितमध्यापनव्यवस्था सम्पादितैव स्वदेशहितैषिभिः। नूतन एवैको विद्यालयः स्थापित

त्रैवं वक्तुमुचितं-राजकीयविद्यालये यथापूर्वं स्थितानां बालकानां केचिद् राजपुरुषचरणाश्रितानां तनया इति। क्रमेणाऽन्यान्येष्वपि जनदेषु रङ्गपुरीयस्याभिनयस्य प्रसारः सम्पद्यते।

ढाकानगर्यामपि छात्रैराजकीयविद्यालयः परित्यक्तः। यतस्तत्यं शशासनाधिकृतानामीदृशेनानुशासनेन वङ्गीयच्छात्रसमाजेष्वतिभैवं वैमनस्यमुत्पन्नम्।

* * *

वङ्गेषु स्वदेशद्रव्यव्यवहारार्थं यतमानानां जनपदानां 'वरिशाल'-ामकमेवाग्रमासनं लभते। मूर्त्तेव स्वदेशप्रीतिरवतीर्णा तत्र। क्षीकण्ठानां बालानामपि कण्ठेभ्यो 'वन्दे मातरमिति' स्वजन्मभूमिमुद्दिश्यमधुरमन्द्रो ध्वनिर्नियतमेव वियन्मण्डलमवगाहते, सकृदुच्चरिते तस्मिन् विद्युन्महिम्नेव जनानामन्तःकरणं बलवदाकृष्यते। पांशुलचणानां हालिकानामपि साम्प्रतं नाविदितं यद्वैदेशिकवस्तुव्यवहारेण कियन्नामापकार उज्जृम्भत इति। प्रस्फुटितमिवेदानीं सर्वेषां प्रज्ञानेत्रम्, कुटिलमतयो राजपुरुषास्तु हन्तामीषां नेममुद्योगं सहन्ते। वन्देमातरमितिशब्दो द्रुत इवायोधातुर्दहत्येतेषां श्रवणविवरम्, विदारयति चान्तः प्रविश्य निशितक्रकच इव हृन्मर्माणि। जनानां शान्तिध्वंसो हि तेन भवतीति तेषामाशयः। अतएव यथाविवेकमुपायप्रयोगेण तत्प्रशमनं विधीयते, बहुष्वेव स्थानेषु राजादेशो घोषितो यत्र केनापि 'वन्देमातरमित्यस्य लेशतोऽपि रक्षणीयः सम्पर्कः, न च प्रकाशे रहसि वा समिति वा मित्रैः संमिल्य गोष्ठीविनोदालापो न करणीय इति। स्वदेशोन्नतये 'वरिशाल'-जनपदवासिनामुत्साहातिरेको राजपुरुषाणां सर्वथैवारुचिकर इति तेषां तस्मात् प्रसह्य विरमणार्थं शतद्वयं समुचितास्त्रसमुल्लसितं 'गुरखा'-नामधेयं दुर्धर्षं सैन्यं तत्र नियुक्तम्। एभिः समुत्पादितैर्विविधैरुपद्रवैः परं कष्टावस्था 'वरिशाल'-वासिनामुपस्थिताः। शृणुमो न तथापि ते स्वदेशीयवस्तुव्यवहाराद् विरं-स्यन्तीति।

*

* * *

क्वचिच्च स्पष्टमेव राजपुरुषैः स्वदेशीयवस्तुत्यागादेशपूर्वं वैदेशिकानामेव तेषां व्यवहारं जना आज्ञाप्यन्ते । क्वचिद् वा मूढतरैरिव कैश्चिदेतेषु सप्तमेऽष्टमे वा वत्सरे वर्त्तमानाः शिशवोऽपि 'वन्देमातरमिति' शब्दोच्चारणमात्रदोषेण दण्ड्यन्ते । अन्यत्र च क्वचित् शान्तिभङ्गभीरुभिस्तैर्वृथैव अनपेक्षितानां दण्डविधायक--रक्षापुरुषाणां ( punitive Police ) नियोगेन दरिद्राणामपि प्रजानामुपरि गुरुतरस्तद्व्ययवहनभारो निपात्यते । अयन्त्वत्र रमणीयो विशेषो यद् एतत् खलु व्ययवहनं तत्रत्यैर्हिन्दुभिरेव कर्त्तव्यम्, न तु महम्मदीयैरपि। शान्तिभङ्गव्याधिचकितै रङ्गपुराधिकृतैस्तत्रत्या केचिद् बहुमाननीया महान्तो जनाः—येषामन्यतमः कोऽपि सुप्रतिष्ठितो 'महामहोपाध्यायः,' विशेषरक्षापुरुषत्वेन नियोज्यावमानिताः । किं बहुना सर्वथा राजपुरुषाणां दुर्विषह दहनदृष्टी निपतिता इदानीं वङ्गीयाः ।

---

## वाराणसी ।

सन्निहितः कालो वर्त्तमाने वत्सरे राष्ट्रीयमहासभाया वाराणस्यां भाविनः सम्मेलनस्य, तत्संसृष्टाया देशीयद्रव्यप्रदर्शन्याश्च । श्रीमन्महाराजः काशीनरेशः प्रदर्शन्या द्वारमपावरिष्यति । महाराजेन तदुपलक्ष्य पञ्च सहस्राणि रूप्यकाणि वितीर्णानि । प्रदर्शन्यां बहुभिः प्राज्ञैः शिल्पादिविषये समुचिताः प्रबन्धाः पठिष्यन्ते, व्याख्यानानि च करिष्यन्ते । श्रूयते राष्ट्रीयमहासभामण्डप एव निवृत्तेषु तत्कृत्येषु 'श्रीभारतधर्ममहामण्डल'-परिषदः सम्मेलनं भविष्यतीति ।

—❦—

# मित्रगोष्ठी-पत्रिका।

## ( मासिकं संस्कृतपत्रम्। )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् "।

ऋग्वेदः।

तृतीये वर्षे } १८२७ शकाब्दाः, पौषः। { नवम संख्या

### मनः शिक्षा।

मनस्त्वत् सङ्कल्पाज्जगदिदमुदेति भ्रमकरं
समासक्तिश्चैषाऽनृतविषयमार्गानुसरणे।
ततस्तत्त्वज्ञानप्रविहतिरविच्छिन्नजनिकृ-
त्तये तस्यापायः सकलजगतः शान्तिकरणः ॥ १ ॥

यतस्त्वं दुःखानां भवगतिकृतानां प्रभवकृ-
त्ततस्तेषां शान्त्यै प्रकृतिचपल, त्वां सुवचनैः।
विहातुं दौर्जन्यं कुविषयविषङ्गात्मकमिदं
विशाम्येषोऽहं तत् सफलय विना कालहरणम् ॥ २ ॥

जलोपाधेः कम्पात्तरणिरविकम्पोऽपि हि यथा
मनुष्यैरज्ञानैर्विचलनयुतः कल्प्यत इह।
तथा त्वत्सङ्कल्पात्तव च विषयेषु प्रचरणा-
दनासक्तोऽप्यात्मा भवति भवधर्मैर्युत इव ॥ ३ ॥

त्वमेवाधिष्ठाता करणनिचयानां नृप इव
प्रवृत्तौ तेषाञ्च त्वमसि परमं कारणमिति।
समालोच्यैवं त्वामहमिदमतिप्रौढविनयाद्
ब्रवीमि स्थैर्य्यं त्वं श्रय निखिलरोगोपशमनम् ॥ ४ ॥

सदा धावद्धावद्विषयमलपूर्णाध्वनि कथं
श्रमं नाप्नोषि त्वं यत उपशमं यासि न ततः ।
विचित्रं चारित्रं तव नहि विजानामि हृदय-
स्वभावो दुर्ज्ञेयः खलु खलजनानामपि बुधैः ॥ ५ ॥

पतङ्गो दीपस्य द्युतिमतितरां वीक्ष्य सहसा
प्रलुब्धो वेगेन प्रपतति शिखायां ज्वलति च ।
मृगोऽपि व्याधस्य श्रुतिमधुरमाकर्ण्य निनदं
सुवंशीरन्ध्रोत्थं प्रमुदितमना बध्यत इह ॥ ६ ॥

तथा जिघ्रन् दूरात् कमलमधुगन्धं मधुकरः
समागत्यावेगान्नियमनदशां तत्र लभते ।
करी चाङ्गस्पर्शोच्छ्वसितहृदयो हन्त सुचिरं
करिण्याः संसर्गान्नरपतिगृहे बन्धनगतः ॥ ७ ॥

सुभक्ष्यास्वादाशातरलितमना मीनविसरः
सशङ्को संविद्धो वडिशवदने याति निधनम् ।
विलोक्यैकैकस्यानुसरणविधौ दुर्गतिमिमां
कथं न त्रासस्ते भवति सकलानामनुसृतौ ॥ ८ ॥

ततो हृत्पद्मस्थेऽमितसुखनिधाने द्युतिमये
विशुद्धे बुद्ध्यादीन्द्रियनिचयसाक्षिण्यकरणे ।
परात्मांशे सत्ये चिति निखिलसारेऽखिलमये
समाविश्य क्लेशं क्षपय भवसन्तानजनितम् ॥ ९ ॥

श्रीरामप्रसन्न ब्रह्मचारी

राजगञ्ज वर्धमा

———:o:———

## वेदवृत्तान्तः ।

### ३

### कृषिकर्म ।

प्रियाः पाठकाः, अतीतायां संख्यायां वैदिकसूक्तमुदाहृत्य द्यूतव्यसनस्य सुदुःसहोदर्कत्वप्रदर्शनावकाशे तत्परित्यागपूर्वं कृषिरेव करणीयेति पीयूषनिष्यन्दसहोदरस्तत्र भवतामार्याणामुपदेशउदाहृयत—

"अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः, कितव, तत्र जाया, तन्मे विचष्टे, सवितायमर्यः"॥इति*

अद्य तु सैव कृषिः कीदृश्यासीत्तेषामिति तद्वृत्तान्तबहुलं सूक्तमेकं सह संक्षिप्तेनार्थेनेह प्रकाश्यते ।

इदं हि सूक्तम् ऋग्वेदस्य दशममण्डले, नवमाध्याये एकाधिकशततमम् । अस्य ऋषिः सोमपुत्रो बुधः, देवता विश्वे देवाः, ऋत्विक्स्तुतिर्वा । तदुक्तं सर्वानुक्रमणिकायां शौनकेन—"उद्बुध्यध्वं, बुधः सौम्यः, ऋत्विक्स्तुतिर्वेत्यादीति" ।

अस्य सूक्तस्य मन्त्रेष्वार्याणां विषय एतद् विज्ञातुं शक्यते, यत् तेषां कर्णदण्डयुक्ताया नौकायाः; (२मन्त्रे) सीरस्य, युगस्य, दात्रस्य (३,४,),चर्ममयरज्ज्वाः(५,६); जल सेचनार्थं कस्यापि पाषाणनिर्मितस्य चक्रस्य (७), गवां मनुष्याणां च जलपानार्थं दारुमयस्य पात्रस्य (५,६), लौहमयस्य पात्रविशेषस्य, जलादितरलद्रव्यरक्षणार्थं समसनामकभाजनस्य (८), पाषाणमयस्य कस्यापि 'वाशी'-नामकस्य छेदनसाधकस्य यन्त्रस्य (१०) † व्यवहारा विदिता बभूवुः । किञ्च कस्मिंश्चित्स्थान उपगत्य गोष्ठविरचनपूर्वं गृहनिर्माणं, तत्र चायसपात्राणां बहिष्करणं, तेषां स्थानात्स्थानान्तरगमनं सूचयति (८) कृषिकर्मणि

---

* ऋग्वे. १०.३४.१३

† मन्यामहे, अद्यत्वे लौहमयी वास्येव तदानीं घर्षणक्षतधारपाषाणमय्यासीदिति ।

तैरश्वोऽपि नियुक्त इति गम्यते (७) । एकाधिकविवाहप्रथासीदिति ज्ञायते ('द्विजानि:'); प्राचीनार्येषु केचित् कृषिकारिणोऽभवन्निति ये वदन्ति तेषामिदं सूक्तं मन्यतमं प्रमाणम् । अत्र 'द्रोणेति' (३), 'अवतेति' (५), 'नयाणमिति' (७) चेतेषु शब्देषु भाषातत्त्वगतमपि किञ्चिच्चिन्तयितव्यमस्ति । परंतु तदिह पाठकानां वैरस्यापादकं भवेदिति न किमप्यधुना वक्तुमिच्छामः ।

इदं तत्सूक्तम् ।

१

उद्बुध्यध्वं समनसः सखायः, समग्निमिंध्वं बहवः सनीळाः ।
दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः ॥

हे अन्योन्यं कर्मानुकूला बन्धवो, यूयमुद्बुद्धा भवत, सर्वे एकस्मिन्नेव स्थाने वर्त्तमानाश्च सन्तः अग्निं सम्यगुद्दीपयत अहमपि युष्माकं रक्षणाय दधिक्रानामिकां देवताम्, उषसम्, अग्निं चेन्द्रेण सहाह्वयामि ।

२

"मन्द्रा कृणुध्वं, धिय आतनुध्वं, नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं प्राञ्चं यज्ञं प्रणयता सखायः" ॥

हे सखायः, गम्भीराणि स्तोत्राणि कुरुत कर्माणि विस्तारयत अरित्रेण ( कर्णेन ) परपारप्रापणीयां नावं च कुरुत; किञ्च हलयुगादीनि कृषिसाधनान्यायुधानि निर्मलीकुरुत, तथा प्रागर्चनीयमग्निं प्रणयत ।

३

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥

हे सखायः, हलानि वृषैर्युङ्ध्वम्, तदर्थं युगानि विस्तारयध्वम्, अ… सीतायां कृतायां—क्षेत्रे कृष्टे बीजं वपत । * अस्माकं स्तोत्रेण सह

* 'सप्त ग्राम्याः कृष्टे, सप्तारण्या अकृष्ट' इत्यापस्तम्बोक्तेः कृष्टे क्षेत्रे … तमाषव्रीह्यादीनि सप्तग्राम्याणि अकृष्टे तु वेणुश्यामाकनीवारादीनि सा… रण्यानि बीजानि वपनीयानीति बोध्यम् ।

स्माकमन्नं पूर्णं भवतु, तथा अस्माकं दात्राणि * अन्तिकमेव पक्वशस्यस्तम्बेषु पतन्तु ।

४

सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥

शोभमानेषु ( क्षेत्रेषु ६१ ) बुद्धिमन्तो मेधाविन ऋत्विजः सुखेन लाङ्गलानि योजयन्ति, तथा युगानि पृथक् कुर्वन्ति । ( अथवा केचित् हलं चालयन्ति, केचिच्च विश्रामेच्छया युगकाष्ठानि पृथक् कुर्वन्ति ) ।

५

निराहावान् कृणोतन सं वरत्रा दधातन ।
सिञ्चामहा अवत मुद्रिणं वयं सुषेक मनुपक्षितम् ॥

हे सखायः गवां जलपानसाधनानि द्रुममय पात्राणि कुरुत, चर्मयरज्जूश्च धारयत, वयं सुखेन सेक्तुं शक्यम्, उदकोपक्षयरहितं र्तं सिञ्चामः ।

६

इष्कृताहावमवतं सुवरत्रं सुषेचनम् ।
उद्रिणं सिञ्चे अक्षितम् ॥

गवां जलपानपात्रसंस्कृतम्, शोभनचर्मरज्जुयुक्तं, सुषेचनम् अक्षीणं गर्तं सिञ्चामि । †

७

प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित् कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥

हे सखायः, अश्वान् यथोचितघासोदकादिप्रदानेन प्रीणयत, यथा क्षेत्रकर्षणाय प्रभवन्ति, ततः कृषिरूपं हितं कर्म जयत, कुरुत च

---

* लवित्राणि, 'कास्ते' 'दला' 'कोयता' इति ख्यातानि ।

† पञ्चम्या एव ऋचोऽर्थं इह पुनरुक्तः ।

सुखवाहकं हलरूपं रथं । हे ऋत्विजः कर्मनेतृणां पुरुषाणां पानयोग्यं सन्निहितद्रुममयपानपात्रं, निम्नभूतम्, अश्मचक्रयुक्तं गर्त्तं सिञ्चत ।

८

व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहतातम् ॥

हे सखायः, गोष्ठं कुरुत, स खलु युष्माकं पयःपानसाधनम् भवति, बहुलानि विस्तीर्णानि च गृहाणि † कुरुत, लौहमयानि पात्राणि दृढीकुरुत, यथा तेभ्यो जलादि न स्रुतं भवेत् ।

९

आ वो धियं यज्ञियां वर्त्त ऊतये देवा देवीं यजतां यज्ञियामिह ।
सा नो दुहीयद् यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥

हे देवाः, अस्मद्रक्षणार्थं, युष्मत्सम्बन्धिनीमस्माकं कर्त्तव्यत्व-बुद्धिमसकृदालोचयामि । यथा यवसानि भक्षयित्वा गौः सहस्रधाराभिर्दुग्धं ददाति, तथा सापि बुद्धिरस्माकं कामान् प्रपूरयतु ।

१०

आ तू षिंच हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परिष्वजध्वं दशकक्ष्याभिरुभे धुरौ प्रति वह्नी युनक्त ॥

हरितवर्णमेनं सोमं दारुमये पात्रे निधाय शिलासारभूताभि र्वाशीभिः (तक्षणसाधनैः) छिन्त । अथ सोमपूर्णपात्रं दशभीरज्जुभिः शकटे आबध्य वाहकौ बलीवर्दौ योजयत ।

* अत्र सायणेनाश्वशब्दस्य बलीवर्दोऽर्थः कृतः उदाहृियमाणस्य सूक्तस्य देवता ऋत्विकस्तुतिः, विश्वे देवा वेत्युक्तम् । वैश्वदेवपक्षे तु वाच्यार्थ एव गृहीतः । अस्मिन् पक्षे ऋगियं सांग्रामिकार्थपरतया व्याख्यायते । श्रीमता यास्केन निरुक्ते (५, ४, ८.) इत्थमेव व्याख्यातम् सायणेनापि तदेवानुसृतम् । विस्तरभिया नास्माभिस्तत्प्रदर्श्यन्ते ।

† केषाञ्चिन्मते वर्मशब्दो निघण्टौ गृहनाममध्ये पठ्यत इति तस्यैवात्र चारुतरत्वबुद्ध्या न सायणमतं गृहीतम् ।

११

उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः ।
वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम् ॥

यथा कश्चिद् द्वयोर्भार्ययो रमते, तथा यस्य लाङ्गलस्य धुराद्वये वाहको बलीवर्दः शब्दायमानो भवति, गर्त्तप्रदेशमखनन्तो यूयं काष्ठनिर्मितं तल्लाङ्गलं प्रार्थनीये क्षेत्र एवावस्थापयध्वम् ।

१२

कृपमसर कृपथमुद्धातन चोदयत खुदत वाजसातये ।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥

हे नेतारः, अयमिन्द्रः सुखदाता । अतोऽन्नलाभायैनं प्रति सोमं प्रेरयत, प्रसादं चास्योत्पादयत । हे पीडिता ऋत्विजः, इन्द्रः निष्टिग्र्यः अदितेः पुत्रः, तस्य सोमपानार्थम्, अस्माकं च रक्षणार्थं तामागमयत ।

विधुशेखरशर्मा ।

———:o:———

## छात्रचर्या । *

वेदाभ्यासनिरन्तरव्यतिकर प्रत्यूहितप्रार्थित-
स्वैरालापविहारभोगजनितक्लेशासहा भारती ।
नानाभावरसोज्ज्वलान् बुधगणानाश्लिष्य तृप्ताप्यलं
साध्वी भक्तजनेषु वत्सलतरा देयान्ममाभीप्सितम् ॥

न्यायाद्यनेकशास्त्रार्थतत्त्वज्ञानमधूज्ज्वले ।
चञ्चरीकतु चेतो मे श्रीमद्गुरुपदाम्बुजे ॥

---

* प्रबन्धोऽयं स्यानन्दूरपुरस्थ-( Trivendram) राजकीय-संस्कृतविद्यामन्दिरे वार्षिकपरीक्षोत्तीर्णच्छात्रपारितोषिकदानमहोत्सवाय C. S. I., F. M. U., M. R. A. S., F. R. H. S, इत्याद्यनेकबिरुदशालिना श्रीमत्केरलवर्मदेवेनाधिष्ठिते समाजे पठितः ।

अयि भोः सामाजिकाः, श्रीमतां तत्रभवतां समक्षं छात्रचर्यामधिकृत्योपन्यसितुं प्रवृत्तस्य यत्सत्यं कम्पत इव मे हृदयम्, इदञ्च नातिचित्रं, यतः ।

"आहूतापि पुरः पदं न ददती, प्राप्तोपकण्ठं हठात्,
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालिङ्गति ।
वैवर्ण्यं स्वरभङ्गमञ्चति बलादालिङ्गिता वेपते
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते" ॥ इति

अथापि श्रीमतामादेशरूपं महानुग्रहं शिरसा बिभ्राणः ।

"पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य" ॥

इत्यस्मिन्नर्थे च श्रद्दधानो मद्वचनं नीरसमपि रसिकजनमनसि निधीयमानं समुदितरसपोषं भविष्यतीति धैर्येण यत्किञ्चिज्जल्पितुं समुद्युक्तोऽस्मि । अतस्तत्रभवतामवधानं दीयमानमभ्यर्थये ।

इह किल जगति समुन्मिषत्स्वपि व्यासकपिलकणादादिष्विव, कुलक्रमागतानेकानवद्यहृद्यविद्याधरीकृतविद्याधरेषु, निखिलमहीवर्तुलमुखतिलकायमानेषु, पदवाक्यप्रमाणपारावारपारीणेषु विद्वन्मणिमुकुटेषु परस्सहस्रेषु प्राचीनसम्प्रदायवित्सु विद्यमानासु च यावदपेक्षं नानाविधसामग्रीसम्पत्तिषु जाग्रत्सु च विद्यामभ्यस्यत्सूपपराङ्गेषु प्रचलत्सु च तत्र तत्राध्ययनाध्यापनादिषु न तादृशीमवाप्नुवन्त्यभ्यासपरिपाटीमिदानीन्तना माणवकाः, यादृश्या किल सर्वातिशायिज्ञानोत्कर्षमधिगम्यास्माकं पितृपितामहाद्या महानुभावाः प्रायोऽद्यतनैर्दुरवगाहानपि विषयान् अस्माकमनुजिघृक्षया महाप्रबन्धरूपेण प्रथ्नन्ति स्म । अत्रचैतावन्मात्रतारतम्यहेतुभूतं किमिति पर्यालोच्यमाने छात्रचर्यावैकल्यमन्तरा न किञ्चित्कारणमन्यदस्तीति प्रतिभाति । अतस्तादृशच्छात्रचर्यामधिकृत्य किञ्चिदत्र विचारयामः ।

छत्रं गुरोर्वैगुण्यावरणं शीलमेषामिति छात्राः, शीलमित्यधिकारे छत्रादिभ्योऽण् इत्यण् प्रत्ययः तेषां चर्या छात्रचर्या । अनेन च यथा छत्रं

...प्र जायमानान् वृष्ट्यातपादिदोषान् आवरणेन वारयति, तेन शरीरिणस्तज्जन्यक्लेशो न जायते, तद्वद् गुरुक्लेशवारकत्वाच्छी-ल्स्य छत्रत्वं, तद्वत्वाच्च छात्राः । तथा च गुरोर्येनकेनापि प्रकारेण ...यमानान् स्वेन वारयितुं शक्यांश्च दोषान् वारयितुं बद्धदीक्षाः ...येन मनसा वाचा च गुरुमेवानुवर्तमानाः स्वप्नेपि तस्याहितमना-...न्तः सर्वदा दाक्षिणात्या इव तद्धितप्रयोगकाङ्क्षिणो, नागरिका इव ...रित्यक्तग्राम्यधर्माः, तदाज्ञालिप्सया तन्मुखावलोकनपरास्तस्य स-...व्यमानानपि दोषान् वाचानुच्चारयन्तो, मनसाप्यचिन्तयन्तः काये-...पि तस्य गतिभाषितेङ्गितादीन्यनुकुर्वाणाः, परेण च क्रियमाणानि ...विवादादीन्यनाकर्णयन्तस्स्वकरणीयैकतत्पराश्च छात्रा इति फलितम् । ...त्र स्वोद्दिष्टविद्याभ्यासपरिसिद्ध्यर्थं यानियान्यवश्यमनुष्ठेयानि ...नीह छात्रचर्यापदार्थः ।

तत्र च छात्राणां स्वरूपमप्रतिपाद्य तच्चर्याया निरूपयितुमशक्य-त्प्रथमं तेषां स्वरूपं निरूप्यते । छात्राणां स्वरूपं तन्त्रसारे यथा—

"शान्तोविनीतश्शुद्धात्मा श्रद्धावान् धारणे क्षमः ।
समर्थश्च कुलीनश्च प्राज्ञस्सच्चरितो धनी ॥
एवमादिगुणैर्युक्तश्छात्रो भवति नान्यथा ।
गुरुता शिष्यता वापि तयोर्वत्सरमात्रतः ॥
सद्गुरुस्स्वाश्रितं छात्रं वर्षमात्रं परीक्षयेत् ।
वर्षैकेन भवेद्योग्यश्छात्रो गुणसमन्वितः" ॥ इति

विद्याभ्यासाय प्रवृत्तस्य हि शिष्यस्य तदननुकूलविषयान्तरव्यापृत-चित्तस्वरूपं शान्तत्वमावश्यकम् । अन्यथाभ्यासवेलायां विषयान्तर-व्यापृतचित्तस्य गुरुभिरतिप्रयत्नेनापि उपदिश्यमानोर्थो मरुवृष्टिरिव ...कस्मा अपि फलाय प्रकल्पते । नहि विषयान्तरव्यापृतचित्तस्य मनो दुन्दुभिघोषमपि विषयीकर्तुं प्रभवति । अतएवोक्तं कविकुलसार्व-भौमेण श्रीहर्षेण—

"धरातुरासाहि मदर्थयाच्ञा।
कार्या न कार्यान्तरचुम्बिचित्ते" ॥ इति।

अतः शान्तत्वमत्यावश्यकं विद्यामधिजिगांसूनां बालानाम्। एवं विनयोऽप्यावश्यकः, विनयो नाम गुरोस्सकाशादात्मनोऽपकर्षप्रकाशनम्। तद्धि गुरुहृदयावर्जकं भवत् गुरोर्मनःप्रसादहेतुतामापन्नं विद्याख्यस्य वृक्षस्यालवालतां भजते तादृशविनयप्रदर्शनप्रकारश्च प्रतिपादितो मनुना, यथा—

"शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम्॥
नित्यमुद्धृतपाणिस्स्यात् साध्वाचारस्सुसंयतः।
आस्यतामिति चोक्तस्सन्नासीताभिमुखं गुरोः॥
हीनान्नवस्त्रवेशस्स्यात् सर्वदा गुरुसन्निधौ।
उत्तिष्ठेत्प्रथमञ्चास्य चरमञ्चैव संविशेत्" ॥ इति।

एतादृशविनयावलोकनार्द्रीकृतान्तःकरणः परमदयालुरुपाध्यायः सर्वेभ्योपि धनेभ्यः प्रधानभूतं विद्याख्यं धनं देशकालावच्छेदेनापि विलम्बरहितं तदभिलाषिणे छात्राय सम्प्रददाति। अहो! परमकारुणिकत्वं विनयवशीकृतहृदयस्य गुरोः, पश्यत, इह किल जगति प्राकृतमपि धनं कः खलु पुमान् परं प्रापयितुं समुद्युङ्क्ते। न खलु सहोदरा अपि समुद्युञ्जते अत एवाह श्रीहर्षः—

"मा धनानि कृपणः खलु जीवन् तृष्णयार्पयतु जातु परस्मै।
तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोपि" ॥ इति।

प्रत्युत परकीयस्य धनस्य स्वायत्तीकरण एव प्रयतन्ते, तदर्थञ्च कलहायन्ते। एवं स्थिते सर्वधनेभ्योऽपि सर्वप्रकारेणोत्कृष्टतमस्य—

"न चोरहार्यं नच राजहार्यं न भ्रातृभाज्यं न करोति भारम्।
व्यये कृते वर्धत एव नित्यं विद्या धनं सर्वधनात्प्रधानम्" ॥

इत्युक्तलक्षणस्यास्य धनस्य प्रतिपादनं परमकृपाव्यतिरेकेण कथं संघटताम् कथन्तराञ्च—

"तृष्णां छिन्धि, भज क्षमां, जहि मदं, पापे रतिं माकृथाः,
सत्यं ब्रूह्यनुयाहि साधु पदवीं, सेवस्व विद्वज्जनम् ।
मान्यान्मानय, विद्विषोऽप्यनुनय, प्रख्यापय प्रश्रयं,
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम्" ॥

इत्याद्युपदेशश्च बहुमूल्यप्रदानेनाप्यसुलभं वितरतु गुरुः नहि ्लभ उपदेश ईदृशः, येन पुमान् पौरुषं प्रपद्येत । अत उक्तं विन- ोप्यावश्यक इति ।

एतादृशगुणविशिष्टत्वं शिष्यस्यैकेन द्वाभ्यां त्रिभिर्वा दिवसैर्भवितु शक्यं, तथापि तस्य छात्रीभवनयोग्यता अस्तिवा नवेति वत्सर- ात्रं परीक्षणीयम्, नहि केनाप्यवगन्तुं शक्यं द्वित्रैर्दिवसैः प्रज्ञाव ापि । तस्य प्रथमं तथाविधगुणाभावेऽपि समनन्तरं तदीयसंस- ण तत्प्रवृत्तिदर्शनेन तदीयोपदेशेन वा पूर्वोक्तगुणोत्पत्तिसम्भवेन थमं तत्परित्यागायोगात् । नहि स्वस्यापेक्ष्यमाणान् गुणानादायैव ातो जायमानो जनिष्यमाणो वा समुपलक्ष्यते लोके । नापीदमस- ावि यत्सज्जनोपदेशप्रवृत्तिसंसर्गादिभिरपेक्ष्यमाणा गुणाः सम्भव- ीति यथाह भर्तृहरिः—

"जाड्यं धियो हरति, सिञ्चति वाचि सत्यं,
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किन्नकरोति पुंसाम्" ॥ इति ।

ाद्याभ्यासाय समुपागतस्य च गुणविशेषपरीक्षा तावदत्यावश्यिका त्सरमात्रेणापि । अन्यथा अविनयालस्यादिदोषग्रस्तश्चेच्छात्रो ावति, तदा तदीयाविनयादिदोषेणार्जितानां दोषाणां गुरुरेवहि पात्रं ावति; तथाच स्मर्यते—

"राज्ञि चामात्यजो दोषो भार्यादोषस्स्वभर्तरि ।
तथाशिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम्" ॥ इति ।

न केवलमेवंविधो दोषः, अपितु स्वकीयपुत्रा अपि तत्संसर्गेण तदीयवृत्तमनुकुर्वन्तः समानवयस्कतया तदुपदेशमेव महामन्त्रं मन्वानाः स्वेनोपदिष्टमपि गजनिमीलितेनावधीरयन्तो दुर्मार्गैकपरायणाः प्रातिवेशिकांश्च माणवकान् ललितललितै रुपदेशवचनैः समावर्जयन्तस्तद्धृदयञ्च निर्मलमपि कलुषीकुर्वाणाः ग्रामकूपनिपतितविषकणा इव ग्रामीणान् सर्वानपि बालान् दूषयन्तः स्वयं दुष्टपदवाच्यतां भजेरन्। किंवा इतोऽप्यन्यत्कष्टतरमस्ति लोके। बालानां हि हृदयं बाललसाग्रमिवातिकोमलम्, अन्यत्रप्रवर्त्यमानमनायासेन प्रवर्तते, नहि तदा कृत्याकृत्यविवेचनक्षमा तेषां बुद्धिः। अन्यत्र प्रवर्तमानञ्च हृदयं समासक्तं सदार्द्रकुड्यक्षिप्तपाषाणखण्डमिव तत्रैव विलीयते तस्मात् बाल्य एव बालानां हृदयं यथा सद्विषय एव प्रवर्तेत, तथा यतनीयम्। तत्रत्य बाला यथा दुष्टैस्सह न संसृज्येरंस्तथा पर्यवेक्षणीयाः। अतश्च छात्राः परीक्ष्यैव छात्रत्वेनोपकल्पनीया इति सिद्धम्। अत एवोक्तम्।

"गुरुता शिष्यता वापि तयोर्वत्सरमात्रतः।
सद्गुरुस्स्वाश्रितं छात्रं वर्षमात्रं परीक्षयेदिति"॥

एवंविधानाञ्च छात्राणामवश्यकरणीयेष्वन्यतमानि चर्यापरपर्यायाणि कृत्यानि निरूप्यन्ते। अध्ययनवेलायां रसमागच्छन्त्या विरहमसहमानया कामिन्येव निद्रया परिहासिकयेव नयनेपिदधत्या समालिङ्ग्यमानोऽपि बलादेनां दूरीकृत्य सश्रद्धमाकर्णयेद्गुरूपदिश्यमानानर्थान्। पुस्तकावलोकनवेलायां पठनवेलायाञ्च प्रायस्सर्वेषामपि निद्रा समायातीत्यतिरोहितमेव किल महाभागानाम्। निद्रायमाणे ह्यमुष्मिन् अतिप्रयासेन गुरुभिरुपदिश्यमाना अपि विषया अरण्यरुदितायमाना न किञ्चित् प्रयोजनमावहन्ति, कण्ठशोषः परमवशिष्यते गुरूणाम् अतो ऽध्ययनवेलायामपगतनिद्रैः सोत्साहैर्भाव्यम्।

अतएवोक्तं नारदशिक्षायाम्—

"हयानामिव जात्यानामर्द्धरात्रार्द्धशायिनाम्।

नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥ ८।२३
द्यूत पुस्तकवाद्यं च नाटकेषु च सक्तिका।
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट्" ॥ ८।२४

एवं श्रद्धाप्यावश्यिका श्रद्धा नाम गुरूपदिष्टविषयेषु विश्वासः, गुरुर्मम दोषलेशमपि नोपदिशेत्, प्रत्युत मम यथा श्रेयस्सम्पद्येत, यथा च कृत्याकृत्यविवेचनक्षमो भवेयम्, यथा वा मृगप्रायां वृत्तिं सन्त्यज्य गृहीतस्यास्य मनुष्यजन्मनस्साफल्यं सम्प्राप्नुयां, तथा दीक्षारक्षणदक्षिणो भगवान् देव एव मामनुजिघृक्षुर्गुरुस्संवृत्त इति तदुपदिष्टेषु विश्वसनीयम्, अविश्वासो यदि जायेत तदा तद्वाक्येऽप्रामाण्यज्ञानोदयेन न तद्वाक्यं शृणुयात् नापि तथा प्रवर्तेत। नहि रजतं दृष्ट्वा रजतमिदमित्युक्तेऽपि तत्राप्रामाण्यज्ञानवान् मामयं प्रतारयतीतिबुद्ध्या तद्वाक्यं शृणोति शृण्वन्नपि वातद्ग्रहीतुं प्रवर्तते अतो ऽविश्वासं दूरीकृत्य गुणो वा दोषो वा, सर्वं तदायत्तमिति अचञ्चलचित्तेन भाव्यम्। एवं सश्रद्धमधीताश्च विषया अध्ययनव्यतिरिक्तेषु समयेषु पुनः पुनरनुचिन्तनीयाः, अन्यथा पठनवेलायां सम्यगवगता अपि विषया विस्मृताः सन्तोऽनधीतसमकक्ष्यतां भजेरन्। अतोविद्यायाः साफल्यमिच्छुभिर्बालैर्नैरन्तर्येणाभ्यासः कार्यः, न तु कदाचिदुग्रतामवलम्ब्य कदाचिच्चौदासीन्यपरिग्रहेण कञ्चित्कालमन्यं विषयमस्यस्य तञ्च विहाय, कञ्चित्कालं विषयान्तरस्य परिशीलनेन च वृथा कालो यापनीयः। युगपन्नानाविधविषयविचारे हि क्रियमाणे, न कस्यापि विषयस्य कूलङ्कषबोधो जायते। अतो युगपन्नानाविषयबुभुत्सापिशाचिकानाविष्टचित्तो भूत्वा स्वयमतिमन्दोऽपि पिपीलिकासर्पणात्पाषाणोपि निम्नी भवेदिति न्यायंसार्थकयितुकामः सुप्रसन्नचित्तो यदि प्रतिदिनमल्पमप्यधीयीत, तदा स नूनं विचक्षणो भवेदित्यत्र न कस्यापि विशयस्यावकाशः।

एतदेवोपदिष्टं नारदशिक्षायाम्—

"शनैर्विद्यां, शनैरर्थानारोहेत् पर्वतं शनैः।

शनैरध्वसु वर्त्तेत योजनानि परं व्रजेत्॥

योजनानां सहस्राणि शनैर्याति पिपीलिका।

अगच्छन् वैनतेयोऽपि पादमेकं न गच्छतीति॥ ८।१५-१६

एवं प्रतिदिनं प्रातरुत्थाय स्नात्वा, स्वस्वकुलाचारानुसारेण करणीयं कृत्यमपि त्वरितं परिसमाप्य, पूर्वेद्युः पठितान् पाठान् सम्यगभ्यस्य, तस्मिंश्च दिने ऽध्येतव्यान् पाठान् सकृदालोक्यालोच्य च यावदवगतं, क्लृप्तसमयेषु पाठशालां गत्वा, नियतप्रदेशेषु चोपविश्योपाध्यायेषु समागच्छत्सु उत्थाय विनयपूर्वं तदाज्ञानुरोधेन पुनरुपविश्य पाठस्समारम्भणीयः। विद्याभ्यासश्च बाल्य एव करणीयः, निसर्गरमणीये हि बालभावे ऽपगते अनेकविलासभरमन्थरे च सम्प्राप्ते यौवने प्राणिनः खल्वविनीतेन मन्मथहतकेन समुन्माद्यन्ते, तरलीक्रियते चान्तरङ्गमेतेषाम् निराक्रियते च कार्याकार्यविवेचनसामर्थ्यं, कार्यते च पदमपथेऽपि कुतः खल्वनङ्गवागुरानिपतितमनोमृगस्य हृदयाह्लादनशिशिरकामिनीसंलापामृतास्वादनपरस्य च विद्याभ्यासो नाम; दूरापेतमेतत्। अतश्चापरिमितमूल्यस्य बालभावस्यानन्तरं दुरधिगमतया तारुण्येन दुस्सम्पादेष्वेवंविधेष्ववश्यकरणीयेष्वेव व्ययः कार्यः।

निरन्तरव्यवसायो हि नराणां कामधेनुरिवाभीष्टफलप्रदायकः सर्वोत्कर्षप्राप्तिहेतुश्च भवति, नखलु जगति तद्दृष्टं यद्धि व्यवसायेन दुरधिगमम्। तथाचोक्तम्।

"नात्युच्चशिखरो मेरु र्नातिनिम्नं रसातलम्।

व्यवसायसहायानां नातिपारो महोदधिः"॥ इति।

'एवं निरन्तरमभ्यासे हि क्रियमाणे वासना द्रढीयसी जीवितावधि ततोऽप्यधिकं वानुवर्तमाना स्मृतोपनता परिचारिकेवावश्यकार्याणि साधयितुं नियोगप्रतीक्षा भवति। एवञ्च जागरूकता, व्यवसायः, समयस्य यथायोग्यं विनियोगश्च छात्राणामत्यावश्यकाणि कृत्यानि, तथापि परमकारुणिकेन भगवता वितीर्णाया विलक्षणबुद्धेर्यथावदुपयोगे

जागरूकतामन्तरेण न सम्भवति, यथावदनुपयुक्तायाञ्च तस्यां कृत-
ज्ञतां गलहस्तयता बालेन कृतघ्नतायाञ्च हस्तावलम्बो दत्तस्स्यात्
तादृशमहापराधजन्येन चैनसा परमुपलिप्येत, उभयतो भ्रष्टश्च भवेत् ।
अतोजागरूकता तावदत्यावश्यिका बालानाम् एवं सकलविधसुखानुभ-
वनिदानेन व्यवसायेन विनाकृतो ऽलसपुरुषः सत्स्वपि सुखानुभवसा-
धनेषु नैव सुखमनुभवितुं प्रभवति । अलसता हि सुखानुभवविरो-
धिनी, आरोग्यनिर्मूलयित्री निर्गुणं निर्धनं निस्तेजसञ्च पुरुषमुपजन-
यति, अतस्तादृशी मारोग्यपरिपन्थिनी मलसतां निराकृत्य व्यवसाय
एव शरणीकरणीयो बुद्धिमद्भिर्बालकैः । एवं पाठशालामुपगतैरुपा-
ध्यायस्य सतीर्थ्यानां वा वैमनस्यमजनयद्भिः सविनयैस्सम्यगनवगतान्
विषयान् उपाध्यायात्सच्छात्रेभ्यो वा ऽवधारयद्भिः स्वस्वकृत्यपरैर्भवि-
तव्यम् ।

एवं विद्याभ्यासस्यारोग्यमन्तरा विधातुमशक्यतया विद्यया सहा-
रोग्यस्य प्रधाननिदानं व्यायामोऽप्यवश्यं करणीयः । अतः प्रतिदिनं
नियताध्ययने निवृत्ते वितीर्णायाञ्च गुरुणा गृहगमनानुज्ञायां, वयस्यै-
स्साकं कञ्चित्कालं किमपि देहायासप्रदं कर्म कर्तव्यम् अव्यायामशीलो
हि जनो येन केनापि व्याधिना ग्रस्तो ऽलसस्सन् परिक्षीणसकलावय-
वशक्तिः महापण्डितोऽपि परस्यात्मनो वा न किञ्चिदप्युपकर्तुं प्रभ-
वति । अतः प्रतिदिनं येनकेनाप्युपायेन शरीरदार्ढ्योपादने यतित-
व्यम् व्यायामेन हि असदेहेषु वर्त्तमानानां चलनहेतुभूतानां मांस-
प्रचुराणां भागानां यथावदुपयोगेन पुष्टिर्जायते शरीरञ्च दृढं भवति
यदुक्तं वाग्भटेन—

"विभक्तघनगात्रत्वं व्यायामादुपजायते" इति ।

किञ्चदेहस्यायासे जायमाने निश्वासोच्छ्वासा अप्यधिकाधिका भ-
वन्ति, तदा च शुद्धवायूनामन्तस्सर्वत्र प्रचारेण रक्तं परिशुद्धं तत्
सर्वेष्ववयवेषु प्रसरति । एवं शरीरे शीघ्रसञ्चारेण बलवत्तरकर्मानु-
ष्ठानेन वा जायमानं हि स्वेदजलं त्वग्द्वारेण दुष्टांशान् बहिर्निष्काश-

यत् शरीरं सुस्थिरं करोति। जाठराग्निश्च प्रवृद्धो भूत्वाऽमितमप्याहारं क्रियमाणं भस्मसात्करोति। परन्तु व्यायामो हित इत्यालोच्य करणीयान्तराणि परित्यज्य पाठमप्युपेक्ष्यातिशयेन क्रियमाणः शरीरस्यात्मनश्च दोषाय। केचिद्धि बालाः परीक्षार्थं बलवत्परिश्राम्यन्तो व्यायामलेशमप्यकुर्वाणा अहर्दिवं परीक्ष्यकोटिप्रविष्टानेव विषयान् मुहुर्मुहुरनुशीलयन्तोऽध्ययन एव स्वकीयं यावत्समयं विनियुञ्जाना महतोनऽर्थाननुभवन्ति। उत्तेजनीया हि बुद्धिरनुकूलं तक्षादिनेव वास्यादीनि, अतोयथोचितं व्यायामं कुर्वद्भिरव्यायाममतिव्यायामंवा कुर्वाणैश्च न भवितव्यं श्रेयस्कामैर्विद्यायास्साफल्यमिच्छुभिर्बालैः।

एवं विद्याभ्यासावस्थायां निर्दिष्टग्रन्थभिन्नग्रन्था अपि यथावसरं पर्यालोकनीयाः, नतुसर्वेऽपि ग्रन्था गुरुमुखत एवाध्ययनीया इति दुराशा कार्या। नहि केनापि शक्यं वर्षसहस्रेणापि गुरुमुखेन सर्वानपि ग्रन्थानभ्यस्य सर्वानप्यर्थानवगन्तुं किन्तु मार्गमात्रप्रदर्शनं कर्तुं शक्यं गुरुभिः अतो यथावसरं ग्रन्थान्तरपर्यालोकनमपि न दोषाय परन्तु ग्रन्थान्तरपर्यालोकनमपि मितं सदमितं फलमादधाति, नत्वमितं तन्मितमपि गुणं जनयेत्। प्रत्युत सर्वङ्कषार्थबोधासम्भवेन ज्योतिरिङ्गणप्रभायमानज्ञाना यथावसरमधीतं चरितार्थयितुमक्षमाः पामरजनसाधारणा विद्वज्जनविगर्हाभाजनं सम्पद्येरन् अतो ग्रन्थान्तरपर्यालोकनमपि प्रकृतप्रत्यवायाजनकंयाव दात्महिताय कल्पते तावदेवानुसरणीयम्।

एवं अध्ययनकाले स्वचापलप्रयुक्तविलक्षणविजिगीषया कस्मिंश्चन विषये प्रतिपाद्यमान आत्मनः प्रतिभापकर्षं मन्वानः कथमप्ययं गुरुः पराजेतव्य इति "कश्चित्कान्तान्यायेन" अपूर्त्यंनाकर्णयन्तोऽपि अन्तरा आक्षिप्य तस्मिंश्च क्षमावता गुरुणा समाहिते समाधानेऽन्यमाक्षेपमुद्भावयन्त आक्षेपसमाधानपरम्परया वृथाकालं यापयन्तो गुरोर्महद्वैमनस्यं जनयन्तः तेन च सप्रयत्नमधीयाना अपि नकिञ्चिदपि फलमाप्तुं प्रभवन्ति। अनुग्रहः किल गुरोर्महच्छ्रेयस्साधनं छात्राणाम्।

अधीतानां पाठानां मुहुरनुचिन्तने सन्ति चेत्सहपाठिनोऽप्यभ्यर्थनीयाः, नहि गुरुणा निष्पक्षपातिना सामान्येनोपदिष्टमप्यर्थं सर्वोऽपि समग्रं ग्रहीतुं प्रभवति। एक एकमर्थं सम्यग्गृह्णाति अपरश्चान्यमर्थम्। एकेन गृहीतोऽर्थोऽन्येन ग्रहीतुं न शक्यते अन्यतमश्च तं सम्पूर्णं गृह्णाति। अतस्सर्वेऽपि मिलिता अधीतान् विषयान् सम्यक् चर्वयन्तस्तर्कयन्तश्च सन्दिग्धमर्थं निर्मत्सरास्समानयोगक्षेमा भवेयुः। परन्तु अधीतविषयपरिशीलनार्थं मिलितैस्सरसालापादिकं कुर्वाणैर्वृथाकालो न यापनीयः। स्वभावः खल्वयं यद्वयस्यानां सान्निध्यं सरससंलापप्रवर्तकं भवतीति।

एवं प्रतिदिनं नियतपरिश्रमाः स्वस्वकृत्यमात्रव्यापृता गृहकृत्यादिष्वनभियुक्ताश्छात्राः परं पाण्डित्यमुपगम्येह चामुत्र च कृतकृत्या भवेयुरित्यत्र न कश्चित्सन्देहः। एवं स्थिते, आधुनिकाः केचिद्बालाः गुरूपदेशाकर्णनमात्मनः परं परिभवास्पदं मन्यमानाः, गुरोरवमानमेवावश्यकर्तव्यकृत्यजातेष्वन्यतमं मन्वानाः, अध्ययनवेलायामपि गुरून् प्रतारयितुं परं पुस्तकमवलोकयन्तो, मनसा चान्यत्कार्यजातमालोचयन्तो ऽन्यदा च गुरुदूषणभाषणभूषणा वयस्यपाशैस्साधं वृथा तत इतस्सञ्चरन्तः, पाठशालायामपि गुरौ कार्यान्तरेण किञ्चिद्विपन्ने कलकलरवैर्दिगन्तरालमापूरयन्तो, नानादेशवृत्तान्तावजिगमिषया च नानादेशादागतावार्तापत्रिकास्समालोकयन्तः तद्गतांश्च विषयान् सच्छात्रानन्यांश्च बोधयन्तः, सुशीलानपि दुःशीलयन्तः, कलहाय च रन्ध्रान्वेषिणस्त्रिशङ्कुपातं पतन्तश्छात्रापसदाः स्ववैदग्ध्यप्रशंसाशंसनतमोभूयिष्ठहृदयकन्दराः समुल्लसन्ति धरातले। किन्नाम खलु तेषामसाम्प्रतम्, यैर्न कर्तव्यो विनयः, न रक्षितव्या महतां मर्यादा, नस्मरणीयं शीलं, न द्रष्टव्यो धर्मः, नानुमन्तव्यो न्यायः, नवा भेतव्यम् गुरुजनात् अपितु सम्पादनीयो दुष्टैस्सह सहवासः, प्रकाश्यो दम्भः, कर्तव्यः कलहः, उच्चार्यो दुर्वादः, प्रच्छाद्यं सत्यम्, वक्तव्यं स्वेच्छामनुसृत्य यत्किञ्चित्, प्रकाशनीयो गुरोरवमानः विधेयोऽध्ययनवेलायां

गुरुभिस्सह वादः, स्थापनीयश्च यथाकथञ्चित् स्वोक्तम्। अपरे च के-चिच्छात्रा न्यायशास्त्राद्यध्येतारः कतिपयपदार्थनिर्वचनपूर्वकव्याख्या-दिज्ञानमात्रेण त्रिभुवनमेवास्माभिर्ज्ञातमिति प्रौढाहङ्काराः सर्वमन्य-च्छास्त्रं तृणमिवावगणयन्तः कार्यकारणभावादीनपि सम्यगजानन्तो-ऽपि चापलवचनप्रपञ्चैर्दिगन्तरं ध्वनयन्तः पारलौकिकाय लौकिकाय वा लाभायाप्रभविष्णवः समितिसमरेषु सिंहनादोच्चारणमेव परं पुरु-षार्थं मन्यमाना: निर्दिष्टग्रन्थानामपि पदपदार्थान् सम्यगनवबुध्यमाना अधरितामृतानां महाभारतादीनां सकृदालोकनेऽपि पराङ्मुखाः स्व-मायुः केवलं ह्रसयन्तो भुमेर्भारभूता दृश्यन्ते अन्येतु केचन छात्राप-सदा मासिकवेतनं दत्त्वा किलास्माभिरधीयते, अतो न मनागपि गुर-वोऽनुसरणीयाः, अपित्वस्माकमेव वचनमनुसरणीयं गुरुभिरिति तद्व-चन मनाद्रियमाणाः स्ववचनमेव गुरूननुसारयितुं प्रयतमानाः, अन-नुसरन्तश्च गुरोः, केसरकलापगतयूकादय इव सिंहस्य क्षुद्रोपद्रव-कारिणो दैनन्दिनांश्च पाठानचिन्तयतः परीक्षायाञ्च सन्निहितायां रा-त्रिन्दिवं परिशीलयन्तस्तेनच रोगिणःसम्पद्यमानाः, परीक्षायाञ्च परा-जयं प्राप्नुवन्तः पित्रार्जितं धनं वृथा व्यययन्तो नकिञ्चिदपि फलं प्रा-प्नुवन्ति । अतएव ह्यद्यतना बाला ईदृशचर्याविकलाः पण्डितमहाश-यानामिवाभ्यासपरिपाटीमलभमानाः स्वोपजीवनायाप्यप्रभविष्णवो भ-वन्ति । एतादृशीञ्च दुरवस्थां कतिपयानामपि निरासयितुकामैर्विबुध-गणमणिमुकुटै रसभरमेदुरेण पीयूषमप्यधरीकुर्वता स्वकविताप्रपञ्चेन विद्वज्जनानामन्येषाञ्चातितरामाह्लादं जनयद्भिः, नानाविरुदलाञ्छि-तैर्महामहिमशालिभिः केरलवर्मदेवैः प्रोत्साहितेन सकलधर्मवृलेनाव-र्धनाम्ना परमकारुणिक श्रीमूलकमहाराजेन सच्छात्रवृत्त्यधिष्ठापिताया-मस्यां पाठशालायामधीयाना वयं कृतज्ञतासूचकमपरं कर्तुमक्षमाः केवलमिदमाशास्महे—

श्रीमत्केरलवर्मदेवनिपुणप्रज्ञासमालोचित-
श्रेष्ठारम्भगृहीतधर्म्यधिषणस्सन्त्रायमाणो भुवम् ।

सुत्रामेवं दिवं बृहस्पतिमतिप्रक्रान्तधर्माकरः
श्रीमान् मूलकभूपतिर्विजयतामाचन्द्रतारं सुखी ॥

पद्मनाभशास्त्री ।
त्रिवेन्द्रम्, त्रिवङ्कूरम् ।

—:o:—

## आलवकसूत्तम् । *

### ( आडवकसूत्तम् ) †

मूलपालिभाषातः प्रत्यक्षरानुवादरूपम् ।

नमस्तस्मै भगवते अर्हते सम्यक् सम्बुद्धाय ।

एवं मया श्रुतम्ः—

एकस्मिन् समये (१) भगवान् आलव्याम् (२) विहरति आलवकस्य यक्षस्य भवने । अथ खलु आलवको यक्षो येन भगवान् तेनोपसंक्रान्तः उपसंक्रम्य भगवन्तमेतदवोचत्ः—

"निष्काम श्रमणेति" ।

"साधु बन्धो" (३), इति भगवान् निष्क्रान्तः ।

"प्रविश श्रमणेति" ।

---

* इदं सूत्रं "सुत्तनिपात"नाम्ना प्रसिद्धस्य ग्रन्थस्य 'उरगवर्गा'न्तर्गतम् । आलवको नाम कश्चिद् यक्षः प्रथमं बुद्धदेवमभीषयत्; ततो बुद्धदेवेन तस्य केषुचित् प्रश्नेषु प्रत्युक्तेषु स बौद्धधर्ममगृह्णात् । तदेवात्र वर्णितम् ।

† "आडवक" इति संस्कृतं सम्भवति ।

(१) मूले द्वितीयान्तः पाठोऽस्ति ।

(२) नगर्याम् ।

(३) पाला "आवुसो" इति वर्त्तते । अयं शब्दः आचार्यैः शिष्याम्, उपासकादिना च परस्परं सम्बोधयितुं प्रयुज्यते । तस्य च "सुहृद् बन्धो" इत्यादि रूपेण पालिभाषाविद्भिरनुवादः क्रियते । दुर्लभमस्य संस्कृतम् ।

"साधु, बन्धो" इति भगवान् प्राविक्षत् ।

द्वितीयमपि खलु आलवको यक्षो भगवन्तमेतदवोचत् :—

"निष्काम श्रमणेति" ।

"साधु बन्धो" इति भगवान् निष्क्रान्तः ।

"प्रविश श्रमणेति" ।

"साधु, बन्धो" इति भगवान् प्राविक्षत् ।

तृतीयमपि खलु आलवको यक्षो भगवन्तमेतदेवावोचत् :—

"निष्काम श्रमणेति" ।

"साधु, बन्धो" इति भगवान् निष्क्रान्तः ।

"प्रविश श्रमणेति"

"साधु, बन्धो," इति भगवान् प्राविक्षत् ।

चतुर्थमपि खल्वालवको यक्षो भगवन्तमेतदेवावोचत् :—

"निष्काम श्रमणेति" ।

"न खलु पुनरहं बन्धो निष्क्रमिष्यामि, यत्ते करणीयं तत्कुरु" ।

"प्रश्नं त्वां श्रमण, प्रक्ष्यामि, स चेन्मे न व्याकरिष्यसि, चित्तं वा ते क्षेप्स्यामि, हृदयं वा ते फालयिष्यामि (१) पादेषु वा गृहीत्वा पारं गङ्गायाः क्षेप्स्यामीति" ।

"न खल्वहं तं बन्धो, पश्यामि सदेवके लोके समारके (२) सब्रह्मके, सश्रमणब्राह्मणायां प्रजायां सदेवमनुष्यायां, यो मे चित्तं वा क्षिपेत्, हृदयं वा फालयेत्, पादेषु वा गृहीत्वा पारं गङ्गायाः क्षिपेत् । अपि च त्वं बन्धो पृच्छ यदाकाङ्क्षसीति" ।

---

(१) द्विधा करिष्यामि, कृन्तिष्यामीत्यर्थः ।

(२) बौद्धग्रन्थे मारो नाम कश्चिद् दुर्वृत्तो देवयोनिविशेषः; स खलु नियत मिन्द्रियसुखपरायणः, नराणां साधुकार्येषु विघ्नोत्पादकः, बौद्धशास्त्रप्रसिद्धानां षण्णां कामदेवलोकानां प्रथमोऽधिपतिश्च । विशेषः सन्दर्भान्तरेण प्रकाशयिष्यते ।

१

"किं स्विदिह वित्तं पुरुषस्य श्रेष्ठं,
किंस्वित् सुचरितं (१) सुखमावहति ।
किं स्विद् ह वै साधुतरं रसानां,
कथं जीवि-जीवित माहुः श्रेष्ठम् ॥

२

"श्रद्धेति वित्तं पुरुषस्य श्रेष्ठं,
धर्मः सुचरितः सुखमावहति ।
सत्यं ह वै साधुतरं रसानाम्,
प्रज्ञांजीविजीवितमाहुः श्रेष्ठम् ॥

३

कथं स्वित् तरति ओघं,
कथं तरति अर्णवम् (२) ।
कथं स्विद् दुःखमत्येति,
कथं स्वित् परिशुध्यति ॥

४

श्रद्धया तरति ओघम्,
अप्रमादेन अर्णवम् ।
वीर्येण दुःखमत्येति,
प्रज्ञया परिशुध्यति ॥

५

कथं स्विल्लभते प्रज्ञां, कथंस्विद् विन्दते धनम् ।
कथं स्वित् कीर्त्तिं प्राप्नोति, कथं मित्राणि ग्रथ्नाति (३) ।
अस्माल्लोकात् परं लोकं कथं प्रेत्य न शोचति ॥

---

(१) मूले पुंलिङ्गान्तः पाठोऽस्ति ।

(२) अत्राप्रस्तुतेन जलवेगवाचिना ओघशब्देन धर्मोपदेशालोचनप्रकर-
[?] संसारदुःखादि, अर्णवशब्देन च संसारो बोध्यत इति प्रतिभाति ।

(३) आत्मनेति भावः ।

६

श्रद्दधानोऽर्हतां धर्मं निर्वाणपत्त्या (१)।
शुश्रूषमाणो लभते प्रज्ञामप्रमत्तो विचक्षणः ॥
प्रतिरूपकारी धुरावान् व्युत्थितो विन्दते धनम्।
सत्येन कीर्त्तिं प्राप्नोति, ददन्मित्राणि ग्रथ्नाति।
अस्माल्लोकात् परं लोकमेवं प्रेत्य न शोचति।
यस्यैते चत्वारो धर्माः सश्रद्धस्य (२) गृहमेधिनः।
सत्यं धर्मो धृतिस्त्यागः स वै प्रेत्य न शोचति ॥
"इङ्घ" (३) अन्यान् पृच्छ पृथक् श्रमणब्राह्मणान्।
यदि सत्याद् धर्मात् त्यागात् क्षान्त्या भूयाऽथ विद्यते ॥

७

कथं न्विदानीं पृच्छेयं पृथक् श्रमणब्राह्मणान्।
सोऽहमद्य विजानामि सोऽर्थः साम्परायिकः (४) ॥
अर्थाय वत मे बुद्धो वासाय आलावीम् (५) आगतः।
सोऽहमद्य विजानामि यत्र दत्तं महाफलम्।
सोऽहं विचरिष्यामि ग्रामाद्ग्रामं पुरात्पुरम्।
नमस्यन् सम्बुद्धं धर्मस्य च सुधर्मं तम् ॥

इति आलवकसूत्रम्।

विधुशेखरशर्मा।

---

(१) निर्वाणप्राप्तिद्वारेण।

(२) "सद्धस्स" इति मूलेऽस्ति।

(३) अस्य शब्दस्य संस्कृतं नाधिगम्यते। अव्ययमिदम्, अनुनयार्थे च प्र'युज्यत इति तु निर्णीयते। 'इङ्घ त्वं महाराज कलसिगामं चिन्तेहि (Buddhist Nirvan. I. xlii.)'इङ्घ ते गणापेथ" (धम्मपदं २२३ श्लो॰) इत्यादौ तस्यैवार्थस्य प्रतिभासमानत्वात्।

(४) पारलौकिकः।

(५) तस्य यक्षस्य नगरीम्।

# आर्याणामादिमो निवासः ।

## ( पाश्चात्यानां मतिनिर्देशपूर्वकं श्रीमतो बालगङ्गाधर-तिलकस्य मतम् ) ।

अस्मदीयाः पूर्वपूरुषा भारतस्य नादिमनिवासिनः । ते खलु सहस्रवत्सरपूर्वं स्थानान्तराद् इहागत्य अत्रत्यानादिमान् निवा- ः पराभूय प्रथमं पञ्चनदविभागे वसतिं चक्रुः, क्रमेण च सह विस्तारेण भारतस्य नैकप्रदेशेषु समागताः । इमे आर्य-नाम्ना- भिहितवन्तः ।

भाषातत्त्वविदो विद्वांस 'आसियायां' संस्कृत-पारसीकयोः, े च ग्रीक-लाटिन-जर्म्माणादिषु भाषासु सम्बन्धवाचकानां, वाचकानां, सर्वनाम्नां, केषांञ्चित्प्रतिदिनव्यवहार्यवस्तूनां, बहूनां वाचकानां च पदानां सादृश्यमधिगच्छन्ति । वेदोपलब्ध- ानां नामधेयैः सह ग्रीक-रोमण-प्रभृतिजातीनां देवतानाम्ना- प्रभूतं सादृश्यमुपलभ्यते * । विभिन्नासु भाषासु शब्दानामित्थ-

---

* उपरिष्टात् किञ्चित्तत्प्रकारः प्रदर्श्यते । भूयांसः शब्दाः उपलभ्यन्ते; ाहरणेनैको विपुलो ग्रन्थ एव भवेत्—

| तन् | आवेस्तिकम् | पारसीकम् | ग्रीकम् | लाटिनम् | जार्म्माणम् |
|---|---|---|---|---|---|
| | — | मादर् | माटर् | माटर् | सुतेर |
| | पेतर् | पदर् | पाटर् | पाटर् | फातेर |
| | ब्रातर | ब्रादर | फ्राटिया | फ्राटर | ब्रुदेर |
| त् | दुघ्धर् | दोखतर् | थगाटर | — | टथ्तेर |
| म् | अजेम् | मा (बहुवचन) | | | |
| | तुम | तू | थू | टु | — |
| | दम् | दो | डओ | डुओ | — |
| | तिसरो | — | द्राइस | ट्रस | द्राइ |
| त | अमृह्मि | अस्तम्,हेस्तम् | एस्मि | सम | — |

मैकरूप्यमुपलभ्य साम्प्रतिकैः पण्डितैः सिद्धान्त्यते यद् इमा जात पूर्वमेकरूपाप्यवासन्, एकस्मिन्नेव च क्वापि स्थाने न्यवसन्; तत जनसंख्याधिक्याद् वा नैसर्गिकेण कारणविशेषेण वा तस्य स्थान निवासानर्हत्वसम्पादनाद्वा, अन्यस्मादेव कुतोऽपि कारणाद्वा, तत्स्था परित्यज्य अभितो विकीर्णा बभूवुः । साम्प्रतं दूरविच्छिन्ना अ विभिन्नदेशस्थिता अपि चैता 'आर्य' इत्येकेनैव नाम्नाभिधीयन्ते ।

अस्याः खलु प्राचीनाया आर्यजातेः प्रथमो निवासः कुत्रेति प्र विदुषां बहवो मतभेदा दृश्यन्ते । नाद्यापि केनचिदत्र सुस्थितः सि द्धान्तः प्रदर्शितः । प्रायोऽसम्भाव्यमेवास्य प्रश्नस्योत्तरमिति नाति शयोक्तिर्भवेत् । आरब्धे सन्दर्भेऽस्माभिरद्य तानि मतानि, तत्पोष काणि प्रमाणानिचोदाहरिष्यन्ते ।

तत्र तावत्प्रथमम् इदं मतमुत्थितम्ः—आसिया-मध्यभूभागे व मानयोः 'वेल्तार्ग'—'मुसतार्ग'-नामकयोः पर्वतयोः पश्चिमपार्श्व र्त्तिन्युन्नततरा भूमिरेव प्राचामार्याणामवस्थितिस्थानमिति । अ प्रमाणम्—(१) आसिया-वासिनो युरोपं गत्वा तत्र न्यवसन्निति स प्रसिद्धम् । (२) ग्रीका रोमकाश्च पूर्वोत्तरभूभागाद् यथाक्रमं ग्री इतालो च गताः इत्यैतिहासिकैरनुमीयते । किञ्चित्परवर्त्तिन्य काले आसिया-मध्यभागादेव बहिर्गत्वा हूणादयस्तत्तद्देशानधिकृ तत्र तत्रैव स्थिता इति, (३) भारतीयार्याणां पारसीकानां च प्राची ग्रन्थेषु उत्तरदिग्विभागादेव आर्याणामागमनस्य परिचय उपलभ्य तस्यामेव च दिशि तेषां देवनिवासस्य स्वर्गारोहणस्य च प्रशस्त पन्थाः । (४) 'बोखारा'-प्रदेशीया भाषा संस्कृत-परासीकसुसाद आर्यभाषा च ।

---

| | | | | | |
|---|---|---|---|---|---|
| असि | अह्वि | इस्ति, अस्ति | एस्सि, | आयस | एस |
| दौष्पित | | | तिउस | डिएसपिटर | |
| | | | पाटर | जुपिटर | |

अपरे तु केचिदुक्तैः प्रमाणैः आसियामध्यभाग एवार्याणामादिमा वासभूमिरिति निर्णीतवन्तः । इदमेव मतं कान्यपि दिनानि पण्डितैः समादृतमासीत् । परन्तु सन्ति केचन तद्विरुद्धवादिनः पुरातत्त्वविदः, येषां मते युरोप एवार्याणां प्रथमावस्थानमभूदिति दृश्यते । अत्र तैरिदं प्रमाणमुपन्यस्तम्—आर्यजातीनां भूयस्यो युरोप एव साम्प्रतं दृश्यन्ते, अतस्तदालोक्य स्वयमेव मनस्युदेति यदियं समग्रा जातिस्तत्रैवासीत्, शाखाविशेषस्तु कश्चित् कारणान्तरेण तत आसियामागत्य प्रसृतइति । पौराणिकोपाख्यानेतिवृत्तभाषालोचनेन समव्यव्यभिचारिणं सिद्धान्तमुपगन्तुं नास्ति कश्चिदुपायः । अनुमानमात्रं हि तत्खलु, यद् आसियामध्यभाग आर्याणां प्रथमो निवास आसीदिति । तत्संवादाय न किञ्चिदुपलभ्यते । आसियायामेव मानवानां प्रथममुत्पत्तिरिति बहुदिनात्प्रचलितः कश्चिज्जनानां संस्कारः, नैव तेषामासियामध्यांश एवार्याणां प्रथमावस्थितिं प्रतिष्ठापयितुमाग्रहः । इतस्तु युरोपे भूस्तरेषु बहूनि प्राचीनमानवानां वासचिह्नाप्याविष्कृतानि । अतो न स वादः साम्प्रतं युज्यते । संस्कृत-पारसीक-युरोपीय-भाषासु गार्हस्थ्य सम्बद्धानां केषाञ्चित्पशूनां प्राकृतिकवस्तूनां च वाचकानां शब्दानां सादृश्यमस्तीति प्रमाणेन यदा अद्यत्वे विभिन्नानामपि जातीनां मूलत ऐक्यं निर्णीयते, तदा, यदि नामेदृशं किञ्चिद् वस्तु स्याद्, यस्य नामधेयमुभयोर्भाषयोर्नैकरूपम्, अपितु पृथक् पृथक्, तर्हीदम् अनुमातुं शक्यते यत्तस्य परिचयः तद्भाषाभाषिणामन्योन्यं विच्छेदानन्तरं जात इति । सिंहव्याघ्रोष्ट्रहस्तिप्रभृतीनां नामानि उभयोर्भाषयोर्विभिन्नानि । यदि आसियायामेव आर्याणामादिमो निवासोऽभविष्यत्, तर्हि उभयोर्भाषयोस्तेषां नाम्नामनुगतं किञ्चित्सादृश्यं नूनमस्थास्यत् । आसियायां हि सिंहादयो दृश्यन्ते न तु युरोपे अन्यत्र । प्राचीनया वर्णनया वर्त्तमानेन च विचारेण आर्याः श्वेताङ्गा एव बभूवुरिति ज्ञायते । श्वेताङ्गार्यजातिस्तु

युरोपे दृश्यते, न पुनरासियायाम् । किञ्च युरोपीयजातीनां शारीरकप्रकृतेः, दीर्घजीवनस्य, दुर्धर्षत्वस्य च पर्यालोचनयापि विज्ञायेत कुत्र नामार्यजातेः प्राचीनतमं गभीरतमं च मूलमभूदिति । एतैरुच्यते ते हि आर्याः पुरा किल युरोपस्योत्तरांशेऽवस्थिताः, ते खलु वर्त्तमानायाः फिनजातेः ( फिनलैण्डस्थायाः ) प्रतिवेशिन आसन्, यतः यद्यपीयं जाति र्न आर्यश्रेण्यन्तर्गता, तथापि तद्भाषायां बहुतराणां संख्यावाचकानां, पारिवारिकसम्बन्धवाचकानां सर्वनाम्नां च शब्दानां सादृश्यमार्यभाषायामधिगम्यते । इदमेवात्र तत्कारणं वक्तव्यं यत्तयोर्जात्योः कच्चिदतिप्राचीनकाले मिथः सन्निकर्ष आसीदिति ।

अथ वयं तत्रभवतः पण्डितप्रकाण्डस्य श्रीमतो बालगङ्गाधरतिलकमहोदयस्य 'वेदे आर्याणामादिमो निवास' इत्येतद्विषयकं पुस्तकं किञ्चिदालोचयिष्यामः । अस्य मते उत्तरमेरुप्रदेश एवार्याणां प्रथमो वास आसीत् । वेदेभ्यः, 'आवेस्ता'-नामकात् पारसीकधर्मग्रन्थाच्चोद्धृतेन वचनेन प्रमाणितमनेन यद् अन्तस्तुषारकसमये ( inter-glacial period ) उत्तरमेरुप्रदेश एवार्या अवस्थिताः । अथ यदा नैसर्गिकेण कारणेन तुषारावृतत्वात् सा भूमिर्वासानर्हा संवृत्ता, तदा ते तां विहाय क्रमेण आसियायां युरोपे च प्रसृता इति । यया युक्त्या येन च प्रमाणेन तेनेदं मतं समर्थ्यते, तदुल्लिख्यते—

तेन प्रथमं मेरोः, तत्सन्निहितप्रदेशस्य च प्राकृतिकव्यवस्था प्रदर्शिता, ततो वेदवचनेन प्रमितं यत्सा खलु वैदिकर्षिगणानां विदितासीदिति । मेरुप्रदेशे दिवामानं रात्रिमानं च षण्मासात्मकम् । देवतानां दिवसरजन्योरप्ययमेव विभागः । न केवलं भारतीयानां, पारसीकानां वा अपितु युरोपीयाणामपि विश्वासो यद्देवानां षण्मासा दिनम्, षण्मासाश्च रात्रिरिति । ऋग्वेदे उषःशब्दः प्रायेण बहुवचनान्तो दृश्यते । तेन बहूनामुषसामेकत्राविर्भावो बुध्यते अन्यत्र च वेदे उषसः त्रिंशदित्युक्तम् । कच्चिच्चोषः प्रथमविकाशसूर्योदययोः दीर्घ

प्रवधानं वर्णितम्। कचिच्चोक्तम् उषाश्चक्रवदावर्त्तते। एतत्सर्वं मेरु-
प्रदेश एव सम्भवति, नत्वन्यत्र। ऋग्वेदे बहुकालव्यापिनो दिवसस्य,
दीर्घरात्रेः, पञ्चर्तुपरिमितस्य वत्सरस्य चोल्लेखोऽस्ति। तदानीं
किल वार्षिको यज्ञः नवभिर्दशभिर्वा मासैरपूर्यत, न तु साम्प्रतमिव
द्वादशभिः किञ्च तदानीन्तनः शतनिशासाध्यो यज्ञोऽपि सुदीर्घकाल-
व्यापिन्यां रजन्यामेव समपद्यत। दीर्घतमसः, अदितेः पुत्राणाम्, अप-
रापरेषां चोपाख्यानतः प्रमीयते यदयं सर्वो विषयो वैदिकऋषीणां
विदित आसीदिति वत्सरार्द्धकालव्यापी दिवसः, तादृशी रजनी,
तावन्तं कालं व्याप्यावर्त्तमानउषस्समयः ततश्चावर्त्तमानमिव नक्त-
न्दिनमित्येतत् सर्वं मेरु-तत्सन्निहितप्रदेशानामेव सूचकम्। वेदेषु
अपरापरेष्वार्यग्रन्थेषु चोपलभ्यमानं तेषां वर्णनमिदमेव प्रमाण-
यति यद्, यदा खलु आर्याणां तत्स्थानत्यागात्परं बहुकालानन्तरं वै-
दिकैऋषिभिस्तत्सर्वं वर्णितं तदा नूनं तदनुश्रुतजनश्रुतीनां तेषां
सुपरिचितमासीदिति। श्रीमता तिलकमहाशयेन पारसीकधर्मग्रन्थाद्
(आवेस्तानामकात्) अप्येतत्प्रमाणीकृतम्। विस्तरभिया नास्माभि-
स्तदुद्ध्रियते। एतेन स्वमतं समर्थयितुं वेदतः, आवेस्तातश्च हिन्दु-
पारसीकयोः पौराणिकोपाख्यानान्युद्धृत्योक्तं यत् तेषामिदमेवैकं
व्याख्यानम्—वैदिकयुगस्यापि बहु पूर्वं मेरु-तत्सन्निहितप्रदेशेषु तत्र-
भवन्त आर्या अवस्थिता आसन्निति। उक्तपूर्वमेवेदमस्माभि र्यद्
भाषातत्त्वेन भूस्तराविष्कृतप्राचीनमानववासचिह्नादिभिश्च प्रमाणैर्यु-
रोपीयाः पण्डिता युरोपोत्तरदेशेष्वार्याणामवस्थिति रासीदिति निर्ण-
यन्तीति। इदानीं दृश्यते श्रीमता तिलकमहाशयेन आर्याणां तद्वास-
स्थानं ततोऽपि किञ्चिदुपरि निर्दिष्टमिति।

साम्प्रतमिदमेव विचार्यम्-अद्यत्वे नियत-निविडतुषारावृतत्वान्
मेरुप्रदेशो मनुष्यवासानर्ह इति ज्ञायते। तत्कथं नु तत्र प्राचीना-
नां वासः सम्भवेदिति। भूतत्त्वविदां विदुषां मतमनुसरता श्री

मता तिलकमहाशयेनेत्थं स प्रश्नः समाधीयते :—शैशिरिकयुगस्य ( Glacial period ) पूर्वं यदा पृथिव्या अनेकमेव स्थानं समुद्रसलिलमग्नम् आसीत्, तदा मेरुप्रदेशस्य प्राकृतिकावस्था न वर्त्तमानेव बभूव सा खलु तदानीं नातिशीतोष्णत्वान्मानवनिवासोपयोग्येवावर्त्तत। अथ यदा शैशिरिकयुगे सावस्था परिवृत्ता, तुषारावरणं च सर्वतः सम्पन्नं, तदानीमार्यास्तं प्रदेशं परित्यज्य क्रमेणान्यत्र जग्मुः। आवेस्ता-ग्रन्थे तुषारप्राचुर्येणादिमवासभूमेः समुच्छेदोऽधिगम्यते। पण्डिताग्रगणनीयेन श्रीमता तिलकेन ज्योतिषशास्त्रप्रमाणोपन्यासेन वैदिकयुगीय नक्षत्रमण्डलानाम् अवस्थितिगणनया तत्कालं निर्णीयोक्तं यद् भूतत्त्वज्ञैः पण्डितैः शैशिरिकयुगस्य यः समयो निर्दिष्टः, तेनास्य वस्तुतो विरोधो न भवतीति ।

इत्थमुदाहृतैः प्रमाणप्रयोगैर्मेरुतत्सन्निहितप्रदेशेषु प्राचीनानामार्याणां वासस्थानं निरूप्यायं प्रश्न उत्थापितः श्रीमता तिलकेन यद् उत्तरमेरोः कस्यां दिशि आर्याणां वास आसीत्—किं युरोपस्य, आहोस्विद् आसियाया उत्तरस्यां दिशीति। इत्थं तेनात्र स्वयं प्रत्युक्तम् :—नात्र किञ्चिन्निश्चयेन वक्तुं शक्यम्, तथापि वेदे आवेस्ता-ग्रन्थे च यत् प्रमाणं लभ्यते, तेन आसियाया पश्चोत्तरस्यामार्याणां वासभूमिः सम्भवतीति मन्यामहे ।

उपसंहारावकाशेऽस्माकमिदं वक्तव्यं यत् तत्रभवतः तिलकस्येयं युक्तिः साम्प्रतं जगतः पण्डितमण्डलानां पुरतः स्थिता, समालोच्या च। त एवास्या उपादेयत्वमनुपादेयत्वं वा निरूपयिष्यन्ति । वयन्तु केवलं समासेनैनां प्रदर्शितवन्त इति ।

श्रीसुबोधचन्द्रमजुमदारः

ब्रह्मचर्याश्रमः, ( बोलपुर )

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

### संस्कृतपत्रिकाः, संस्कृतविद्वांसश्च ।

अत्रत्याया अस्मत्सहयोगिन्याः 'सूक्तिसुधायाः' प्रथमखण्ड-द्वादशसंख्यायां तदीयेन सम्पादकेन केषाञ्चित् संस्कृतविदुषामुपरि सकष्टमारोपितमभियोगमालोचयतां नो लज्जया, खेदेन, क्षोभेण च नितान्तं व्याकुलीभूतमन्तः करणम् । उक्तं तत्र—"केचित् पुनर्विलेख्यापि ग्राहकश्रेण्यां स्वयमेव स्वाभिधानं, स्वीकृत्यापि प्रतिमासमिमां, स्तोकतममप्यस्या मूल्यं मुहुः प्रार्थ्यमाना नोत्तरमपि वितरन्ति, दूरतस्तु मूल्यमिति" । एवमेव 'विज्ञानचिन्तामणि'-सम्पादकेनापि निवेदितं, यथा—यद्येते चिन्तामणयेऽस्मै दयनीयाय धारयन्तो "बहुवर्ष"मूल्यं बहुविधव्ययमात्रसाध्यमेतत्प्रचारणमारोपयन्ति संशयपदवीमिति कष्टात् कष्टतरमेवैतत् ।......इदं पुनरतीव चित्रतरं यत् केचन सुहृदो निस्त्रपा इव स्वात्तयावत्सञ्चिकानां मूल्यमनर्पयन्तः पुनरागच्छन्तीः सञ्चिकाः प्रत्याचक्षते, निवेदयन्ति चेतः परं न प्रेष्यतां चिन्तामणिरिति"—( पृ. १८, स. १. ) अन्यास्वपि संस्कृतपत्रिकास्वयमेव ध्वनिरन्तरान्तरा श्रूयते । न वयं निपुणमपि चिन्तयन्तोऽवबोद्धुं प्रभवामः—कथं नु स्वयं धर्मशास्त्रज्ञाः, धर्मोपदेशकपदाधिष्ठिताः सकलजनादर्शभूताः संस्कृतपण्डितमहाशया पन्थानमिममनुसरन्तीति । वृत्तान्तपत्रिकासु प्रकाशितेनैतेन निन्दावादेन कियद्दुःखं,-कियतीं वा लज्जामनुभवामो वयमिति नास्मल्लेखनी प्रकाशयितुं समर्था । आशास्महे नातिचिरमेव अभियोक्तॄणां तत्तत्पत्रिकासम्पादकानां नातः परं किमप्यभियोगकारणं स्यात्, नच श्रीमान् सूक्तिसुधासम्पादकोऽपि "विरंस्यामि निरर्थकात् प्रत्युत हानिकरादस्माद् व्यापारादिति" खेदेन ब्रुवन्नपि स्वपत्रिकाप्रचारणाद् विरंस्यतीति ।

———:o:———

## अपि भारतीया अनृतवादिनः ?

न तावद्दुःखं तदानीमन्वभवाम, यदानभिज्ञातलोकचारित्रस्य ऐतिहासिकम्मन्यस्य भारतविद्वेषिणो मिलमहोदयस्य उल्वणहालाहलपूर्णे इंलैण्डाधिकृत-भारतेतिवृत्ते * "Brahman is an ant's nest of lies and impostures" † इत्यादीनि सुदुर्विषहाणि प्रलपितानि नयनपदवीमध्यारूढानि, न वा तस्मिन्नपि समये तावद्दुःखमनुभूतं यदानीं सम्प्रत्यपि भारतसम्राट्प्रतिनिधिपदमधितिष्ठता अननुशीलितभारतीयजनचरित्रेणेव श्रीमता लर्डकर्ज्जनमहोदयेन ( येन हि "The Far East" नामकस्य स्वकीयग्रन्थस्य प्रथमे संस्करणे स्वयमात्मनो वञ्चनाव्यापार उपनिबद्धोऽपि द्वितीय संस्करणे ऽपाकृतः ) अनन्तरातीते कलिकाताविश्वविद्यालयोपाधिप्रदानोत्सवे ( Convocation ) भारतीयानां सत्यमर्यादानभिज्ञत्वमुद्घोषितम्, यावत्खलु परेद्युः मुम्बानगर्यां 'इन्दुप्रकाशा'भिधेये वृत्तान्तपत्रे साम्प्रतं फ्रान्सदेशप्रवासिना केनापि सहृदयपारसीकयुवकेन प्रकाशितस्य तदीयस्य लेखस्यालोकनेनोत्पन्नम् । अनभिज्ञास्ते भारतीयानां चरित्रस्येति क्षीवाणामिव मिल्प्रभृतीनामप्युक्तिः कथञ्चित् तूष्णीमेवास्माभिः सोढासीत् । तस्य तु पारसीकयुवकस्य पत्रमधीयानानां नः सहस्रधेव हृदयं व्यदीर्यत । अयं तत्पत्रिकायाः सारः—कृतभारतभ्रमणः कश्चित्फ्रान्सदेशीयो देशपर्यटकः फ्रान्सराजधान्यां पारिस-नगर्यां भारतविषये तद्व्याख्यानावसरे श्रीमतो रामकृष्णगोपालभाण्डारकरमहोदयस्य नामधेयमुदाहृत्य कथितवान् यद् भाण्डारकरमहोदयेन मिथोभाषणसमये तस्मा उक्तं-"भारतीया वयं नियतमनृतवादिन" इति—" We Indians always lie." अनुकूलभागधेयवैभवेनास्माकं तस्यां परिषदि स खल्वस्मदीयः पारसीकतरुणो दर्शकानामन्यतम आसीत् । कस्य नाम स्वजात्यवज्ञानवादो न मर्माणि निकृन्तेत् ? व्यथितचित्तोऽयं गृहमा-

---

* Mill's History of British India.

† भारतीयब्राह्मणा मिथ्याप्रतारणापूर्णा इति तद्भावार्थः ।

नात्य लेखेन तं व्याख्यातारमजिज्ञासत यस्स डा. भाण्डारकरस्योक्तिं यथारूपं व्याख्यातवान् न वेति। अध्यापकभाण्डारकरसदृशः कश्चि-त्पण्डितस्तादृशेन प्रकारेण स्वजातिमवमानयेदिति न विश्वसितुं शक्यते, तथा च तस्मिन् मिथः संवादे वक्तृश्रोत्रव्ययोर्नूनमेकस्य भ्रान्तिः स्यादिति तदभिप्राय आसीत्। पृष्टेन तेन व्याख्यात्रा सोऽयमस्मत्पारसीकतरुणः सादरमाहूयोक्तो यद् डा. भाण्डारकरेण तस्मै यदुक्तं तदेव तेन व्याख्यानावकाशेऽनूदितम्, न तत्र कापि भ्रान्तिरस्तीति। अथानेनेदं सर्वम् 'इन्दुप्रकाशे' प्रकाशितम्। भारतीयेषु ये नामेदानीं पाश्चात्त्यरीत्या संस्कृतादिप्राच्यविद्यालोचनेन सह पाश्चात्यैः प्राच्यविद्याविदाम् ( Orientalist ) आसनमध्यासते, विरलप्रचाराणां तेषामन्यतमोऽयं महाभागः डा. श्रीभाण्डारकरमहाशयः। चिन्तयितुमपीदं वयं न शक्नुमो यत्तेन स्वजात्यपकर्षकं वचनमिदमुक्तं स्यादिति। डा. भाण्डारकरेणैतत्सर्वं विज्ञाय मुम्बानगरीयपत्रिकाविषये यदुक्तं, तस्यायं सारः—"त्रिचतुरदिनपूर्वं केनापि बन्धुनाहं निवेदितो यदनतिचिरं केनापि फ्रान्साधिवासिना कृते व्याख्याने ममामोल्लिख्येदं कथितं यदहमवदम्—भारतीया निसर्गतोऽनृतमेव वदन्ति सत्यन्तु कदाचिदेव, युरोपीयास्तु स्वभावतः सत्यवादिनः कदाचिदेवानृतं कथयन्तीति। अत्रेदं—सुष्ठु खलु स्मरामि बहुवत्सरपूर्वं कोऽपि फ्रान्सीयसज्जनः ( Sir Raymond West ) इत्यस्य सकाशात् परिचयपत्रिकां ( Introduction ) गृहीत्वा मत्सकाशमागतः, इदं चात्यल्पं स्मराम्यपरोऽपि कश्चित्फ्रान्सीयो मन्मित्रस्य( M. Senart ) इत्यस्य परिचयपत्रिकया मामपश्यदिति। परन्तु स्वल्पतममात्रमपि स्मरणं नास्ति यदहमेतयोरेकस्मा अपि तदुक्तवानिति। न चाहमित्थं वक्तुमपि शक्नोमि। नहि मे विश्वास आसीत्, न वा सम्प्रत्यप्यस्ति, यद् भारतीया निसर्गतो ऽनृतमेव कथयन्ति कदाचित्तु सत्यम्, अन्यतस्तु युरोपीया स्तद्विपरीता इति"। अस्माकं पाठकैरत्र लक्ष्येत

यद् डा. भाण्डारकरस्योपरि यो दोष आरोपितः, नासौ तेन कृतः, सुस्पष्टमस्वीकृतः। तद्विषये न तेन किञ्चिदिदानीं समर्थत इति हि तेनोक्तम्। स्पष्टमस्वीकार एवेह तस्यास्माभिः शुश्रूषित आसीत्। यत्तु फ्रान्साधिवासिनस्तस्य महाभागस्यैतेनैव न्मुखबन्धनं भवेन्न तत्र संशयावकाश इति।

भारतीयाः सत्यमर्यादां जानन्ति न वा, ते हि अनृतवादिनो वा सूनृतवादिनो वेति "प्रतिदिनमियं वेत्ति वसुधा"। ननु भो नेदानीमप्युत्सन्ना वेदसूक्तयः, न सम्प्रत्यपि विलुप्तान्यार्षाणामेषामपराण्यपि शास्त्राणि, प्रतिगृहं प्रतिदिनं चाद्यापि जीयन्त एव पीयूषाकरभूतानि रामायण-महाभारतयोः सुभाषितानि साहित्यानि किं बहुना, न खलु न भारतीयाः साम्प्रतमुच्छ्वसन्ति। तत्प्रथममागम्यतां, विलोक्यतां विचार्यतां च अथोच्यतां भारतीया वस्तुत एवानृतवादिनो न वेति, न पुनरङ्ग अविचार्योक्तवतस्ते वचांसि कश्चित् परीक्षकः श्रद्दधीत।

जानीमो वयं सर्वो ह्यात्मानं कान्तं पश्यतीति। न तथापि नास्माकं सत्यैकप्राणत्वे प्रमाणपरम्परास्ति। न वय मस्माकं वेदादिग्रन्थेभ्यः प्रमाणमुपन्यस्य स्वपक्षं समर्थयितु मभिलषामः। नयनमुन्मील्यालोक्यतां भूवलयस्यापरापरजातिभिरपि भारतीयानां चारित्रं प्रशंसितं न वेति। विद्यमानायामप्यनवद्यायां दर्शनशक्तौ मास्म भवान् केवल मस्मद्विषयेऽन्धोभूत।

युवराजागमनम्—

फेब्रुअरीमासस्य १८ दिवसे नगरीषु प्राचीनतमायामस्यां वाराणस्यां श्रीमान् युवराजः पदं निधास्यतीति नगरीयं विविधैरुपचारैरलंक्रियते नागरिकैः। उचितमेवैतत्सर्वथा राजभक्तानाम्।

शोकस्थानम्—

पूर्ववङ्गैकभूषणं महामहोपाध्यायः पण्डितो रामनाथसिद्धान्तपञ्चाननमहाशयो ज्वराक्रान्तः परलोकमुपागमदिति विदीर्णमिव नो हृदयेन। आश्वस्यतां तत्परिजनैरिति प्रार्थयामहे भगवन्त मुमाधवम्।

# मित्रगोष्ठी-पत्रिका ।

## ( मासिकं संस्कृतपत्रम् । )

" सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् " ।

ऋग्वेदः ।

द्वितीये वर्षे } १८२७ शकाब्दाः, माघः । { दशमसंख्या


## मीमांसासिद्धान्तसंग्रहः ।

### प्रथमाध्यायः ।

सृष्टिस्थित्यन्तकर्त्तारमवाङ्मनसगोचरम् ।
यस्मान्न परमं किञ्चित् पुरुषन्तमुपास्महे ॥
कृपालेशं विना यस्याः पुरुषः केवलं पशुः ।
सुदुर्बोधार्थबोधाय तां नमामि सरस्वतीम् ॥
पित्रो र्गुरूंश्च मङ्घ्रींश्च प्रणमामि मुहुर्मुहुः ।
यत्प्रसादेन मन्दस्य मम बोधलवोदयः ॥
मीमांसासूत्रसन्दर्भप्रणेतारं महामुनिम् ।
जैमिनिं मनसा वाचा कायेन च नमाम्यहम् ।
शबरस्वामिनं भाष्यकारमाराध्य सादरम् ।
क्रियते तन्मतेनायं मया सिद्धान्तसंग्रहः ॥

अथातो धर्मजिज्ञासा कर्त्तव्याप्लुवनं ततः ।
चोदनालक्षणोऽर्थो धर्मो ऽध्यक्षं न तत्र सा ॥
विद्यमानोपलम्भत्वात् तन्मूलाश्चानुमादयः ।
सत्संप्रयोगे पुरुषस्याक्षाणां बुद्धिजन्मयत् ॥
तद्धि प्रत्यक्षमाख्यातं भविष्यन्नास्य गोचरः ।
औत्पत्तिकस्तु संवन्धः शब्दस्यार्थेन युज्यते ॥
उपदेशो हि भवति ज्ञानं तस्या विपर्य्ययः ।
प्रमाणमनपेक्षत्वाद्धर्मे शब्दस्ततो मतः ॥

न संबन्धयिता कश्चित् शब्दस्यार्थेन पूरुषः ।
मानाभावादस्मृतेश्च तथाप्यर्थावबोधतः ॥

दर्शनस्य परार्थत्वादास्थेया शब्दनित्यता ।
सर्वत्र यौगपद्याच्च संख्याभावाच्च गम्यते ॥

सर्वे प्रत्यभिजानन्ति स एवायमिति स्फुटम् ।
कारणं ज्ञायते नास्य यद्विनाशाद्विनश्यति ॥

न वायुहेतुकः शब्दः पटे तन्तुरिवेष्यते ।
न शब्दे वाय्ववयवः स्याच्चेत्तत् स्पर्शनं भवेत् ॥

किञ्च शब्दस्य नित्यत्वं ज्ञायते लिङ्गदर्शनात् ।
प्रयत्नो व्यञ्जकस्तस्य नोत्पादक इतिस्थितिः ॥

दर्शनन्तु समं तत्र सतः परमदर्शनम् ।
अभिव्यञ्जकसंयोगविभागानागमाद्भवेत् ॥

अतएव चानुवातं सदूरा दुपलभ्यते ।
आदित्यवद् यौगपद्यं वर्णोऽन्यो नतु विक्रिया ॥

शब्दो न वर्द्धते किन्तु नाद एव विवर्द्धते ।
तद्भूतानां क्रियार्थेन समाम्नायो हि लक्ष्यते ॥

अर्थस्य तन्निमित्तत्वात्, लोके सन्नियमात् पुनः ।
प्रयोगसन्निकर्षः स्यात्, पुरुषाणा मलौकिके ॥

वाक्यानि चोपसंहर्त्तुं सामर्थ्यं नास्त्यतीन्द्रिये ।
पूर्वं शब्दः परा सृष्टि स्ततोऽसौ शब्दपूर्विका ॥
आख्याप्रवचनात् क्वापि श्रुतिसामान्यमात्रता ।
परस्परेण सम्बद्धं समाम्नानं हि दृश्यते ॥
भविष्यति कथ ह्येतद्बालोन्मत्तप्रलापवत् ॥

इति मीमांसासिद्धान्तसंग्रहे प्रथमाध्यायस्य प्रथमः पादः ।

———:o:———

विधिवाक्यं क्रियार्थत्वादर्थवत् तत्स्तुवार्थतः ।
तेनैकवाक्यता हेतो रर्थवादोऽर्थवान् भवेत् ॥

साम्प्रदायिकता तुल्या न सर्वत्र विरोधिता ।
प्रयोगे हि विरोधः स्यान् गुणवादस्तु कुत्रचित् ॥

रूपात् स्तेनं मनो वाक् च प्रायादनृतवादिनी ।
गौणोक्ति दूरभूयस्त्वात् स्व्यपराधात् सपुत्रता ॥

अज्ञानवचनं गौणं तथैवानवक्लृप्तगीः ।
विद्याप्रशंसा शोभोक्तिः सर्वत्वञ्चाधिकारिकम् ॥

कर्मणः फलनिष्पत्तेः कर्मणां परिमाणतः ।
लोकवत् तत्फले तावद् विशेषः परिकल्प्यते ॥

अभागिप्रतिषेधाद्वै भवेन्नित्यानुवादता (१) ।
विधिवन्निगदानान्तु वाक्यशेषत्व मिष्यते ॥

क्वचिद्विधे निरर्थत्वा दुत्कर्षस्याप्यकल्पनात् ।
विधौच वाक्यभेदः स्यात् (२) हेतुवन्निगदास्तथा ॥

स्तुत्यर्थाः शब्दपूर्वत्वात् नच दर्व्यादि चोदना ।
वर्त्तमानापदेशश्च स्तुतावेवोपपद्यते ॥

निकृष्टमन्त्रंकरणमपेक्ष्य स्तूयते ह्ययम् ।
लोकवद् परशब्दोऽयं परत्राह्न प्रयुज्यते ॥

विधौ परो न शब्दार्थो नासौ हेतुर्विधिस्ततः ।
हेतौ च व्यवतिष्ठेत निर्देशस्यार्थवत्ततः ॥

अव्यवस्था विधीनां स्यात् सामान्यस्य व्यपाश्रये (३) ।
विशिष्यते न खल्वर्थः पदानां लोकवेदयोः ॥

लोकवत् भवितुं युक्तः स वेदेऽपि विवक्षितः।
प्रकाशयन्ति तन्मन्त्राः यज्ञं यज्ञाङ्गमेव च॥

मन्त्रैरर्थप्रकाशस्तु नियमाद्दृष्टकल्पना।
पुनः श्रुतिर्गुणार्थेन चतुःसंख्यान्वितोग्रहः॥

इत्यश्वरशनामेवं संबन्धो रशनाग्रहे।
प्रथमं स्तोतुमन्येन प्राप्तो मन्त्रो ऽनूद्यते॥

पदानां नियमोऽप्यर्थविवक्षायां न दुष्यति।
जातेऽपि कार्यताज्ञाने काले स्मृत्या प्रयोजनम्॥

अभिधानेऽर्थवादः स्याद् गुणात् स्यादविरुद्धता।
उच्चारयत्यवहन्ति मन्त्रं मानवकस्तु यत्॥

अवहन्तौ पूर्णिकायाः सोऽक्षराभ्यास इष्यते।
दुष्प्रहत्वात्तदभ्यासः सुकरं हि प्रकाशनम्॥

न तत्र यज्ञसंयोगो न तदर्थं प्रकाशनम्।
ततः परमविज्ञानं लिङ्गञ्चाप्युपदिश्यते॥

ऊहश्च विधिशब्दाश्च मानमर्थविवक्षणे (४)।

इतिमीमांसासिद्धान्तसंग्रहे प्रथमाध्यायस्य द्वितीयः पादः।

——:o:——

स्मृतयः कर्तृसामान्यात् प्रमाणमनुमानतः (१) ।
विरोधे त्वनपेक्षाः स्युः (२) दृष्टमूलास्तथैव च ॥

पदार्थाः प्रबलास्तेषां क्रमो दुर्बल इष्यते ।
गुणत्वादुत्तरे काले क्रमः प्राप्नोति नान्यथा ॥

कालोऽपि च प्रयोगाङ्गं पदार्थस्योपकारकः ।
शौचादयः सर्वशेषा नैव ते व्यवधायकाः (४) ॥

पदार्थाः शास्त्रसिद्धास्तु ग्राह्याः (५) तदविरोधतः ।
लोकप्रसिद्धा अपि ते ग्रहणीया भवन्त्यपि ॥

स्वतः प्रमाणं नो कल्पाः स्वराभावान्न वेदता ।
वाक्यशेषो नचास्त्यस्मिन्नादरो नान्तरीयकः ॥

क्वचित् शास्त्रविरुद्धश्च वचस्तत्रावगम्यते (७) ।
होलाकादिः सर्वधर्मो विधेस्तन्न्यायतो यतः ॥

न चैषां नियतं लिङ्गं आख्यादेशस्य योगतः ।
स्याद् योगाख्या माथुरवत् देशस्याप्यव्यवस्थितिः ॥

शिष्टाकल्पव्यवस्था तु दर्शनादेव जायते (८) ।
साधुशब्दाः प्रयोक्तव्या अपराधादसाधवः ॥

एकोह्यनादिः सदृशा मपभ्रंशा स्ततः परे ।
अभियुक्तोपदेशाच्च साधुत्वं शक्यनिश्चयम् ॥

अशक्त्यापभ्रंशयुक्तिः सादृश्यादर्थधीस्ततः ।
गवादिशब्दस्मरणं भवेद् गाव्यादिदर्शनात् ॥

उपलब्धे ह्येकदेशे समुदायस्मृति र्भवेत् (१) ।
य एव लौकिकाः शब्दा ये चार्था वैदिकाश्च ते ॥

अविभागाद् भवत्येवं प्रयोगस्य हि चोदना।
स्तुत्यर्थेनार्थवादः स्याद्वत्तानबहुलादिकम्॥

नच प्रसिद्धि रेतेषां वाक्यभेदोऽन्यथा भवेत् (१०)।
क्रियार्थत्वादाकृतिस्तु शब्दस्यार्थोऽन्यथा भवेत्॥

न केनचित्प्रकारेण क्रिया श्येन चिदादिषु।
व्रीहीनित्येवमादौ तु सैवस्याद् व्यक्तिलक्षणा॥

व्यक्तेः शब्दार्थता मा हि न स्याद् व्यक्त्यन्तरे मतिः।
सर्वथा त्वाकृति स्तावत् शब्दादेव प्रतीयते॥
व्यर्था व्यक्तौ शब्दशक्ति स्तया संबध्यते हि सा (११)।

इति मीमांसासिद्धान्तसंग्रहे प्रथमाध्यायस्य तृतीयः पादः।

———:o:———

उद्भिदादिकशब्दानां कर्मणो नामधेयता ।
करणत्वेन निर्देशात् समानाधिकरण्यतः ॥
श्रुत्या तस्योपपत्तौ न न्याय्या न त्वर्थलक्षणा ।
शब्दसामर्थ्यलक्ष्यत्वा दनुवादा हि ते मताः ॥
गुणफलोपबन्धेन त्वर्थवन्तो भवन्ति ते (१) ।
तथा चित्रादिशब्दाश्च शक्यभेदोऽन्यथा भवेत् (२) ॥
अग्निहोत्राघारपदं नामधेयञ्च कर्मणः ।
तत् प्रख्येनास्य शास्त्रेण प्रजापतिनिषेधनम् ॥
न शक्य मग्निविधितः स निपिद्धुं यतोऽक्षमाः ।
प्रजापते निषेधे च तद्विधानं मनर्थकम् ॥
आघारो देवताद्रव्यसंयोगाद् यजतिर्मतः (३) ।
श्येनादिपदमप्येवं तैर्मतो व्यपदिश्यते ॥
यजतिर्जातिशब्दानां सादृश्याद् यागवाचिता (४) ।
वाजपेयपदञ्चैवं भवेत्तुल्यं क्रियाद्वयम् ॥
दर्शनं दीक्षोपसदा मेवमेवोपपद्यते ।
पक्षान्तरे ऽभिधानं हि स्वार्थवच्च परार्थवत् ॥
यजेतेत्यस्य शब्दस्य यतो विप्रतिपिध्यते (५) ।
आग्नेयादौ गुणविधि रविभक्ता यतो गुणाः ॥
कर्मणो हि विधानार्थे तद्धितान्ते पदे मताः ।
अष्टाकपालः सिद्धोऽस्ति तस्यात्राग्नेयताविधिः ॥
संबन्धस्य विधाने हि भवेत् संबन्धिनो विधिः (६) ।
बर्हिरादिजातिवाचः शब्दलाभादसंस्कृते (७) ॥
प्रोक्षण्यादि पदानि स्यु र्यौगिकान्यर्थयोगतः (८) ।
तथा निर्मन्थशब्दोऽपि जातिसंस्कारतो नतु (९) ॥

वैश्वदेवो नामधेयं प्रत्यक्षश्रुतिचोदिताः ।
अग्न्यादयो देवता हि वाक्येनान्या विधित्सिता ॥

तयो विकल्पो ह्यन्याय्य स्तत्रामिक्षा च तादृशी ।
ततो यागगणो लक्ष्यो नैवं गुणविधित्सिता ॥

परार्थश्च गुणो यागं नावर्त्तयितुमर्हति (१०) ।
वैश्वानरेष्टवष्टत्वादीनां स्या दर्थवादता ॥

विधौ संख्यां विदध्यहिं पुरोडाशकपालगाम् ।
नतु यागप्रयोगस्य विधातुं शक्नुवन्ति ते ॥

प्राप्ता यागस्य वाक्येन यद् द्वादशकपालता ।
प्रयोगेऽनर्थका स्तेस्यु स्ततो लक्षणया स्तुतिः ॥

स्याद् द्वादशकपालस्य न विभक्ता हि तत्र ते ।
दृश्यतेऽवयवस्तुल्या समुदायस्य च स्तुतिः ॥

कामाय विधयश्चेत् स्यु र्वाक्यभेदस्तदा भवेत् ।
संबध्यन्ते हेतुतया पूतत्वादाविमे स्फुटम् (११) ॥

प्रस्तरादिकसंस्तुत्यै यजमानपदादिकम् ।
प्रोच्यते गुणवादेन तस्य कार्यकरो ह्यसौ (१२) ॥

आग्नेयादिक शब्दानां गुणवादात् स्तवार्थता (१३) ।
आदित्यो यूप इत्यादौ सारूप्यादर्थवादता (१४) ॥

अपश्वादिकशब्दैस्तु गवादीनां प्रशंसनम् (१५) ।
सृष्ट्यसृष्ट्योः सृष्टिशब्दो भूम्ना स्तुत्यर्थमुच्यते (१६) ॥

समवायाच्च लिङ्गस्य तथा प्राणभृदादयः ।
अनुवादाः (१७) वाक्यशेषात् सन्दिग्धार्थविनिर्णयः (१८)

सामर्थ्यादवदानादौ स्रुवादीनां व्यवस्थितिः (१९) ॥

इति मीमांसासिद्धान्तसंग्रहे प्रथमोऽध्यायः ।

# स्मार्त्तचूड़ामणि-रघुनन्दनभट्टाचार्यः ।

"हरि र्यथैकः पुरुषोत्तमः स्मृतः,
महेश्वर स्त्र्यम्बक एव नापरः"

तथा स्मार्त्त इत्युक्ते रघुमेव महात्मा इदानीं वङ्गदेशे निर्दिष्टो भवति । देशेऽस्मिन् सर्वैरेव ब्राह्मणपण्डितै स्तस्य ग्रन्थाः पठ्यन्ते, स्वीक्रियते च तन्मतं सबहुमानं प्रमाणत्वेन । परमसौ महाभागः कस्मिन् स्थाने प्रादुरभूत्, कुतो वा शास्त्राण्यधीतवान्, इत्यादयो विषया स्तद्ग्रन्थाध्यायिनोऽप्यनेके न जानन्ति । अतोऽद्य तद्विषयमधिकृत्य किञ्चित्पाठकेभ्य उपह्रियते ।

पञ्चदशशततमाब्दात् पूर्वं * मिथिलैव संस्कृतशिक्षायाः प्रधानं स्थानमासीत् । तदानीं न्यायशास्त्राध्यापना तत्रैव भवतिस्म । न तदा नवद्वीपाः पण्डितभूयिष्ठत्वेन प्रख्यातो ऽभवत् । येन महापुरुषेण प्रथमं नवद्वीपे चतुष्पाठी † स्थापिता, यस्य चाध्यवसायेन नवद्वीपस्य महिमा उत्तरोत्तरं प्रवृद्धः, प्रख्यातनामा स पण्डिताग्रणीः रघुनन्दनभट्टाचार्यस्योपाध्यायो वासुदेवसार्वभौमः ( १४८०—१४९० अब्देषु ) मिथिलायां गत्वा जयधरोपाध्यायापराभिधानात् स्वनामप्रसिद्धात् महामहोपाध्याय-पक्षधरमिश्रात् न्यायशास्त्रमधीत्य नवद्वीपान्त-विद्यानगरग्रामे चतुष्पाठीं स्थापयामास, स्वयञ्चाध्यापकपद मप्रतिष्ठौ । बहवो विद्यार्थिन स्तस्यासन् । तेषु प्रसिद्धाः पञ्च—१। रघुनाथशिरोमणिः, २। हरिदाससार्वभौमः, ३। रघुनन्दनभट्टाचार्यः, ४। श्रीचैतन्यदेवः, ५। श्रीपादगोस्वामी च ।

१४८५ तमाब्दे श्रीचैतन्यदेवः प्रादुरासीत् । रघुनन्दनभट्टाचार्यश्च प्रभवतः सतीर्थ्यः । तेनास्यापि जन्मकालः स एवेति निश्चीयते ‡ ।

* अब्दोऽत्र स्त्रीष्टीयः ॥

† चतुष्पाठी शब्देन वङ्गेषु पण्डितानां स्वस्वगृहाभ्यन्तरस्थम् शास्त्राध्यापनमन्दिर मुच्यते ।

‡ रघुनन्दनः श्रीचैतन्यदेवात् परवर्त्तीति राजेन्द्रलाल मित्रः ।

रघुनन्दनः कस्मिन् स्थाने जन्म लेभे इत्यद्यापि न ज्ञायते। परम् अध्ययनकालतः परं नवद्वीपावस्थितिं स्तस्य सर्वैरेव स्वीक्रियते। जनकोऽस्य हरिहरवन्द्योपाध्यायः स्थानान्तरादागत्य नवद्वीपे वसतिं चकारेति च केचित् कथयन्ति।

रघुनन्दनस्याविर्भावात् प्राक् देशेऽस्मिन् वाचस्पतिमिश्र-जीमूतवाहन-शूलपाणि-भवदेवभट्टप्रभृतीनां मतानुसारेण कर्माणि सम्पाद्यमानान्यासन्। असौ तु महात्मा स्वप्रणीते अष्टाविंशतितत्त्वे पूर्वेषां मतानि निराकृत्य नैयायिकयुक्तिबलेन स्वमतं स्थापितवान्।

इदानीं उपनयनादिसंस्कारव्यतिरिक्तं सर्वमेव कर्मजातं तन्मतेनैव वङ्गीयै रनुष्ठीयते। उपनयनादिसंस्कारे तन्मतानादरकारणत्वेन किम्वदन्तीयं श्रूयते—प्रचारितेऽपि सर्वत्र तदीये मते कोऽपि प्रतिवेशी ब्राह्मणः नूतनतया तन्मतमनादृत्य पूर्वेषां पद्धत्यैव स्वपुत्रमुपनीतवान्। तद् दृष्ट्वा कुपितो रघुनन्दनः 'कुमारः स पुनः संस्कार्य' इति तर्कबलेन स्थापयामास। ब्राह्मणोऽपि अधनासहायतया भृशंक्लेश मनुबभूव। तदवलोक्य रघुनन्दनस्यौद्धत्यमसहमाना तज्जननी तमाहूय प्रोवाच— "तव पिता प्राचीनमतेनैव त्वामुपनीतवान्, त्वञ्च कथयसि पूर्वमतोपनीतः पुनः संस्कार्य इति, अतः संस्कार स्तवैवादौ विधेयः। स्वयमसिद्धः कथमन्यं साधयतु?" श्रुत्वैतत् जातचैतन्यो रघुनन्दन उपनयनादिसंस्कारे स्वमतस्थापनं शिथिलीचकारेति।

स्मार्त्तचूड़ामणि रसौ न केवलं स्मृतौ, तर्के वा अभिज्ञ आसीत्, अपितु मीमांसा-वेदान्त-पुराण-ज्योतिषप्रभृतीनाञ्च शास्त्राणां पारमगमत्। शारीरकादिशास्त्रमतं तेन स्वग्रन्थे उद्धृतम्। बहुशास्त्रदर्शित्वञ्च तस्य तद्ग्रन्थटीकाकृता काशीरामवाचस्पतिनाऽपि कथितम्—"मीमांसादिनानाशास्त्रपारदृश्वा श्रीरघुनन्दनभट्टाचार्यः प्राचीनविचक्षणगणनानाविधव्याख्याजनितसन्देहस्य स्मृतिशास्त्रस्य मुन्यन्तरवचनयुक्तिभ्यां तत्त्वं निर्णीय इदानीन्तनक्षुद्रबोधाय निबन्धांश्चका-

र्येति"। तदीये ग्रन्थे काल-माधवीय-भुजबलभीम-हरिभक्ति पितृद-
यितादीनां प्राक्तनस्मृतिनिबन्धानां नामानि दृश्यन्ते।

रघुनन्दनप्रणीतेषु अष्टाविंशतितत्त्वेषु मलमासतत्त्वमेवादौ लिखि
तम्। तस्मिन्नेव तत्त्वे लिखिष्यमानानां तत्त्वानां नामान्युक्तानि—

"मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये।
प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमीव्रते।
दुर्गोत्सवे व्यवहृता वेकादश्यादिनिर्णये।
तड़ागभवनोत्सर्गे वृषोत्सर्गे व्रये व्रते।
प्रतिष्ठायां परीक्षायां ज्योतिषे वास्तुयज्ञके।
दीक्षाया माह्निके कृत्ये क्षेत्रे श्रीपुरुषोत्तमे।
सामश्राद्धे यजुःश्राद्धे शूद्रकृत्यविचारणे।
इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः॥"

तदतिरिक्तानि संकल्पचन्द्रिका-रासयात्रापद्धति-त्रिपुष्करशान्ति-
त्त्व-द्वादशयात्राप्रमाणतत्त्वानि तत्कृतित्वेन प्रसिद्धानि। समयप्र-
दीपस्तु तत्पित्रा हरिहरेणैव निबद्ध इत्यनुमीयते कैश्चित्।

गोस्वामिसम्प्रदायिनो वैष्णवा रघुनन्दनस्य एकादश्यादिव्रतव्यव-
स्थां न समीचीनां मन्यन्ते। ते हि श्रीमद् गोपालभट्ट-श्रीमत् सना-
तनगोस्वामिपादमीमांसानुसारेण एकादश्यादिव्रतानि कुर्वन्ति।
शाक्ताश्च प्रायेण सर्वे स्मार्त्तमतानुयायिनः। तेषां कोऽपि "गोस्वा-
मिमतं शाक्तमतम्" इति कथयन्ति। ते खलु जानन्ति शाक्त एव
रघुनन्दनः, अतस्तन्मतमेवास्माकं ग्राह्य मिति। एष भावः केवलं
शास्त्रहीनेषु न पुन र्ज्ञानिषु दृश्यते। शाक्तवद् वैष्णवा अपि केऽप्य
ज्ञानिनः स्मार्त्तमतं शाक्तमतं वदन्ति। वस्तुतस्तु रघुनन्दनो वैष्णव
आसीत्। तत्प्रणीतानां सर्वेषामेव तत्त्वानां प्रारम्भे तेन विष्णुदैव-
तानमस्कारः कृतः। तदेव हि तस्य "स्वेष्टदेवतानमस्काररूपं
मङ्गलाचरणम्"।



रघुनन्दनस्मृतिटीकाकृतौ द्वावेव प्रसिद्धौ, काशीरामवाचस्पतिः राधामोहनगोस्वामीच । काशीरामस्य जन्मकालः, वासस्थानं वा नास्माभिर्ज्ञायते । तत् कृतटीकातः केवल मेष एव तस्य परिचयो ज्ञायते—

"यं प्रासूत समस्तशास्त्रनिपुणश्रीरामकृष्णात्मजः।
श्रीराधेश्वरवल्लभाख्य सुकृती सङ्गीतचूडामणिः॥
तेन श्रीयुतकाशिरामकृतिना यत्नेन निष्पादिता।
टीका नापि सुश्व खलापि कृतिभिः सानुग्रहै दृश्यताम्"॥

अपरश्च टीकाकृत् राधामोहनगोस्वामी श्रीमद् अद्वैताचार्यप्रभुपाद वंशे शान्तिपुरे अजायत। शान्तिपुरस्थ एवासौ नवद्वीपराजान कृष्णचन्द्र-शिवचन्द्रेश्वरचन्द्राणाम् (१७१०—१७८२) सभापण्डि तत्व मकार्षीत्। अद्याप्यस्य वंशः शान्तिपुरे विद्यते। "एतद् गृ गोस्वामिभट्टाचार्यवाटीति" नाम्ना प्रसिद्धम्। श्रीकृष्णतत्त्वामृत श्रीकृष्णभक्तिरसोदय-भागवत-तत्त्वसार-तत्त्वसंग्रहाश्च ग्रन्था अनेनैव गोस्वामिना ग्रथिताः। तत्त्वशास्त्रसंग्राहकः कृष्णानन्दश्च रघुनन्द नसमसामयिकः। असावपि नवद्वीपे एव स्थितिं लेभे। केऽप्यमु रघुनन्दनस्य भ्रातृत्वेन निर्दिशन्ति।

कृष्णकेशवगोस्वामी।

———:o:———

## यत् किञ्चित्प्रासकालम्।

न वयं तदिदं भ्रान्तं मतं पुष्णीमो यद् यत्खल्वस्माकमस्ति, नि विशेषेण सर्वमेव तदुत्तमं, यत्त्वन्येषां तदधममिति। सन्ति हि का निचिद्, यानि नामास्माकमेव असिथतप्रतिस्पर्द्धीनि, सन्ति चापरा ण्यपि कानिचिद्, यानि खल्वपरेषामेवोत्तमानि। इत्थं स्थिते, उत्सा रितमात्सर्यैरार्यमतिभिः सर्वमालोच्य मरालैरिव क्षीरं पानीयादुपा देयोऽंश एव निखिलेभ्यः संग्रहणीयः। नहि कश्चित्तण्डुलार्थी तुषान

मांसार्थी वा मत्स्यस्य शल्ककण्टकादीन्युपाददान: समीहितसिद्धिम-धिगच्छति ।

दृश्यन्ते, साम्प्रतमभित: सञ्चरन्त: केचित्परप्रत्ययनेया: पुरुषापसदा:, ये हि प्रायेण लोकायतिकपक्षनिक्षिप्तचित्तवृत्तय: प्राचीनेष्वपि निरन्तरार्च्चनीयेषु तत्रभवत्सु ब्राह्मणेषु कटाक्षविक्षेप मारचयन्त: प्रतिदिनानुष्ठेयानि सन्ध्यावन्दनकर्माणि निरर्थकान्येवेति परित्यजन्तीति । नायममीषामाचारस्तथातितीव्रतरं दु:खाकरोत्यस्मान्, यथा हन्त तत्पदवीमनुगच्छन्त: कोमलमतय: केचित्तारुण्यसुलभस्वभावचपला विद्यार्थिन: ।

सत्यं, न वयं सन्ध्यावन्दने प्रत्यक्षरं वाचोयुक्तिं प्रदर्शयितुं प्रभवाम इति । तथापि नेदं सोढुं शक्नुमो न वा तस्य केनापि बुद्धिमत्प्रकाण्डेनोत्प्रेक्षितं कारणमपि किञ्चित् पश्याम:, यत्सन्ध्यावन्दनं सर्वथा निरर्थकमेवेति ।

न वयमद्य श्रुतिस्मृतीतिहासपुराणादिभ्य: पर:सहस्राणि वचनान्युदाहृत्य सन्ध्योपासनस्योपादेयत्वं प्रतिपिपादयिषाम: । कथं नु तदश्रद्दधानान् प्रति तस्यैवोक्ति: प्रामाण्यकोटिमवगाहेत ? अतो लौकिकीमेव युक्तिमनुसराम:, कथयामश्च सविनयम्—स्वयमेव श्रीमन्तो विचारयन्तु, पश्यन्तु चास्ति तत्र किञ्चिल्लभ्यं न वेति । न हि अविविच्यैव स्वमतिचापलाद् यत् किञ्चित्कुर्वाण: प्रशस्यते शोभते वा ।

अस्मच्छास्त्रेषु, अथवा अस्मद्देशेषु चारित्रमेवैकं सर्वगुणाधिकम् । पशुरेव हि सोऽधन्य:, यो हि विनाकृतश्चारित्ररत्नेन । चारित्रमेव हि नरस्य नरत्वं रक्षति । अत एव विष्णुशर्मणा बालेभ्य उक्तम्:—

"सर्वस्यैव परीक्ष्यन्ते स्वभावा नेतरे गुणा: ।

अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्त्तते" ॥ इति ॥

अतएवास्माकं महाभारतादौ, बौद्धानां 'विसुद्धिमग्गो' प्रभृतौ, जैनानां च 'उवासगदसाओ'-प्रमुखे ग्रन्थे शीलवर्णनं तत्तत्प्रकारेण कृतम् ।

पापाचरणेन हि शीलं कलुषीक्रियते । पापाचरणं च कर्मणा, मनसा वाचाचेति त्रेधा करोति मर्त्यः। यावच्चेदं पापानुष्ठानं सर्वथा नापाक्रियते क नु खलु तावत् शीलवैमल्यमधिगम्यताम् । तच्च तदैव दूरीकर्त्तुं शक्यते, यदा जनो जानीयाद् यन्मयेद मित्थम् पातकमुपार्ज्यत इति । एतज्ज्ञानमपि अन्तरान्तरा कृतकर्मानुचिन्तनं विना न सम्भवति । कृतकर्मालोचनमपि च युक्त एव काले क्रियमाणं यथाभिलषितं फलं प्रसूते । तत्तत्काले विहितमस्माकं सन्ध्यावन्दनमपि तदर्थमेवेति सकृदपि तावदालोच्यतामिदं निर्मत्सरेणान्तरात्मना ।

चञ्चलानि हीन्द्रियाणि; असंयतेभ्य इव वाजिभ्यः सुलभस्तेभ्यो विनिपातः । संयतेभ्यः सुपथप्रस्थापितेभ्यस्तु तेभ्यो, विनीतेभ्य इव वाजिभ्यः त्वरित मेवाधिगन्तव्यम् अधिगम्यते । यथा सादिवरो दिवसे कमप्यश्वं विनीय समयान्तरे तस्य गुणदोषं पर्यालोच्य परस्मिन्नहन्यपि तस्य तुरङ्गमस्य स एव दोषो यथा नोत्पद्यते, तथा प्रयतमानः स्वमनोरथं प्रपूरयति; मनुष्योऽपि तद्वद् रात्रिकृतानि कर्माणि दिवसारम्भे, दिवसकृतानि च कर्माणि रात्रिमुखे एवालोच्य तेषु तेषु कर्मसु इच्छयानिच्छया वानुष्ठितान् दोषानवहितेन चेतसा संस्मृत्य तेषामपुनरनुष्ठानाय हृदयं दृढयेत्, कृतानां च तेषां परिक्षयार्थं भगवन्तं सर्वेश्वरं प्रार्थयेत, स एव ह्येकोऽस्मान् सर्वेभ्यः पाप्मभ्यो मोचयितुमीशानः । वासरारम्भे ब्राह्मे मुहूर्त्ते हृदयमनाविलमक्षोभं प्रसन्नतरं च तिष्ठति; जीवननगरस्यान्यतमं पन्थान मवतरीतुमुपस्थितस्तदानी मवसरः । अवधीयतां भो यथा नेहापि पूर्वमिव विनिपातपरिपाकाः सुलभप्रचारास्ते ते दोषा अनुष्ठीयन्ते, स्मर्यतां मूढ, स्मर्यतां किं त्वया कृतं किं वा साम्प्रतं कर्त्तुमुद्युज्यत इत्येवायं, बन्धवः, सन्ध्यावन्दनविनियुक्तो वैदिकमन्त्रो बोधयतिः—

"सूर्यश्च मा मन्युश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद् रात्र्या पापमकार्षम् मनसा, वाचा, हस्ताभ्यां, पद्भ्याम्, उदरेण शिश्ना (शिश्ना) रात्रिस्तदवलुम्पतु । यत किञ्च दुरितं मयि इदमहमात-

योनौ सूर्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा"। तैत्तिरीयारण्यकम्. प्र ६, अनु २५.

'उपक्रान्तस्य दिवसस्याधिपतिः सूर्यः, अन्तःकरणम्, प्राणादयः चक्षुरादयश्च तत्तत्सङ्कल्पकृतेभ्यः, तत् कारणेभ्यो वा दुरितेभ्योऽस्मान् रक्षन्तु—यथाहं नातःपरं पापं कर्म करोमि, तथा कुर्वन्तु। किञ्च अतीतायां निशायां यत्खलु पापमहं प्रतिषिद्धचिन्तनादिभिर्मनसा, यच्च प्रतिषिद्धोच्चारणादिभिर्वाचा, यच्च हिंसादिभिर्हस्ताभ्यां यच्च प्रतिषिद्धाक्रमणादिभिः पद्भ्याम्, यच्चाभोज्यभोजनादिभिरुदरेण, यच्च वागम्यागमनादिभिः शिश्नेन कृतवान्, रात्रिर्मे तत्सर्वं पापं नाशयतु। तद्भिन्नमपि अश्रोतव्यश्रवणादिभिर्मयि यद्दुरितमस्ति, तदिदमहम् अमृतकारणे, सत्ये ज्योतिषि दिवसाधिपतौ सूर्ये निक्षिपामि, स खलु सर्वं तद्दहत्वित्यर्थः।

यथा चेदमतिक्रान्तरात्र्यनुष्ठितदुरितानां वासरमुखे पर्यालोचया तस्मिन्नहनि तेषामपुनरनुष्ठानाय क्रियते, रजनीमुखेऽपि तथैव दिनकर्मजातानां दोषादोषपरीक्षणार्थं करणीयमिति स एव मन्त्रः दोषकालोचितत्वेन किञ्चित् परिवर्त्य पठ्यते। एवं च उषसि पूर्वनिशाकृतपापालोचनया आगच्छद्दिवसे पापाननुष्ठानार्थं दृढीकृतस्य हृदयस्य पुनः प्रदोषे दिनकृतकर्मचिन्तनेन सम्यक् परीक्षा सम्पद्यते। असकृदेव परीक्षितं हृदयं कालेन सर्वथा पापाद् विरमति। तेन च शीलं सुविमलं भवति। ततश्च यथार्थं मनुष्यत्वं विवेकत्वं विज्ञत्वमुपजायते *।

अयं च मध्यन्दिने सन्ध्याकर्मणि विनियुक्तो मन्त्रः—

"यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा"॥

तैत्तिरीयारण्यकम्. प्र. ६. अनु २३.

* "मनुष्याः कस्मात् मत्वा कर्माणि सीव्यन्तीति" यास्कोक्तेः (नि० ३. ७.) विमृश्यकारी विवेचक एव मनुष्य इति लभ्यते।

सुगमोऽस्यार्थः । इदन्त्वत्र लक्षणीयम्—संसारयात्रानुवर्त्तनस्य दिवसभाग एव श्रेष्ठः समयः । तदानीमेव वित्तमुपार्ज्यते । तत्र लोभप्राबल्यादसद्भ्योऽप्युपादीयत इति तदिदं प्रतिषिध्यते—'असतां च प्रतिग्रहमिति' । संसारयात्रार्थं दिवसे बहूनि दुष्कर्माण्यनुष्ठीयन्त इति मध्यन्दिनेऽपि सकृत्तदनुपादेयत्वं स्मार्यते 'दुश्चरितमिति ।

न केवलममी द्वित्रा एव मन्त्राः सन्ध्योपासनस्येदं चित्रं प्रकटयति । अपरेऽप्यमुमेवार्थं स्पष्टयन्ति । सर्वथा चरित्रनैर्मल्यसाधनार्थमेव यदसन्ध्योपासनस्य विधिरिति स्फुटमेव तत्तेभ्योऽवगम्येत । स्वल्पावयवेयं पत्रिकेति द्वित्रानेवान्यानपि मन्त्रान् प्रदर्शयामः । परीक्ष्यतां श्रीमद्भिः—

"इदमापः प्रवहत यत् किंच दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्" ॥

ऋग्वेदसंहिता १म. २३सू. २२ऋ, एवं १०म. ९सू. ८सू.

'हे आपः, मयि यत्किञ्चित् अज्ञानकृतं दुरितमस्ति, अथवा यदहं सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि, अथवा यदहं कमपि शप्तवानस्मि, यदहमनृतमुक्तवानस्मि, तदिदमपराधजातं मत्सकाशा दपनयत,—सर्वथा तेभ्यः पापेभ्यो मामुद्धरत ।

अयं चान्यः श्रूयताम्:—

"क्रत्वः समह दीनता प्रतीपं जगमा शुचे ।
मृळा सुक्षत्र मृळय" ॥

ऋग्वेदसंहिता. ७म. ८९सू ३ऋ.

'हे सधन, स्वभावतो निर्मल वरुण, दीनतया—अशक्ततया खल्वहं ( न त्वपरेण कारणेन ) कर्त्तव्यत्वेन विहितस्य कर्मणः प्रतीपं—प्रतिकूलं गतवानस्मि,—अनुष्ठेयं कर्म नाहमनुष्ठातुम् अशक्तवम् । अतः हे शोभनधन वरुण मां सुखय ।

अपरश्चः—

यत् किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥

ऋग्वेदसंहिता, ७म, ८९सू, ५ऋ.

'हे वरुण देवसमूहरूपे जने मनुष्या वयं यत् किञ्चनापकारजातम् आचरामः, अपि च यदज्ञानेन हेतुना तव कर्म वयं नानुष्ठितवन्तः, तस्मात् पापाद्धेतोरस्मान् मा हिंसीः' ।

कियन्मामास्माभिरुदाह्रियताम् । श्रीमन्तः पाठकमहाशयाः, स्वयमेव भवद्भिर्विविक्ते देशे सुस्थिरेण चित्तेन सकृदपि तावच्चिन्त्यताम्, ततश्चोच्यताम्, अस्ति किञ्चित्सन्ध्यावन्दनस्य सार्थक्यं न वेति । यदीदमपि निरर्थकमेव मन्येत, तर्हि न जानीमः क इव चित्तविशोधनोपायो भवतामभिमतः स्यादिति । न केवलं वैदिकमन्त्राणामुच्चारणमात्रेणैव कृतं यत्कर्त्तव्यमिति । अर्थः खलु तेषामनुसन्धातव्यः, तदनुकूलं च कर्मणोत्पथप्रस्थितश्चित्तमत्तमतङ्गजः सन्मार्गमवतारयितव्यः । इत्थं यदि कश्चित्प्रतिदिनं सन्ध्यावन्दनं नियमेनानुतिष्ठेत्, तर्हि न जातु तद्वदनविवरादाकर्ण्येत यत्तन्निष्फलमेवेति दृढीयानस्माकं विश्वासः ।

विधुशेखरशर्मा ।

———:o:———

## संस्कृतशिक्षा* ।

आसीत् किल कश्चित्कालः, यदा समाजनियमनभारो ब्राह्मणपण्डितेषु न्यस्तोऽभवत् । तदानीं खलु अपरापरवर्णाः अपरापरकृत्यान्येवाचिन्तयन् । ब्राह्मणास्तु सर्वं समयम् आलोचयन्तः शास्त्राणि, अध्यापयन्तः शिष्यान्, चिन्तयन्तः प्राप्तकालं, व्यवस्थापयन्तश्च तदनुकूलानेव धर्मान्, जनानां लौकिकं पारत्रिकं च श्रेयः सम्पाद-

* मित्रगोष्ठ्याश्चतुर्थे वार्षिकोत्सवे विधुशेखरभट्टाचार्येण पठितोऽयं प्रबन्धः ।

यितुं सन्ततमेव बद्धप्रयत्ना आसन् । यथा हि दुर्दान्तोऽपि हयो निपुणेन यन्त्रा सन्मार्गमानीयते, ब्राह्मणपण्डितैरपि तथैव तेषु समयेषु तत्तदुपायेन उत्पथप्रस्थितोऽपि समाजः सम्यङ् न्ययस्यत । सर्वं एव तदानीं बद्धाञ्जलयः शिरसा तेषां निदेशमङ्गीचक्रुः । तद्धि तेषामादेशप्रतिपालनं न तथा भयाद्, यथा भक्तिसम्भाराद्भवत् ।

अद्यत्वेऽपि न खलु न सन्ति तान्येव, तेभ्योऽपि चारुतमानि च शास्त्राणि, न खलु नालोक्यन्ते तेषामेव सुगृहीतनामधेयानां साक्षात्कृतधर्माणां समाजकुशलचिन्तनतत्पराणां महापुरुषाणां वंशकरीराः । परन्त्वमी न तथा शास्त्राण्यालोचयन्ति, न तथा शिष्यानध्यापयन्ति न तथा देशकालाद्यनुरूपान् धर्मान् व्यवस्थापयन्ति, न वा तथा समाजस्य मङ्गलं चिकीर्षन्तोऽपि न किञ्चिद् वस्तुतः कुर्वन्ति । अत एवायमधःपतितसमाजो दिनाद्दिनमधस्तरां गच्छन् विश्वतोमुखममङ्गलं चोत्पादयन् निशितक्रकचधाराप्रवच्छिन्तयतां चेतःसु सुदुःसहां खेदपरम्परामुत्पादयति ।

यत्र क्वापि गम्यताम्, दृश्येत प्रायेण हि जना धर्मानुरागहीनाः, ईश्वरचिन्तनपराङ्मुखा श्च भूता, भवन्ति च । तिर्यञ्च इव केवलं स्वस्वोदरपूरणमात्रेणैव चरितार्थम्मन्यास्ते मोहमयीं प्रमोदमदिरां परिपिबन्तः कालान् नयन्ति । न त्वन्यत् किञ्चित् करणीयं तेषां विलोक्यत इति । येषां हृदयं नेश्वरोपासनरसिकं न वा धर्मानुरागसरसं, व्यर्थमेव तेषां जीवितम् । न लेशतोऽप्यस्ति पशुभ्योऽमीषां भेदः । परन्त्वसमद्भन्यतया साम्प्रतं क्रमेणैतेषामेव सरभसप्रचारः परिवर्धते । न जानीमः सोऽयं सर्वङ्कशो महोपप्लवः कियता कालेनोपशाम्येदिति । यावच्चेयमवस्था न विलीयते तावदुच्चैस्तरां शास्त्राध्ययनध्वनिना सहस्रकृत्वो मुखरीक्रियमाणेऽपि दिगन्तराले कुतो नाम यथार्थस्याभ्युदयस्य, पुष्कलस्य च शान्तिसुखसम्भारस्यावकाशः समधिगम्यताम् ।

हृदयं नाम स्वभावचपलम्, प्रायेणेदमुत्पथपथिकमेव भवति। परन्तु नहि नास्यापि दमनोपायो विद्यते, आविर्भावयितुं वा शक्यते। सत्यप्येवं न खलु सर्वं एव इत्थं समर्था भवन्ति। सर्वेष्वेव कालेषु केचिदेव तादृशा महापुरुषास्तिष्ठन्ति, ये हि यथोचितं प्रयस्य समुचितेनोपायेन स्वयमग्रपदवी मधिकुर्वाणा अन्येषामपि हृदयमावर्जयितुं प्रभवन्ति, तेन चैकैकक्रमेण भूयसां मङ्गलं विदधाना समाजस्य प्रभूतमुपकुर्वन्ति। परन्त्वहो को नामेदानीम् अग्रे सरन् तां पदवीं प्रदर्शयेत्। पुरा किल विचक्षणवर्याणां ब्राह्मणपण्डितानामेवेदं कर्त्तव्य मासीत्। अद्यत्वे तु ते तन्नामगौरवं धारयन्तोऽपि न तत्कृत्यमनुष्ठातुमिच्छन्तीत्येव परं दुःखमावहति।

वैदेशिकसंसर्गो हि साम्प्रतं कञ्चित्प्रतिबन्धमारचयतीति सत्यमेवैतत्। परन्तु न तावन्मात्रेणास्माकम् अपराधकलङ्कक्षयः सम्भवति। भवेदेतदेवं, यदि दृश्येत सर्वथा हि जनाः स्वधर्मं परित्यज्य धर्मान्तरं परिग्रहीतुमभिलष्यन्तीति। न त्वेतदस्ति। सर्वैरेव हि स्वकीयधर्मतत्त्वं द्रढीयसानुरागेणाकर्णयितुं काम्यते। न तु वयं तान् श्रावयितुं प्रभवामः। अतएव अनन्यगतिकास्ते वैदेशिकमुखेभ्योऽस्मद्धर्मं श्रोतुं प्रद्रवन्ति। वयन्तु पश्यन्तोऽप्यपश्यन्त इवेदं सुखासिकया वृथा वाग्जालविरचनैः कालानतिवाहयामः, अन्तरान्तरा च गृहकोणेषु विराजन्तः 'ज्ञानलवदुर्विदग्धास्ते दुरात्मानो हन्त सनातनं धर्मं सर्वथा विध्वंसयन्तीत्यादिभिः आश्रमबहिर्गतैर्दुर्वादशतकैरात्मनो धर्माभिमानं प्रकाशयामः।

यदि कश्चिदुपेत्यास्माननुयुञ्जीत—श्रीमन्, अस्मद्धर्मसाहित्यादिविषयकेभ्यो ग्रन्थेभ्यः किमिति शिक्षितजनाः प्रायेण पाश्चात्यैर्विहितविधीयमानेभ्य एवा ऽधिकतरं स्पृहयन्ति, अस्मदुक्तं च दूरतः परित्यज्यास्मदीयशास्त्रेष्वेव वैदेशिकानामेव मतान्यनुरुध्यन्त इति। तर्हि न जानीमः किमत्र प्रतिवचनं प्रतिपत्तव्यमिति। अथवा साम्प्रतमस्माकं शास्त्रव्याख्यानपाटवं तिरोहितमित्येतद्विना किमपरं वक्तुं शक्यते।

आघ्रातसंस्कृतग्रन्थस्यापि पण्डिताभिमानिनः कण्ठकुहरान्मांसलोऽयं निनादो गगनमध्यमवगाहते—'पाश्चात्यहतकैः कुव्याख्यानशतप्रणयेन शास्त्रमेवेदमस्माकं व्यक्रियत, विक्रियते चेति। परन्तु दुर्लभः—अथवा अतिदुर्लभ एवैतादृशो विद्वद्धौरेयः, यो हि पाश्चात्यानामसदुक्ति युक्तिपरम्पराभिर्निरवशेषं निरस्य अधन्यस्य भारतस्य क्लेशतोऽप्युपकुर्यात्। अथवा कस्तावदियन्तं श्रममङ्गीकरोतु। सुख-पर्यङ्किकाधिशयन मेव हि तावद्वरम्।

संस्कृतग्रन्थस्य त्रिचतुराणि पृष्ठान्यालोक्यैव कैश्चिद् अस्मदीयैर्विद्यार्थिभिः मोक्षमूलरादयः पाश्चात्याः संस्कृतविद्वांसः 'न किञ्चित्ते संस्कृतशास्त्रस्य विजानन्तीति' प्रौढदर्पसंसूचकैर्निःसारैर्वचनप्रपञ्चैः गर्ह्यन्ते। परन्तु दुःखाकरं यत्ते भ्रमेऽपि न तेषां पुस्तकानामेकामपि पंक्ति पठित्वा, न केवलं तानेव, अपित्वस्मानप्यनुग्रहीतुं कदाचिदप्यभिलष्यन्तीति। साम्प्रतमस्मद्देशे मोक्षमूलरादिसदृशः कश्चित्संस्कृतपण्डितोऽस्ति न वेति संशयास्पदमेवेति निर्व्याजं वक्तव्यम्। सूक्ष्मरीत्या पदपदार्थयोजने, व्याख्यानादि करणे वा सर्वथा प्रतिहतप्रतिपक्षा एव भारतीयाः पण्डिताइति को नाम न स्वीकुर्यात्। परन्तु यया रीत्या पाश्चात्यपण्डिता ग्रन्थाननुशीलयन्ति, तेभ्यश्च सारान् आकर्षन्ति, तत्सर्वं विरलप्रचारमेव भारतीयेषु संस्कृतपण्डितष्विति दृश्यते। भिन्नैव हि काचिदध्ययनाध्यापनबोधनशैली पाश्चात्यानाम्, यया खलु ते निरवशेषं सारमुपादाय ग्रन्थान् 'निष्पीडितालक्तकवत्' त्यजन्ति। साहित्ये वा दर्शने वा अन्यत्र वा अस्मदीयान्येव शास्त्राण्यालोक्य पाश्चात्यैर्मणीषिभिर्यद्रत्नत्रमाविष्कृतानि आविष्क्रियन्ते च तत्सर्वं कस्य नामानन्दं नोत्पादयति। सत्यमेवैतद् यत्तेषां ग्रन्थेष्वभ्यन्तरा स्खलितानां नाविरलः प्रचार इति। तथापि तत्र तत्रास्माकं यदनेकानि शिक्षितव्यानि सन्तीति नापलपितुं शक्यम्। म्याक्डलेनमोक्षमूलर-वेबरादिभिः पण्डितैः संस्कृतसाहित्यादिविषये पुस्तकानि विरचितानि, अपि नाम भारतीयभाषाणामेकत्राप्येकमपि तादृशं

पुस्तकं विद्यते? हन्त भो यानि खलु ग्रन्थनिकुरम्बकाण्यालोचयन्तः पाश्चात्यपण्डिता भारतीयानाम्, अथवा समग्राया मानवजातेरेव विचित्राद्भुतवृत्तान्तपरिपूर्णम् इतिवृत्तं प्रकाशयन्ति, वयं तु तान् न पठितुमिच्छामः, पठित्वापि वा न विचारयामः, विचार्यापि वा न किञ्चित्प्रकाशयामः।

अस्माकं धर्मसमाजाचारेतिवृत्तादिजिज्ञासायां साम्प्रतं पाश्चात्त्या एव नः शरणम्। तेषामेव ग्रन्थं पठित्वाद्यास्माभिस्तत्सर्वं विज्ञेयम्। अस्मद्देशे यैः खल्वीदृशं पुस्तकं विरचनीयम्, न तेऽद्यापि प्रबुध्यन्ते। शास्त्रार्थनाम्ना प्रसिद्धे वाग्युद्धेऽवतीर्य श्रोतॄणां श्रवोरन्ध्रभेदनमेव पुरुषार्थ इति हि तेषां बुद्धिरिति धिगस्माकं दग्धभागधेयम्! अथान्य एव परिश्रम्य तादृक् किञ्चित् पुस्तकं प्रकाशयेत्, न खलु सकृदपि तदालोचनायावकाशं प्राप्नुमः। कर्णाकर्णिकया तु यत् किञ्चिद् अधिगम्य, अनधिगम्यैव वा केवलं वैदेशिककर्तृकत्वश्रवणमात्रेण हेयं तदिति निर्लज्जमप्रमाणं मतं प्रकाशयितुं न विरमाम इत्येतादृशमेवास्माकं पाण्डित्यम्।

ब्राह्मणा वयं, पण्डिता वयम् इत्यस्माकमभिमानः। परन्तु सहस्रकृत्वोऽप्यन्विष्टेऽस्माकं ज्ञानभाण्डागारे लेशतोऽपि वेदज्ञानं न लभ्येत। हा भगवन् वेद, सर्वथा त्वमनाथोऽसि। पाश्चात्त्याः खलु त्वामाद्रियन्ते; यैः सार्द्धमभिनवस्ते सम्बन्धः कल्पित, आविष्कृतो वा, न तु वयम्, येषां त्वं नित्यमाराध्योऽसि। ब्रह्मयज्ञे मन्त्रचतुष्टयोच्चारणेन समग्रस्यापि ते पठनस्य फलं [illegible]। न जानीमोऽत्र ब्रह्मयज्ञविधानस्य किन्तु प्रयोजनं मन्त्रचतुष्टय[illegible] समाम्नातिति, अथवा तेऽपि नाम कियन्तः स्युः, ये हि प्रतिदिनं यथानियमं ब्रह्मयज्ञमनुतिष्ठन्ति, सर्वं शास्त्रं विहाय त्वमेव भगवन् वेद, पठनीयोऽसीत्यनुदिनं परःसहस्राणि वचनान्यालोकयामः, परांश्चोपदिशामः, परन्तु तादृश्येव काचिदस्माकं प्रकृतिः, यया त्वं दूरं परित्यज्यसे। अन्विष्यताम्, साम्प्रतं प्रायः सामान्येन सर्वेषामेव शिक्षितानां गृहे

खीष्टीयधर्मपुस्तकं ( Bible ) परिहस्येत, न तु वेदः। अथवा अलं वेदनाम्ना, वैदिकानां साहित्यानामपि साम्प्रतमस्मद्गेहेषु प्रचारो निषिद्धप्रायः। इदानीमीदृशा एव संस्कृतपण्डिता भूयिष्ठाः। अथवा किमत्राश्चर्यं, पटीयसी हीयम् अस्माकं रसना 'अहो कलिकाल' इति कालमहिमानमुद्घोषयितुम्।

न विस्मो भारतेन प्राक् कियत्पुण्यमुपार्जितमासीत्, यद्बलेन पाश्चात्यैः प्राच्यविद्याविद्भिः ( Orientalist ) सहास्य संस्तवः संवृत्तः। येन वेदग्रन्थः साम्प्रतमपि किञ्चिदुच्छ्वसन् स्वीकृतेषदायासेन पृष्ठेण लब्धुं शक्यते। अन्यथा चिरात्रायैव सुविषमान्धतमसाच्छन्नोऽयं काप्यन्तर्हितोऽभविष्यत्। किमुच्यते, मन्त्रब्राह्मणारण्यकसूत्रादीनां भूयांस्येव महता श्रमेण पाश्चात्यैरेव पण्डितैः प्रथमं प्रकाशितानि, ततः परञ्च कालेन प्राच्यैरपि।

इत्थमपि तथास्मद्दौर्भाग्यं यत्प्रायेण वैदिकसाहित्यमालोचयितुं जनानां प्रवृत्तिरेव नोत्पद्यते। न च तदर्थं प्रयत्नं विदधानोऽपि कश्चिन्महापुरुषो वीक्ष्यते। क्वचित् क्वचिद् वेदाभ्यासार्थं पाठशालास्ति। स्वरमात्रं तु तत्र शिक्ष्यते। उपदिश्यमानश्चार्थो न सरसतयोपदिश्यते। अतएव हि विद्यार्थिनः स्वरसंयोगेन कानिचित्सूक्तान्यधिकृत्यैव ततो विरमन्तो न पुनर्वेदतत्त्वमनुशीलयितुं प्रवर्त्तन्ते, न हि पश्यन्नपि मणिम् अमणिवित् तत्तत्वम् अवबुध्य तस्मिन् रमते। स हि काच इति तं दूरतश्चरणेन ताडयति। भूयः अलमस्मिन् विषयेऽस्माभिरुक्तम्, उच्यते च न ज्ञायते पुनरपि कियन्ति दिनानि यावद् वक्ष्यते वा। यावच्च वैदिकसाहित्यं पण्डितैर्नालोच्यते, तावत् सम्पूर्णैव तेषां शिक्षा पाण्डित्यं च यथार्थं तेषां नोपजायते।

नेदं स्वल्पं खेदमावहति यद्यदि कश्चित्पृच्छेत् को वेदः? के मन्त्राः? किं ब्राह्मणम्? किमारण्यकम्? कोपनिषद्? किं कल्पसूत्रं? किं श्रौतसूत्रम्? किं गृह्यसूत्रम्? किं धर्मसूत्रम्? किं वा प्रातिशाख्यम्? कियन्ति वा तानि? किं किं वा तेषु तेषु वर्णितम्? कोऽ-

भूतपूर्वानीं धर्म आसीत् ? इदानीमनुष्ठीयमानानां धर्माणां कीदृशं मूलम् ? कदा कदा कथं च सामाजिकावस्थासीत् ? कथं नु तत्तद्धर्मं-मूलम्, दर्शनमूलं च प्राचीनेषु ग्रन्थेषूपनिबद्धम् ? कथं कदा चैषां परिवृत्तिरारभ्यत ? कथं वा भाषातत्त्वमित्यादीति, तर्हि मन्यामहे, बहूनामेव विद्यार्थिनां वदनं तूष्णीं तिष्ठेदिति । न चेदृशः कश्चिदिदानीं ग्रन्थोऽपि दृश्यते, यत्पाठेन तत्सर्वं विज्ञायेत । 'आर्यविद्या-सुधाकर' इत्यस्ति किमपि पुस्तकम्, परन्तु न तेन सम्यक् समीहितं सिध्यति । बहु खलु वक्तव्यं तत्र नोक्तम् । न च तस्य भाषापि तथा सरला । न चाभिनवानि मतानि तत्र समालोचितानि, एकदेशदर्शनन्तु तस्मात् सम्भवत्येव । पाठ्यमेवेदं पुस्तकं संस्कृतविद्यार्थिभिरित्यभिप्रेमः । परन्तु साम्प्रतं तादृक् कोऽपि ग्रन्थोऽपेक्षितः-यत्र समासेनावेदाद् आचार्वाचीनात्साहित्यात् सर्वस्य प्रसिद्धग्रन्थस्यावश्यज्ञेया निखिला वृत्तान्ता उपनिबध्येरन् । न चैतावानेव तद् ग्रन्थोपकारः । कस्मिन् शास्त्रे किं कथमस्तीति सामान्यतो विज्ञाय किञ्चिदधिगतरसास्तद्विशेषज्ञानायापि हि शिक्षार्थी प्रवर्त्स्यन्ते ।

( शिष्टमग्रे )

---

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

### वाराणस्यां हिन्दुविश्वविद्यालयः ।

नेदमविदितपूर्वमस्मत्पाठकैर्यत् प्रयागधर्माधिकरणे सुप्रथितन्यायवादी स्वदेशहितचिकीर्षुः पण्डितश्रीमदनमोहनमालवीयः कानिचिद्वर्षाणि वाराणस्यां भागीरथ्यास्तटे कमपि संस्कृतविश्वविद्यालयं प्रतिष्ठापयितुं यथोचितं प्रयतते, तदर्थं चातीते वत्सरे श्रीमतः काशीनरेशस्य मुद्राशालायां सुप्रतिष्ठितैर्बहुभिः पण्डितैरुपशोभिता सभाप्येका समपद्यत,—यत्र सभापतेरासनं श्रीमद्भिः काशीमहीपालैः कृपया समलमक्रियतेति । सोऽयं सङ्कल्पितपूर्वः संस्कृतविश्वविद्या-

लय' एव साम्प्रतं 'हिन्दूविश्वविद्यालय' इत्यभिधेन जनानां पुरत आविर्भवितुं गच्छतीति सप्रमोदं वयमद्य प्रकाशयामः ।

* * * * * * *

अतिक्रान्त-राष्ट्रीयमहासभायां सम्मेलनार्थमागतैः कुशलमतिभिर्महाभागैस्तदानीं "हिन्दुविश्वविद्यालय"-स्थापनार्थं काचित्समितिरकारि, सिद्धान्तितं च तत्र तस्यावश्यकत्वम् । माननीयेन श्रीमता मालवीयमहोदयेन प्रतिष्ठापयिष्यमाणस्य विश्वविद्यालयस्य कृत्यकलापव्यवस्थापुस्तकं प्रकाशितम्, यस्य खलु निष्कर्षोऽनुपदमेवोपरिष्टात् पाठकेभ्यः प्रदर्श्यते । विश्वविद्यालयार्थं रूप्यककोटिरपेक्ष्यते, तत्रास्माकं महनीयेन मित्रेण माननीयश्रीमाधवलालेन त्रीणि लक्षाणि दत्तानि अन्याभ्यां च सुगृहीतनामधेयाभ्यां काभ्याञ्चिन्महामतिभ्यां प्रत्येकं त्रीणि लक्षाणि दातुं प्रतिश्रुतानि । तस्यां समितौ राष्ट्रीयमहासभाधिष्ठातॄणां हिन्दूविश्वविद्यालयार्थं महाननुरागोऽदृश्यत । सुप्रथिताभिधेयैः श्रीमद्भिः सुरेन्द्रनाथवन्द्योपाध्यायैः, बालगङ्गाधरतिलकैः, अध्यापक-भजेकरनन्दुभिः, सुब्रह्मण्य-आयरैश्च तदर्थं यावच्छक्यं प्रयत्नमाधातुमङ्गीकृतम् । यथा चेयमवस्था, तथा सम्भावयामो नातिचिरं फलिष्यतेऽस्मन्मनोरथद्रुमेणेति । प्रसन्नो भारतीयानां विधिस्तथैव विधेयात् ।

मन्यामहे, न खल्वेकोऽपि स कश्चिद् हिन्दूसमाजेषु नयनविषयतामागच्छेत्, यो हि संकल्पितविश्वविद्यालयस्य प्रस्तुतां कृत्यव्यवस्थां न मुक्तकण्ठं प्रशंसेदिति । प्राचीनसमयेषु यद्यत् किलास्माकं महत्तरं रमणीयतरं चासीत्, तस्य सर्वस्य रक्षणं, साधारणानां पुरतस्तस्य रोचनत्वसम्पादनं च संस्कृतशिक्षयैवैकया सम्भवति । संस्कृतशिक्षैव हि सा, यदधिगमेन ते ते महामतयः ससन्तोषं साधारणजीविकां भजमाना अपि दुर्विगाहगम्भीरान् तांस्तान् विषयांश्चिन्तयामासुः, अनुबभूवुश्च परमानन्दं परोपकारव्रतसेवनादिना । न च संस्कृततो भिन्ना नाम सा कापि भाषा, यया किल प्रवर्त्तमानाभिनव-

विज्ञानादिविविधविद्यानां सङ्कलनेन प्रादेशिकभाषाणां संवर्द्धनं सुष्ठुतरं सम्भाव्यताम् । अत ईदृश्याः संस्कृतभाषायाः सविशेषानुशीलनं व्यवस्थापयन्तो हिन्दूविश्वविद्यालयप्रवर्त्तका मणीषिणः कस्य नाम भारतीयस्य न खलु परःसहस्राणां साधुवादानां भाजनीभवन्ति ।

प्रस्तुते हिन्दुविश्वविद्यालये इमान्यन्तर्भवेयुः—१ एकः संस्कृतविद्यालयः,—यत्र ज्यौतिषशास्त्रस्य नभोविज्ञानशास्त्रस्य च मानमन्दिरे ( astronomical and meteorological observatories ) तिष्ठेताम्,—२ एको रासायनिकपरीक्षागृहेण, उद्भिद्विद्याविषयकोद्यानेन च सहितः ( with laboratories and botanical gardens ) आयुर्वेदीयविद्यालयः, ३ एकः अर्थशास्त्रविद्यालयः, यस्य रासायनिकायस्त्रयो विभागाः स्युः, कश्चैकस्मिंश्च विभागे तदुचितयन्त्रपरीक्षागृहाणि भवेयुः, ४ एकः कृषिविद्यालयः, ५ एको गान्धर्वविद्यालयः, ६ एकश्च आङ्गलप्रभृतिवैदेशिकभाषाशिक्षार्थं भाषाविषयकविद्यालयः ( Linguistic College ) । अध्यापकानां विद्यार्थिनां च निवासार्थं गृहाणि च निर्मायेरन्, यत्र ब्रह्मचर्यं सविशेषं छात्रै रक्षणीयं स्यात् ।

* * * * * * * *

ये विद्यार्थिनो हिन्दुशास्त्राध्यापका आयुर्वेदाध्यापका वा भवितुमिच्छेयुः, तेभ्यः संस्कृतेन च तावता,—यावता ते प्रदत्तां धर्मशिक्षां ग्रहीतुं शक्नुयुः । कृतविद्येभ्यो विद्यार्थिभ्यः 'स्नातक' इत्युपाधिर्दीयेत । यः पुनः स्नातकः विश्वविद्यालय एव वा, ततो बहिरेव वापि वा, शास्त्राण्यनुशीलयन् विज्ञानविशेषं विद्याविशेषं वाधिकुर्वीत् स खलु 'आचार्य' इत्युपाधिना पुरस्क्रियेत । यस्तु शिल्पादिविषये यथोचितमधिगतविद्यः स्यात्, स हि 'अधिकारी' इत्युपाधिं लभेत ।

विश्वविद्यालयो यथा परिचालकमण्डल्या पर्यवेक्ष्येत, तत्र खलु भारतीयमित्रराज्याधीश्वरा अपि वर्त्तेरन्निति मन्यतां कीदृशमस्य गौरवमिति ।

* * * * *

यदि नाम पश्यतामेव जनानाम्, महम्मदीयानाम् आलिगडनगरस्थो विद्यालयः ( M A. O. College at Aligarh ) एतादृशो मुक्तिमधिगच्छेत्, तर्हि हिन्दुविश्वविद्यालयोऽयं न तथा भवेदिति नास्मच्चित्तं कथमपि प्रत्येतुमिच्छति । कः सन्देहो दरिद्रेयं साम्प्रतं तपस्विनी भारतवसुमतीति । तथापि या खलु भक्त्या वा भीत्या वा व्यर्थमेव राजपुरुषाधिष्ठातृकेषु स्थापनीयेषु स्मारकचिह्नेषु अहम्पूर्विकया परोलक्षं धनं समर्पयितुं शक्नोति, सैवेदानीं परिपाकरमणीयस्य कृत्स्नकुशलसम्पादनोचितस्य यथार्थाभ्युदयविधानबद्धपरिकरस्य हिन्दुविश्वविद्यालयस्य कृते अपेक्षितमर्थं वितरीतुं कथं नाम पश्चात्पदमादधीतेति दृढीयानस्मद्विश्वासः । लघ्वी मात्रेयं कोटिमुद्रा नाम भारतीयनृपाणाम् ।

——:o:——

## शारदामण्डलम् ।

धर्मोन्नतये विहितविधीयमानविविधप्रयत्नेन श्रीभारतधर्ममहामण्डलेन विचिन्तितं यत् प्राचीनेषु शास्त्रेषूपदिष्टानां व्यवहाराणामनुसरणादृते भारतीयानामार्याणां न वस्तुतोऽभ्युदयः सम्भाव्यते, तच्च संस्कृतशिक्षां विना सर्वथाऽशक्यसम्पादनमिति । अतः श्रीभारतधर्ममहामण्डलपरिषत् संस्कृतशिक्षायाः भूयःसमुन्नतये 'शारदामण्डलं' नाम स्वकीयापरविभागरूपमपत्यं प्रसूतवतीति विदित एवायं वृत्तान्तः पाठकानाम् अद्य वयं केवलं तदीयचिकीर्षितकृत्यपरिपाटीगतान्येव द्वित्राणि वचनानि प्रकाशयिष्यामः ।

शारदामण्डलं वाराणस्यामेव प्रथमं संस्कृतशिक्षाप्रदानस्य तद्वि-
षयकानुशीलनकर्मणश्च ( research work ) व्यवस्था करिष्यति, क्र-
मेण च काश्मीर-श्रीनगरे, नवद्वीपे, काञ्च्यां, पुण्यपत्तने ( पुना ),
अवन्तिकायां ( उज्जेन ) मिथिलासु, मथुरासु, अपरेषु च प्रसिद्धेषु
विद्यापीठेषु संस्कृतविद्यामुज्जीवयिष्यति । विद्यार्थिनां वाराणस्यां
कथमिव कष्टमिति मित्रगोष्ठ्या असकृत् पूर्वमुक्तम् शारदामण्डल-
स्यापीह नयनमाकृष्टम् । तदिदं तेषां दुःखापनोदनार्थं छात्रनि-
वासं स्थापयितुं सङ्कल्पते । भारतस्य स्थाने स्थाने ब्रह्मचर्याश्रमान्
चिकीर्षता मण्डलेन महत्कृत्यमनुष्ठातुं व्यवसितम् । असेवितब्रह्मचर्यं
भारतमुत्सन्नम् । ब्रह्मचर्यस्य रमणीयं परिपाकं पुनरप्यवलोकयितुं
कदा नाम मुग्धस्यैतस्य प्रज्ञानेत्रमुन्मीलेदिति भगवानेव जानाति ।
शारदामण्डलेन अत्रैव प्रथमं सविशेषं च यतनीयमिति युक्तं मन्या-
महे । साहित्यदर्शन विज्ञानादि विविधविषयाणां गवेषणार्थं काशिकैः
पण्डितैर्यथा प्रदेशान्तरीयाणां पण्डितानां सम्मेलनं स्यात्, तथा करि-
ष्यते शारदामण्डलेन । प्रथमं तु वाराणस्यामेव तदारभ्येत । मण्डल-
मिदं परीक्षाविधिना संस्कृतविद्यालयानां शोधनमिच्छति, पत्रिका-
मेकां प्रकाशयिष्यति, यत्र मण्डलस्य कार्यविवृत्या सह विविधविष-
यकाः सन्दर्भाः स्युः । विस्तरस्तु मण्डलेनोपरिष्टात्प्रकाशयिष्यते ।
वयं सर्वथास्य कुशलं कामयामहे ।

———:o:———

## मित्रगोष्ठ्याश्चतुर्थवार्षिकोत्सवः ।

अतीते पौषे मित्रगोष्ठ्याश्चतुर्थो वार्षिकोत्सवः कुचविहारमहा-
राजानां कालीमन्दिरे महतारम्भेण निष्प्रत्यूहं सम्पन्नः । पण्डितवरैः
महामहोपाध्यायैः श्रीराखालदासन्यायरत्नभट्टाचार्यैः सभापतेरासनं
परिशोभितमासीत् । सभायां काशिकाः जयपुरादिस्थानान्तरागताश्च
बहवो विद्वांसोऽध्यापकाश्च विद्यार्थिनश्चादृश्यन्त । स्थानाल्पत्वात्
तेषां नामधेयानि प्रकाशयितुमपारयन्तो वयं विषीदामः ।

प्रथमं गीतायां मङ्गलगीतिकायां गोष्ठ्या अन्यतमेन मित्रधुरीणेन न्यायाचार्य पण्डितश्रीवामाचरणतर्कभूषणभट्टाचार्येण गोष्ठ्यास्तृतीयवार्षिक कार्यविवृतिः पठिता। तदालोचनेन ज्ञायते यत्तया गृहीतानां कार्याणां यद्यपि नाभिलषितरूपा सिद्धिर्जाता, तथापि कालेन तथैव भविष्यतीति न खलु न द्रढीयस्याशास्ति। आलोच्ये वर्षे सुदूरे सिंहलद्वीपे गोष्ठ्याः कियन्ति मित्राणि जातानि, येषामधिकान्येव बौद्धमतानुगानि। पारसीकस्याप्येकस्य मित्रश्रेण्यां नाम दृश्यते। एतच्चान्यच्च पर्यालोच्य निश्चेतुं सुशकं यन्मित्रगोष्ठी सुष्ठु खलु मैत्रीसुखमनुभवतीति। स्थानाल्पत्वाच्च विस्तरशः इह तत्सर्वं प्रकाशयितुं पारयाम इति क्षम्यतां सहृदयैः पाठकमहाशयैः। अथ संस्कृतशिक्षाविषये वाचितवति किञ्चित् (यद् हि पत्रिकायामन्यत्र प्रकाशितम्) पत्रिकासम्पादकमहाशये, संस्कृतचन्द्रिकासम्पादकेन श्रीमता जयचन्द्रसिद्धान्तभूषणमहाशयेन कीर्त्तितगुणवैभवः सौम्यसुजनः संस्कृतचन्द्रिकासहकारिसम्पादकः श्रीअप्पाशर्मविद्यावाचस्पतिमहाशयः मित्रगोष्ठ्या उद्देश्यजातमवलम्ब्य सुमधुरं व्याख्यानं विहितवान् प्रतिपादितवांश्च गोष्ठीं प्रति सर्वेषामनुरागादि प्रदर्शनौचित्यम्। अथ बहुविश्रुतेन अद्भुतशतावधानशक्तिशालिना श्रीश्रीरामशास्त्रिणा नाट्यशास्त्रविषयकं व्याख्यानं प्रक्रम्य निरर्गलं निर्गच्छद्भिः स्ववचनजातैः सचेतसामसकृत् सस्मितानन्द उत्पादितः। ततः प्रकाशिते सभापतिमहाशयस्याभिप्राये सम्पन्नं सभाकृत्यम्।

इतश्च संस्कृतेनैव तत्र वेणीसंहारनाटकमभिनेतुं गृहीतगृह्यमाणभूमिकेषु अभिनेतृषु तदारम्भसूचको मांसलमधुरातोद्यध्वान उत्कर्णयन् सामाजिकान्, पूरयन् श्रवणविवराणि, नन्दयन् हृदयानि, ध्वनयंश्च रङ्गमण्डपं गगणमण्डलमगाहत। पश्यत्स्वेव च दर्शकनिवहेषु यथोचितं नान्दीपूर्वकं प्रारब्धमभिनयकर्म, अभिनीतं च समग्रमेव नाटकम्। श्रोतृजनसुखार्थं मूलनाटकस्य किञ्चित्परित्यक्तम्; अपरं च नूतनं किञ्चित् सन्निवेशितमासीत्। अभिनेतारः सर्वं एव वङ्गीया

अभवन् । वङ्गीयानां संस्कृतोच्चारणं देशान्तरीयाणां तेन किञ्चिद् भिद्यते । अतो वङ्गीयेतराणां सामाजिकानां श्रवणयोस्तेषामुच्चारणं नात्यतिरुचिकरमभून्न तत्र सन्देहलेशोऽपि । सत्यप्येवं प्रदर्शितोऽभिनयः समर्थ एवासीत् सचेतसामानन्दोत्पादनायेति तेषां तदानीन्तनानि वचनान्येव प्राकाशयन् ।

——o——

## वाराणसी ।

वसन्तपञ्चम्युत्सवे वाराणस्यां सुविश्रुतानां बहुश्रुतानां विदुषामेका महती समितिरासीत् । यत्र किञ्चिन्नूतनं युक्ततरं च कृत्यं तैः सम्पादितम् । श्रीमतो माननीयस्य माधवलालमहोदयस्य संस्कृतोन्नतये प्रयत्नातिशयः कस्य नामाविदितः । तेनैव परितुष्टहृदया वाराणसेया विद्वांस आशीर्वचनैरमुं महाभागं सभाजयितुं तस्मिन्नहनि सममिलन् । सभायामादौ महामहोपाध्यायेन श्रीमता शिवकुमारमिश्रेण केचनाशीर्वादसूचकाः श्लोकाः पठिताः । अथ महामहोपाध्यायेन सि. आई. ई. इत्यपरोपाधिधारिणा श्रीमता गङ्गाधरशास्त्रिणा माधवलालमहाभागस्य तांस्तान् गुणान् व्याख्याय ग्रन्थात्मकाश्चत्वारो वेदाः सहान्यैः कैश्चिद् धर्मग्रन्थैस्तस्मै तेषां रक्षणार्थं समर्प्यन्त । सोऽपि महाशयः कृतज्ञेन हृदयेन परमश्रद्धाहीन् तान् ग्रन्थान् शिरसि संस्थाप्य कालोचितैर्मधुरै र्व्याख्यानैस्सर्वेषामेव हृदयं वलवदावर्जयत् ।

* * * * * * *

वाराणस्यां पण्डितश्रीगदाधरशिरोमणेः सारस्वतोत्सवः प्रसिद्ध एव । अतीते सरस्वतीपूजनदिवसे तदुत्सवे कैश्चित्संस्कृतपण्डितै र्विद्यार्थिभिश्च वेणीसंहारनामकं नाटकं संस्कृतेनाभिनीतम् । त एवामी अभिनेतारो ऽ किल मित्रगोष्ठ्यामभ्यनयन् । परोऽभिनयश्चारुतर आसीदिति दर्शका मन्यन्ते । सोऽयम् अभिनयसम्प्रदाय इतः परं मृच्छकटिकं नाम प्रकरणं प्रयोक्ष्यत इति । अस्य प्रसादेन बहूनामेव

रूपकाणां प्रयोगो वाराणसेयानां नयनगोचरीभविष्यतीति सम्भावया-मः । कियद्वर्षपूर्वमेभिरेवाभिनेतृभिः चण्डकौशिकं, वेणीसंहारं च प्रयुक्तमासीत् । वर्द्धतामेषां प्रयासः ।

———:o:———

## नववर्षे महामहोपाध्यायोपाधिः ।

श्रुतमिवास्माभिश्चलत्सु कथाप्रसङ्गेषु, प्रवर्त्तमानेषु च गोष्ठीसु-खालापेषु कस्यचित् महत्तरस्य महामहोपाध्यायस्य सखेदं वचनम्—'हन्त भोः किमिदमायातम्, मन्यामहे, साम्प्रतमयमुपाधिः (महामहो-पाध्यायः) उद्गीर्ण एव शोभत इति'। न जानीमः सोऽयं महाभा-गो वर्त्तमानवर्षीयोपाधिप्राप्तजननामसूचिकां पत्रिकामालोक्य किं नाम कर्णपुटपेयं वचनमुक्तवानिति । न बुध्यामहे कथमिव तत्रभवता दुर्म-नायितमिति, यतो नेदमविदितं तेन यत् पतन् खलु चन्द्रकिरणः प्रासाद इव कुटीरेऽपि पततीति । तत्र यदि प्रासादस्तेनैवात्मानं धन्यं मन्येत, तर्हि तस्यैवायमपराधः । स खलु चन्द्रकिरणं प्राप्नोतु मैव वा, किं तेन तस्य छिद्यताम्, दुरपह्नवा हि तस्य सहजद्युतिः । कुटीरस्य तु स्पर्धमानस्य तावदेव शोभा, यावत्स चन्द्रकिरणो न व्यवधीयते । अन्यच्च प्रसिद्धमेवास्ति—"काचः काचः, मणिर्मणि-रिति", ततः कृतं तस्य वैमनस्येन । कृतं चैतेषामपि नैराश्येन, ये हि यथोचितमनधीतिनोऽपि शास्त्रेषु केवलमुपाध्यलङ्कारेण पण्डित-समाजेष्वात्मानं प्रख्यापयितुमिच्छन्ति । अपि नामैतद्विलोक्यापि य-थार्थपण्डितानाम् उपाधिलाभलोभो न खलु समूलमुन्मूलितो भवेत्?

## शोकः ।

वङ्गेषु विक्रमपुरमण्डलं पाण्डित्यगौरवेण नवद्वीपान् न न्यूनं स्थानमधिकरोति । अद्य हि तत्रत्यस्यैव सर्वश्रेष्ठस्य वर्षीयसो नैया-यिकस्य तत्रभवतो महामहोपाध्यायपदलाञ्छनस्य रामनाथसिद्धा-न्तपञ्चाननमहाशयस्य देवभूयाधिगमवृत्तान्तं श्रावयतामस्माकं दीर्यते

इव हृदयं शोकसम्भारेण । न केवलं पाण्डित्येन, अपितु पण्डितजनोचितेन कारुण्यसारल्यादिना विविधेन गुणकलापेनाप्यतितरां मोहित आसीत्स प्रदेशस्तेन । सर्वथा हतासिव कूर्मभूमि, या त्वमीदृशेन पण्डितरत्नेन चिराय विनाकृतासि । श्लाघनीया चासि त्वमेव, यत्र तादृशस्य पण्डितप्रकाण्डस्य चरणरेणवो निपतिताः । शोकहतस्य परिवारस्य भगवान् स्वस्ति विदधात्विति प्रार्थयामहे ।

———:o:———

## प्राच्यं दासवशीकरणम् ।

दासो यदि प्रभुवश्यो न स्यात्, तर्हि तदर्थं प्राचीनैर्भारतीयैरार्यैः कीदृश उपायोऽवलम्बित इति गृह्यसूत्रेषूपलभ्यते । पाठकानां क्षणं तद्विनोदावहं भवेदित्युदाहरामः ।

पारस्करगृह्यसूत्रस्य तृतीये काण्डे "उतूलपरिमेहः" * इत्युपक्रम्योक्तम्—

"स्वपतो जीवविषाणे स्वंमूत्रमासिच्यापसलमेव त्रिः
परिषिञ्चन् परीयादिति" ।

ायमर्थः—दुर्विनीतो दासो यदानीं सुप्तः स्यात्, तदा स्वकीयं मूत्रं ीवतः पशोः शृङ्गे आसिच्य तेनैव तं दासमप्रदक्षिणं त्रिवारं परिषेञ्चन् परिभ्रमेदिति । तत्रायं मन्त्रः—

"परि त्वा गिरेरहं परिमातुः परिस्वसुः परिपित्रोश्च
भ्रात्रोश्च सख्येभ्यो विसृजाम्यहम् ।
उतूल परिमीढोऽसि, परिमीढः क्व गमिष्यसीति" ॥

अयमर्थः—हे दुर्विनीत दास, (यत्र क्वापि त्वं गच्छ) पर्वतादपि मातुः सकाशादपि पितुः समीपादपि, स्वसुर्वा भ्रातुर्वा सुहृदो वा सन्निकर्षादपि त्वामिहमाकृष्य मयि विशेषेणानुरक्तं करोमि त्वं मन्त्र-

* उतूलस्य—दुर्विनीतस्य दासस्य परि समन्तात्, मेहः सेचनं वशीकरणाभिषेकं इति यावदिति" तत्रत्यं हरिहरभाष्यम् ।

शक्तया सेचनरूपैः पाशैर्बद्धोऽसि, तथाभूतस्त्वमिदानीं क्व गमिष्यसीति ।

अथैतेनापि प्रकारेण स चेद् वशीभूतो न स्यात्, तर्हि यत् कर्त्तव्यं, सूत्रकारस्तदुपदिशति—

"स यदि अभ्याद्दावाग्निमुपसमाधाय
घृताक्तानि कुशण्डानि जुहुयादिति"।

अयमर्थः—प्रागुक्ते कर्मणि कृतेऽपि दासो यदि स्वेच्छया विचरेत् प्रभुवश्यो न भवेत् तदा दावाग्निं स्थापयित्वा घृताक्तानि कुशकुण्डलानि जुहुयादिति। तत्रायं मन्त्रो विनियोक्तव्यः—

"परि त्वा ह्वलनो ह्वल निवृत्तेन्द्रवीरुधः।
इन्द्रपाशेन सित्वा मह्यं मुक्त्वाथान्यमानयेदिति"॥

अयमर्थः—"हे चञ्चलदास इन्द्रवीरुधो निर्गत्य समन्तात् स्थितोऽयमग्निस्त्वामन्यं मोचयित्वा इन्द्रपाशेन बद्ध्वा च मत्सकाशमानयेदिति।

सूत्रकारः कथयति इत्थमनुष्ठिते स दासो वश्यो भवेदेव—

"क्षेम्यो ह्येव भवतीति"।

———०———

# मित्रगोष्ठी-पत्रिका ।

## ( मासिकं संस्कृतपत्रम् । )

"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्" ।

ऋग्वेदः ।

द्वितीये वर्षे } १८२७ शकाब्दाः, फाल्गुनः । { एकादशसंख्या

## यावत् तावत् ।

१

यावत्ते दृढयेयुरुज्झितनया बन्धो भृशं बन्धनं,
तावत्तावदिदं व्रजेच्छिथिलतामस्माक मुच्चैस्तराम् ।
यावत्ते नयनं रुषा विषमया कुर्युर्महालोहितं,
तावद्धन्त भवेत्तु तत्स्वतितमामस्माकमुन्मीलितम् ॥

२

यावत्ते ध्वनयेयुरम्बरतलं भ्रातर्मुहुर्हुङ्कृतै-
र्गच्छेत्तावदियं लयं सपदि नस्तन्द्रा दुरन्ताग्रहा ।
यावत्ते विघटेयुरत्र रभसात् तावद्धि वर्द्धेत तद्,
गाढं नो घटनं परस्परमनः प्रीतिप्रकर्षावहम् ॥

३

प्राप्तः सम्प्रति कर्मणामवसरोऽस्माकं समालोक्यतां,
स्वापः पापविलासवन्नयनयोर्दूरं समुत्सार्यताम् ।
भ्रातर्भीतिरिहोज्झ्यतां विभुपदं भक्त्योत्तमं ध्यायतां,
यद्धर्म्यं सदृशं च यत्स्वजनुषस्तत्तूर्णमातन्यताम् ॥

प्रातः ।

१

उन्मत्तोऽसाविति यदि सखे वक्ति कश्चित्कदाचित्,
नायं वाच्यः किमपि सदृशत् तत्र ते भोः कथञ्चित् ।
दद्यादद्य त्वयि तृणरजःसन्ततिं योऽवजानन्,
नूनं प्रातः स खलु कुसुमैरर्चयेद्भक्तितस्त्वाम् ॥

२

नागच्छेद्यदि कोऽपि गौरवभरैर्व्यर्थैर्हि सार्धं त्वया,
पल्यङ्कस्य सुकोमलं तलमयं सेवेत यद्यद्य वा ।
कामं तिष्ठतु दुर्मतिर्ननु तथा, धार्यो न किञ्चित्त्वया,
प्रातस्त्वेष पदाब्जयोस्तव समागच्छेद् ध्रुवं द्रक्ष्यसि ॥

एककः ।

१

आह्वाने श्रुतिगोचरेऽपि ननु ते नायाति कश्चिद्यदि,
भ्रातस्तिष्ठतु, मा शुचः, सरभसं याहि त्वमेवैककः ।
सर्वे भीतिवशंवदाः सचकितं वक्त्रं परावर्त्य चेद्,
एकाकी प्रकटीकुरुस्व सकलं तत्त्वं त्वमेव स्फुटम् ॥

२

कान्तारं बत दुर्विगाहमधुना त्वय्युद्यते गाहितुं,
वैमुख्येन सखे न कश्चिदपि चेत् कुर्वीत साहायकम् ।
यावच्छक्यमपाकुरु क्षतमुखप्रस्यन्दिरक्तच्छटा-
पूर्णेनाङ्घ्रियुगेन कण्टकचयान्मार्गात् त्वमेवैककः ॥

३

विद्युद्द्योतितदिङ्मुखे श्रुतिपुटोच्छिन्दानवज्रस्वने,
झञ्झावातविकम्पिते परिपतद्धाराम्बुपूर्णस्थले ।
गर्जद्वारिधरे निशीथसमये सर्वैर्जनै रुध्यते
द्वारं चेत्पथिकस्य ते स्मर सुखं मृत्युं त्वमेवैककः ॥

विधुशेखर शर्मा ।

# :कथानां भ्रमणम् ।

ला फण्टेन् ( La Fontain ) नामकस्य कस्यापि फ्रान्सदेशीयस्य कथा ( Fables ) युरोपे सविशेषं प्रसिद्धाः । तत्रैकेत्थम्:—'पेरी-ट'-नामिका काचिद्गोपबाला दुग्धविक्रयाय नगरं गच्छन्ती 'आशा-मोदकचर्वण'-न्यायेन मनस्यकल्पयद् यत्सा तत्र दुग्धं विक्रीय तेन किञ्चिद्धनमुपार्जयिष्यति । अथ तेनार्थेन तया कुक्कुटाण्डशतं क्रेष्यते । क्रमेण च तदण्डोत्पन्नकुक्कुटौघविक्रयलब्धेन धनेनैको ग्राम्यो वराहः क्रीतो वर्द्धितो विक्रीतश्च भविष्यति । ततस्तदधिगतेनार्थेन पुनरपि तयैका गौः क्रेष्यते । कालेन तस्या एकः पुष्कलो वत्सो जनिष्यते । स च नवीनस्तर्णकः पादचतुष्टयस्य द्रुततरविक्षेपेणाभितो धाविष्य-तीति । एतत्सर्वं मनसा कल्पयन्ती सा खलु तपस्विनी प्रचुरप्रमोदेन विस्मृतात्मभावा यावद् गोवत्सवत् स्वयमपि पादमुत्क्षिपति, तावदेव हन्त तस्या भाण्डात्सर्वं दुग्धं भूमौ निपतितमिति ।

पञ्चतन्त्रे कापि कथास्ति, या हि हितोपदेशेऽप्युद्धृता । सास्मा-भिरिह प्रदर्श्यते—

"अस्ति देवीकोट्टनामनाम्नि नगरे देवशर्मा नाम ब्राह्मणः । तेन महाविषुवसंक्रान्त्यां शक्तुपूर्णः शरावः प्राप्तः । ततस्तमादायासौ भाण्डपूर्णकुम्भकारमण्डपिकायां रौद्रेणाकुलितः सुप्तः । ततः शक्तु-रक्षार्थं हस्ते दण्डमादायाचिन्तयत्—यद्यहमिमं शक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि, तदात्रैव तैः कपर्दकैर्घटशरावादिकमुपक्रीय अनेकधा वर्द्धितैस्तैर्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय वाणि-ज्यं कृत्वा लक्षसंख्यकधनान्युत्पाद्य विवाहचतुष्टयं करोमि । ततस्तासु पत्नीषु या रूपयौवनवती, तस्यामधिकानुरागं करोमि । तदनन्तरं सञ्जातेर्ष्यास्ताः सपत्न्यो यदान्योन्यं द्वन्द्वं करिष्यन्ति तदाहं कोपा-कुलस्ता दण्डेन ताडयिष्यामि । इत्यभिधाय तेन लगुडः क्षिप्तः । तेन शक्तुशराव श्चूर्णितो भाण्डानि च बहूनि भग्नानि । ततो भग्नभाण्ड-

श्रवणादागत्य कुम्भकारेण गले हस्तं दत्वा ब्राह्मणैस्तिरस्कृतो मण्डपाद् बहिष्कृतश्चेति"।

नास्त्यत्र स्तोकोऽपि संशयो यत्प्रागुक्तयोः कथयोः सादृश्यमस्तीति। यद्यपि सादृश्यसद्भावादेवोभयोरेकम् अन्यतरस्माद् गृहीतमिति न वक्तुं शक्यते, तथापीदमेव सादृश्यसूत्रं गृहीतवद्भिरैतिहासिकैर्विचित्रं किञ्चित्तत्त्वमाविष्कृतं, येन ज्ञायते कदा कथं च भारतीयाः कथा रूपान्तरेण विभिन्नेषु देशेषु प्रसृता इति।

ईदृश्यः कथा बौद्धसमयोत्पन्ना इति पण्डितैरनुमीयते। यतो बहवो नीतिवादा बौद्धैराख्यायिकाभिरुपादिश्यन्त। बौद्धयुगानन्तरं हिन्दुधर्मस्य पुनरुत्थानसमये पञ्चतन्त्रं विरचितमिति विदुषां विश्वासः। दुष्करो हि संस्कृतग्रन्थानां निर्म्माणकालनिर्णयः। अतो न वयं तत्र किञ्चिद् वक्तुमिच्छामः। ईदृशी खलु कथा कदा कदा केषु केषु देशेषु पर्यटितवतीत्येतावन्मात्रमेव त्विह प्रदर्शयिष्यामः। खीष्टीयपञ्चमशतके 'आरव'-राजधान्यां 'वोगदाद'-नगर्यां अलमनसूरो नाम नरपतिः (खालिप्) आसीत्। 'कलिल'-'दीमन'-नामकौ ग्रन्थौ तस्यैव सभायां विरचितौ। तत्रत्याः कथाः पञ्चतन्त्राद् गृहीताः। रचयित्रोच्यते—ताः खलु पारस्यदेशस्य 'पह्लव'-नामधेयायाः प्राचीनभाषायाः संगृहीता इति। इमा अपि पुनः तत्रत्येन राज्ञा 'खसरुनुसीरवन्'-नामकेन प्रेरितस्तदीयश्चिकित्सकः (हकिमः) 'बारजोई'-नामा भारतवर्षादानीतवान्। उक्तमस्ति—स खलु चिकित्सको 'मृतसञ्जीवन'-भेषजानयनार्थं भारतं (तद्धि तदर्थं प्रसिद्धमासीत्) प्रहितः। तेन तु तदिति प्रागुक्तकथासम्बद्धं पुस्तकमेवानीयत—यत्पाठेन मृता अपि सञ्जीवन्ति। तादृशं हि तस्य माधुर्यमासीदितिभावः।

एतेन पुस्तकेन पञ्चतन्त्रस्य भूयान् भेद उपलभ्यते। नूनं पञ्चतन्त्रविरचनात्पूर्वं मौक्तिकफलानीव बहून्युपाख्यानानि भारतस्य समन्तात् विकीर्णान्यासन्। तेषां कानिचित् कैश्चित् सञ्चितानि नैकपण्यवीथिषु

च विक्रीतानि । शिष्टानि तु कानिचन स्वाभिप्रायोपयोगीनि विष्णुशर्मणा संदर्भ्य पञ्चतन्त्राभिधेया हृदयङ्गमा हारयष्टिर्विनिर्मिता । अत्रायं हेतुः—पञ्चतन्त्रे पञ्चैवाध्याया दृश्यन्ते, पह्लवभाषीयग्रन्थे त्वष्टादशाध्यायाः । एषु पञ्चमे, सप्तमे, अष्टमे, नवमे, दशमे चाध्यायेषु पञ्चतन्त्रकथाः संदृब्धाः ।

श्रीमद्भिर्ज्ञायते महम्मदीयधर्मस्य प्रथमाभ्युदयसमये महोत्साह परिकरा 'आरब'-निवासिनः आसिया-आफ्रिका-युरोपेषु बहूनि स्थानान्यधिकृतवन्त इति । यस्मिन् काले प्रागुक्तस्य बोगदाद्-महीपालस्य 'अलमनसूरस्य' सभायां तौ ग्रन्थौ रचयितुमारब्धौ, तदानीं युरोपान्तर्गतस्य 'स्पेन'-राज्यस्याधिपतिः 'अबदार-रहमान'-नामा कश्चिन्महम्मदीय एवासीत् । अतो नेदमसम्भवं यत्ताः खलु कथाः सह महम्मदीयैः 'स्पेन' देशं प्रविष्टा इति ।

खीष्टस्य मृत्युस्थानस्य 'जेरुजेलम'-नगरस्योद्धारार्थं युरोपीया नरपतयः संहत्य १०६० तमाब्दे तत्रागच्छन् । तदा 'साइमिद-वन्'-नामा कोऽपि आरबभाषात स्ताः कथा ग्रीकभाषायामनूदितवान् । तत्पुस्तकस्य नाम "Stiphenites and Ichnelatis" अलमुक्तेन अस्मिन्ननुवादे मूलकथायाः सबहु रूपान्तरं जातमिति । ग्रीकभाषोपनिबद्धा सा खलु कथेत्थमः—

कश्चिद् भिक्षुः किञ्चिन्नवनीतं मधु चैकस्मिन् पात्रे निधाय स्वशय्यापार्श्वे तदस्थापयत् । अथ स शय्योपविष्ट एकदा कल्पयितुमारभत—अहं नवनीतं मधु च विक्रीय दश छागलान् क्रेष्यामि । अथ पञ्चभिर्मासैरुत्पन्नैः शावैर्विंशतिश्छागला मे भविष्यन्ति । ततस्तान् विक्रीय बलीवर्दौ क्रीत्वा कृषिं करिष्यामि । तेनाहं पञ्चभिर्वत्सरैर्धनिको भविष्यामि, ततोऽपि स्वर्णमयमेकं प्रासादं करिष्यामि । तत्र बहून् भृत्यान् क्रेष्यामि, सुन्दरीं चैकां परिणेष्यामि । तस्या एकः पुत्रो भविष्यति । तमहं सम्यक् शिक्षयिष्यामि । यदि सोऽलसः स्यात्, तर्हि यष्ट्या 'इत्थमिति' स तया भूमिं प्रहृतवान् । तेन-

घातेन दुर्भगस्य तत्खलु मधुनवनीतभाण्डमभज्यत, सर्वं च तद् विनष्टमभवत् ।

१५८३ खमाब्दे तत्पुस्तकम् इतालीभाषायामनूदितम्, १६११ खमाब्दे च लाटिनभाषायाम्, ततोऽपि चानन्तरं जर्म्मणभाषायाम्, क्रमेण च फ्रान्सभाषायाम् ।

इत्थं बहुभिः कालैर्देशाद्देशान्तरं परिभ्रमन्तीभारतीयकथा युरोपीयाणामनुदिनसेव्यमाना संवृत्ता । तेषां धर्मोपदेशग्रन्थेष्वप्यासां कथानां स्थानं दृश्यते ।

भगवतो बुद्धस्य चारित्रं नामान्तरेण कथमिव युरोपीयैरुच्यते तत्संख्यान्तरे प्रदर्शयिष्यामः । *

श्रीअजितकुमारचक्रवर्त्ती
ब्रह्मचर्याश्रमः, बोलपुर ।

---:o:---

## संस्कृतशिक्षा ।

( पूर्वतोऽनुवृत्ता )

प्रायेण हि संस्कृताध्यायिनः साम्प्रतं शास्त्रैकचक्षुष्यो दृश्यन्ते । ते हि, तदालोच्यशास्त्रे अपरापरशास्त्रस्य यत् किञ्चिदुद्धृतं, तन्मात्रेणैव 'अलमिति' परितुष्यन्तः विज्ञातं यद् विज्ञातव्यमिति मन्यमानाः सर्वाण्येव शास्त्राणि तृणवद् विगणयन्ति; न तु स्वप्नेऽपि विशेषेण तत्तत्त्वं बुभुत्सन्ते । कथञ्चित्कोलाहलैर्दिक्चक्रवाले वाचालीकृत एव हि सम्पद्यते यत्सम्पाद्यम्, लभ्यते च यल्लब्धव्यम् ।

यदि ते सकृदपि शास्त्रान्तरं पर्यालोचयेयुस्तर्हि प्रभवेयुर्विज्ञातुं यत् कियत्स्वल्पतरं तेषां ज्ञानमाहात्म्यमिति नूनं स्मरेयुश्च ते तदानीं भर्तृहरेः काव्यमिदम्ः—

* मोक्षमूलरस्य ग्रन्थात्संगृहीतमिदम् ।

"यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।
यदा किञ्चित् किञ्चिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः" ॥ इति

नहि प्राचीना दार्शनिका दर्शनान्तरमनधीत्यैव केवलं दर्पोष्मणा तद्-षयामासुः। न हि श्रीमन्तः शङ्कराचार्यपादाः, कुमारिलभट्टा उदयनाचार्यादयो वा बौद्धादिमतं सम्यगविज्ञायैव तत्खण्डनाय युक्तिशस्त्रं निचिक्षिपुः। इदानीन्तु अस्मासु सर्वं एव केवलं त्रिचतुरग्रन्थस्थितं स्वल्पमात्रं बौद्धमतमाघ्रायैव सर्वं बौद्धं दर्शनं हेयमिति निश्चिन्वानाः तदालोचनार्थमिच्छामपि न कुर्वन्ति। यदि दर्शनमालोच्यं, तर्हि अपक्षपातिहृदयेन भवितव्यम्। अन्यथा आत्मनो वादिविजयरूपस्य दुर्निर्बन्धस्य फलं भवेदप्यधिगतम्, न त्वङ्ग सत्यनिर्णयं प्रत्याशा कर्त्तव्या। इदानीमुपलभ्यमानानां दर्शनग्रन्थानां भूयिष्ठा एव बौद्धाभ्युदयकालपरवर्त्तिनः। बौद्धयुगे कीदृशी दर्शनविद्यासीदिति बौद्धग्रन्थादेवावबोद्धुं शक्यम्। आत्मेश्वरादिविषये बहूनि मतानि बुद्धदेवसमये प्रचलितान्यासन्। येषां हि नामापि साम्प्रतिकेऽस्मदीये दर्शनग्रन्थे न श्रूयते। बौद्धानां धर्मग्रन्थस्त्रेधा भिन्नः,—सूत्रम्, विनयः, अभिधर्मश्चेति। तत्र सूत्रान्तर्गत-दीर्घनिकाय-मध्यमनिकायमध्ये ब्रह्मजाले दार्शनिकानां द्वाषष्टिर्मतानि बुद्धदेवेनोदाहृत्य विस्तरशो निराकृतानि। दर्शनाध्यायिनां विदुषामन्तःकरणं नूनमतितमां विनोदयेयुरेतानीति नास्तीह स्तोकोऽपि संशयः। पालिभाषानिबद्धा विविधा बौद्धग्रन्थाः पाश्चात्यैः पण्डितैः प्रकाशिताः, प्रकाश्यन्ते च, केषाञ्चिच्च स्वस्वभाषयानुवादा अपि कृताः। लण्डननगरवर्त्तिन्याः "Pali Text Society" इत्यभिधेयायाः समितेः सभापतिना ( T. W. Rhys Davids ) इत्येतेन सहानेकैर्युरोपीयैः पण्डितैर्दीर्घनिकायादयो बहवो बौद्धग्रन्थाश्चारुतरं प्रकाशिताः प्रकाश्यन्ते च, आविष्क्रियन्ते च तत्सर्वालोचनेन नूतननूतनानि तत्त्वानि।

वयं पुनः किं कुर्मः—येषामावासभूमौ भारतवर्षे, तत्सन्निहितत्तरे सिंहलादौ च तत्सर्वमुत्पन्नम् । इदं वयं कुर्मः—अस्मत्पूर्वपूरुषैः देशादेवास्मात्स खलु बौद्धो धर्म्मो निर्व्वासितः, अतः कथं दर्शनमपि तत्सम्बद्धं पुस्तकमधीयतामिति, नास्त्येव तत् किञ्चिद् इतीव मन्यमाना न तत्प्रति नयनं सञ्चारयामः । निषिद्धं, हि तत्तन्त्रालोचनं श्लोकवार्त्तिके कुमारिलभट्टेन । बौद्धेन धर्मेणास्मदीयस्य तस्य सत्स्वपि केषुचिद्विरोधेषु बहूनि खलु शिक्षणीयानि पण्डितवराणामपि सन्तीति को नाम निह्नोतुं शक्नुयात् । भारतस्य तत्कालेतिवृत्ते संग्रहणीये बौद्धं जैनञ्चेति पुस्तकवृन्दमेव परमोपायः । निकृष्टादपि हि समीचीना विद्या ग्राह्येति मनुसदृशैर्धर्मस्रष्टृभिरुच्यते, अतो यन्मते धर्मबुद्ध्या बौद्धपुस्तकपाठस्यानुपादेयत्वमिति, न तत् किञ्चित् । नहि स्वयं कुमारिलोऽपि बौद्धग्रन्थान्नापठत् । न चापठितस्य तन्मतस्य तेन खण्डनं युज्यत इत्यास्तां तावत् तदिदम् । फलतस्तु एतदेवेह वयमभिप्रेमो यदवश्यमिदानीमस्माभिः बौद्धशास्त्रमालोच्य तस्मान्निरवद्यं रत्ननिकुरम्बं प्रकाशनीयम् इति ।

यथा बौद्धम्, एवं जैनमपि मतं नास्माभिरनुशील्यते । अक्षमा वयमिह क्षुद्रे सन्दर्भे बौद्धानामिव जैनानामपि पुस्तकानां गुणान् वर्णयितुम् । नास्ति स विषयो, यत्र जैनतीर्थङ्कराणां हृदयकुसुमा निबन्धा न दृश्यन्ते । अस्मदीयेषु शास्त्रेषु तत्र तत्र दूष्यत्वेनोदाहृतान् अंशान् आलोक्यैव न तदाकरेष्वस्माभिर्वीतस्पृहैर्भवितव्यम् अन्यथा बहुभिरुपादेयैरत्नैर्वयं वञ्चिता भवेम ।

बौद्धजैनशास्त्रालोचनेन न केवलं प्रागुक्तमात्रगुणलाभः । अन्योऽपि महीयाँल्लाभोऽनेन सम्भाव्यते । सनातनार्यधर्मानुसारिणामस्माकं, बौद्धानां, जैनानाञ्चान्योन्यं कश्चित् परिहाकभीषणो विद्वेषानलो हृदयकन्दरमधिष्ठाय नियतमेव वर्त्तते । तस्याप्ययद एव बीजम्, यत्र वयमन्योन्यस्य मतमालोचयामः । स्वयं किञ्चिदनालोक्यैव

कुसंस्कारवशंवदा वयं तत्पार्श्ववीस्थानमपि परित्यजामः । परस्परपरिचयाभावादेव सन्निहिततरमपि बन्धुं न वयं तथात्वेन निश्चेतुं प्रभवामः । तत एवचान्योन्यं भिद्यमाना दौर्बल्यं गच्छन्तः शत्रूणामामन्त्राय भवामः । यावद्धि कस्यचित्सम्प्रदायस्य धर्मग्रन्थो नाधीयते, न तावत्स याथातथ्येन विज्ञातो भवति । अस्मादेव कारणात् काले काले महाननर्थं उत्पद्यते । यथाहि स्थाणुं पिशाचत्वेन मन्यमानः पुरुषः स्वबुद्ध्यपराधेन भयार्त्तो व्याकुलो भवति, अनन्तरं च विशेषज्ञानेन तत्त्वेनैव तं विज्ञाय भयान्मुच्यते, एवमेव बहुषु स्थलेषु केवलं स्वविवेकदोषेण मुधैव काञ्चित् गर्हामः, तेन चैक्यबन्धनात् परिभ्रष्टय समाजदौर्बल्यकारणीभवामः । अस्मन्मते प्रथममात्मधर्मं विज्ञाय यावच्छक्यं जगति वर्त्तमानानां सर्वासामेव जातीनां धर्मा आलोचनीयाः, इत्थमेव हि गुणदोषौ साधु निर्णीयेते । अन्यथा केवलमभिमाननमात्रादपरापरधर्मनिन्दनं निन्दयितुरदूरदर्शित्वमेव प्रकाशयेत् स्वयं चासौ परीक्षकैरनुपादेयवचनः स्यादिति । अलं तावदस्मिन् विषये बहुनोक्तेन, मन्यामहे उद्वेजिता इव श्रीमन्तोऽनेन कर्कशवचनकलापेन । आशास्महे—

' अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभ

इति व्यासवाल्मीकिवचनमनुसृत्यात्रभवद्भिर्मर्षणीया एव वयमिति । अथ किञ्चिदवश्यवाच्यानि द्वित्राणि वचनान्युच्चार्य विरमामः ।

ब्राह्मणपण्डितानां साम्प्रतं का नाम जीविका भवत्विति बहव एव चिन्तयितुमिच्छामपि न कुर्वन्ति । पण्डिता उच्चैराक्रन्दन्ति—"नेदानीं पूर्वमिव वयं दक्षिणादिभिः सत्क्रियामहे लोकैः, नेदानीमस्मासु प्रागिव जनाः श्रद्दधते, अस्मभ्यं दत्तं द्रव्यं जलनिक्षिप्तमिव नव्यशिक्षितैर्मन्यते । वरं भिक्षुभ्योऽमी किञ्चिद्दद्युः, नत्वस्मभ्यम् । दक्षिणालब्धमेव हि द्रव्यमस्माकं जीविकेति समाजश्चेत्पुनरपि प्राचीनां पद्धतिमनुरुध्येत, तर्हि नास्मज्जीवनं दैन्यदौर्गत्यनिपीडितं भवेदिति" । अन्यस्मिंश्च पक्षे समाजसेविनो ब्रुवन्ति—" किं खलु ब्राह्मणपण्डि-

तैः समाजस्य हितमनुष्ठीयते, येनायं तान् पोषयतु । किं वा तैरीदृशमार्यं व्यवह्रियते, येन तेषु जनानां श्रद्धोदेतु । प्रत्युत साम्प्रत तैरित्थमनार्यमाचर्यते येन वरम् अशास्त्रज्ञा मूढा अपि वन्द्याः, न तु ब्राह्मणपण्डिताः । धनलुब्धैरेतैर्नास्ति किञ्चिद्दुष्करं नाम, एतैर्हि क्षणादेव जलं वह्निः, वह्निश्च जलं क्रियते । समाजेषु परं दण्डार्होऽपि पापी किञ्चिद्व्ययत्यागेन एषां प्रसादात्परमपावनत्वेन गण्यते । धूर्त्तवञ्चका ह्येते । विना धनादानं शिष्येभ्यो विद्या वितीर्यत इत्यपि न ते किञ्चिद्देयमर्हन्ति । कृतमस्माकमधिगतविद्यैस्तैः शिष्यैः, ते हि अध्यापकाननुगच्छन्तस्तैस्तैरनुचितैः कृत्यकलापैः समाजं पुनरुक्तजर्जरीकुर्युः । अतो न प्रयोजनमस्माकमीदृशैः पण्डितमहाशयैरिति ।" यत्र क्वापि गच्छामः, तत्रैव सामाजिकेभ्यः सुदुःसहेयमुक्तिः श्रुतिपथमुपैति । किं बहुना सुप्रतिष्ठिताः सुपण्डिता अप्यस्माभिरेवं वदन्तः श्रुता 'यत्सत्यमेव वयं तथापकृष्टाः संवृत्ताः, येन वस्तुत एव लोकान् शिक्षयितुमस्माकं योग्यत्वं नष्टप्रायमिति'। यथा वा भवतु सामाजिकानां सेयमुक्तिर्नास्माभिः साम्प्रतमवज्ञातुं शक्यते । अस्याः सारासारं निर्णीय देयमेवास्माभिः प्रतिवचनम् । किञ्च यदि वस्तुत एव तदुक्तौ किञ्चित् सत्यं निहितं स्यात्, तर्हि तदुपादाय तदनुरूपमेवास्माभिराचरणीयम् । नात्र मनागप्यौदासीन्यं सेव्यम् । अन्यथा नष्टा वयं पुनरपि नंक्ष्यामः ।

योऽयं प्रश्नः साम्प्रतमुत्थापितस्तस्य सम्यक् समाधानं स्वल्पेऽस्मिन् व्याख्याने न सम्भाव्यते । दिङ्मात्रं किञ्चिदिहोच्यते । दक्षिणां विनापि ब्राह्मणपण्डितैरित्थं धनमुपार्जयितुं शक्यते । सत्यं, धर्म्यकृत्यानि न तथेदानीं समाजेऽनुष्ठीयन्ते, तथापि अस्माकं धर्मसाहित्यविज्ञानदर्शनादिजिज्ञासा जनानामुत्तरोत्तरं वर्धत इति स्पष्टमेव । परन्तु स्वल्पायासेन तदखिलबोधकानि पुस्तकानि नितान्तमेव दुर्लभानि । पाश्चात्यैरेतद्विषयकाणि पुस्तकानि विरचय्य प्रभूतं धनमुपार्ज्यते । यतः खलु ते बहुसागरपारवर्त्तिनोऽपि परकीयाण्यपि दुरासदान्यपि शास्त्र

आलोच्य तद्विषयकान् ग्रन्थांश्च निर्माणार्थम् उपार्जयितुं शक्नुवन्ति, तर्हि वयं सन्निकृष्टा अपि स्वकीयान्यपि सुलभान्यपि तान्येव प्राप्य चारुतरान् ग्रन्थान् विरचयितुं न शक्नुम इत्यश्रद्धेयमिदम्। उद्युज्यतां सर्वैः, स्वल्पैरेव दिवसैर्हृदयङ्गमानि पुस्तकानि प्रणीय न केवलं भारतीयेभ्यः, अपितु वैदेशिकेभ्योऽपि धनमधिगन्तुम् अस्माभिः प्रभूयेत। साम्प्रतं कीदृशा निबन्धा अपेक्ष्यन्त इति मित्रगोष्ठ्याः तृतीयवार्षिककार्यविवृतिशेषे किञ्चित् ज्ञायेत। ब्राह्मणपण्डिताः सर्वमायुः संस्कृतानुशीलनेनैव यापयन्ति। अतस्तेषां सकाशात् तच्छास्त्रविषयकं विविधं तत्वं श्रोतुं सर्वैराशास्यते। बहवः साहित्यरसिकाः सञ्जाता जायन्ते च, किन्तु नाद्याप्येकं साहित्यानां मन्दमपि समालोचनपुस्तकं पश्यामः। एवमवस्था अपरापरशास्त्रेष्वपि। 'येल' विश्वविद्यालये (Yale Uneversity) संस्कृताध्यापकेन E. Washburn Hopkins, M. A., Ph. D. इत्यनेन The great Epic of India इत्यभिधेयं रामायणमहाभारतयोः श्रुतिस्मृतिब्राह्मणादिसम्पर्कोल्लेखपूर्वकं दार्शनिकविषयादिविवेचनपुरस्कारं, छन्दस्तत्वादिमीमांसनसनाथं च यदेकं समालोचनं लिखितम्, तत्पाठतो विस्मय एवास्मच्चेतस्युदेति यत् कथं नु तैरेतादृशो ग्रन्थो विरच्यते, अहो तेषां संस्कृतेऽपि ज्ञानप्रकर्ष इति। इत्थं कियतां पुस्तकानां नामानि क्रियन्ताम्। बहुतराणीदृशानि सन्ति। किञ्चित् परिश्रमेण आङ्गलभाषामधिगत्य पठ्यन्तां तानि, विज्ञायतां च कथं कियच्च तेषां संस्कृतज्ञानमिति *॥

---

* अत्रेदमसंकीर्त्य न विरन्तुं शक्यते संस्कृतचन्द्रिकायाः सम्पादकेन श्रीमता जयचन्द्रसिद्धान्तभूषणमहाशयेन रामायणमहाभारतयोः समीचीनेन प्रकारेण कश्चित् सूचीग्रन्थो निर्मितप्रायः येन तद्ग्रन्थाधिगन्तॄणां धर्मसमाजाचारादिविविधविषयाणां निरशेषं ज्ञानं सुकरं भवेत्। ईदृशानीव पुस्तकानि साम्प्रतमपेक्ष्यन्ते।

साम्प्रतम् आङ्गलभाषाधिगमोऽवश्यमेवास्माभिः करणीयः तथा सति पाश्चात्यैः संस्कृतादिविषये किमुच्यते नोच्यते वेति ज्ञातुं प्रभविष्यामः, ततश्चोपादेयं स्वीकृत्य स्वश्रमलाघवं करिष्यामः, अनुपादेयं च युक्त्या निराकरिष्यामः, अन्यथा तेषामसदुक्तेरप्रत्याख्याने, चतुर्षु, महादेशेषु तदधीयाना भूयांस एवास्मद्विरुद्धपथप्रस्थिता भवेयुः। न ह्येतदस्माभिर्वाञ्छनीयम् । पाश्चात्यैर्बहवः खलूपादेया वृत्तान्ताः श्राव्यन्ते । परन्तु नहि न भ्रान्तान्यपि मतानि क्वचित् क्वचिदपि तैरुद्गीर्यन्ते । अस्माभिरेव तेषां सम्यक् प्रत्याख्यानं करणीयम् । अन्यथा किं नः संस्कृतशिक्षया ।

यथा च पाश्चात्यैः पण्डितैः सममस्माकम् अन्योन्यं मतादानप्रदानार्थम् आङ्गलभाषाधिगन्तव्या, तथा भारतीयपण्डितानां निजेषु परस्परं तदर्थं कश्चिदुपायः कर्तव्यः । कदाचिद् हि कर्णाटवासी कश्चित् पण्डितः संस्कृतसाहित्यादिविषये किञ्चित् कथयेच्चेत्, वङ्गवासिनां विदुषां श्रुतिपथमुपगन्तुं नैतत्प्रभवेत् । यदि नाम जनाः उक्तं तत्वं नाकर्णयेयुः, तर्हि तद्वक्तुस्तादृशातिगुरुश्रमाङ्गीकारो निरर्थक एवेति वक्तव्यम् । किञ्च यदेकेन, बहुना कालेन महता च श्रमेण चिन्तयित्वा निर्णीतम्, तस्यैव हि निर्णयार्थं प्रदेशान्तरस्थः कश्चिन्मुधैव तावन्तं कालं तावन्तं श्रममङ्गीकुर्यादिति देशसमाजयोर्महती हानिः । अतोऽभिनवपुस्तकपाठे संस्कृतविदुषाम् मिथ्यातिपाण्डित्याभिमानमूलकमौदासीन्यं दृश्यते, तत्सर्वथा परिहरणीयम् । नहि सर्वः सर्वं वेत्ति । कियत्स्वल्पतरमेकैकस्य मानवस्य ज्ञानमिति रहसि विचिंत्य द्रष्टव्यम् ॥

नवनवग्रन्थस्येव मासिकादिपत्रिकायाः पठनमपि युक्ततरं मन्यामहे। अत्र हि स्वल्पेन समयेन श्रमेण च विविधानि वस्तूनि ज्ञातुं शक्यन्ते। एकदेशस्थितस्य विदुषो देशान्तरस्थितैर्विद्वद्भिः परिचयोत्पादात् परस्परं सौहृद्यमुपजायते। एकं च तत्वं सम्यक् सिद्धान्तयितुं बहूनां

पण्डितानां मतसंवादस्य सौकर्यं लभ्यते। अनधीतस्यानेकस्य विषयस्यास्वादनरसश्चाधिगन्तुं शक्यते। नायं पत्रिकाया गुणवर्णनार्थमस्माकमारम्भः। स्वयमेवापक्षपातिना हृदयेन श्रीमद्भिस्तदालोच्य दृश्यताम्। सन्ति हि प्राचीना भूयांसो निबंधाः, तत्पाठस्यैवावकाशो न लभ्यते, न च पत्रिकासु तेभ्योऽधिकतरं किञ्चिल्लिख्यते इति किं ताभ्योऽस्माकमुपादेयं सम्भवतीति रिक्तं वचो वादिनाम्। सर्वथापि प्राचीनग्रन्थाधिकं किञ्चित् पत्रिकासु नास्तीति नाङ्गीकर्तुं शक्यते। किञ्च शास्त्रपारावारेषु तत्र तत्र विकीर्णानां रत्नानां विविधैः प्रकारैः सौलभ्यसम्पादनार्थम् एकत्रसंदर्भणेन मालिकां विरचय्य रसिकेभ्य उपहरणमेव तासामन्यतमं प्रधानं प्रयोजनम्। एतदेव हि साम्प्रतं विशेषेणापेक्ष्यते। अन्यच्च नहि किञ्चिद्दृष्टेऽनुपपन्नं नाम। पुरःस्थिते पञ्चाङ्गेऽद्य मङ्गलवारो न वेति विचारायासस्वीकारस्य किं प्रयोजनमिति न बुध्यामहे॥

राजकीयशिक्षाव्यवस्थापनेन नापेक्षिता शिक्षाधिगम्यत इति सर्वत्रैव शृणुमः। वस्तुतस्त्वमपि च तथैव। परन्तु पृच्छामः संस्कृतशिक्षा किमिति साम्प्रतं चारुतरं न सम्पद्यत इति। यथा खलु आङ्गलशिक्षाया भारो राजहस्तस्थितः, न तथा संस्कृतशिक्षायाः। स्वयमेव हि राजसाहाय्यनिरपेक्षाः विद्वांसो विद्यार्थिनोऽध्यापयन्ति। राजकीयपरीक्षाविधिरपि प्रायेण ब्राह्मणपण्डितैरेव विविच्य क्रियते। तेषामेव हि तत्र परं प्रभुत्वम्। परन्तु दुर्लभास्ते विद्यार्थिनः, ये वस्तुतः 'शिक्षित'-पदवाच्यत्वं गच्छेयुः। साम्प्रतं परीक्षाविधिषु तथा व्यवस्था दृश्यते, येन वैदिकसाहित्यपरिचयस्य लेशोऽपि नाधिगम्येत। केवलमर्वाचीनग्रन्थबद्धदृष्टीनां विद्यार्थिनां प्राचीननिबन्धालोचने प्रवृत्तेरुद्बोधने न किञ्चित्परीक्षाविधिषु दृश्यते। न च किञ्चिद् विलोक्यते, येन ऐतिहासिकदृष्ट्या शास्त्रालोचनं सम्पद्येत। पाश्चात्यैर्भारतस्य विविधमितिवृत्तं प्रणीतम्। परन्तु न तत्सर्वमपि समीचीनमिति सुप्रथितेभ्यो भारतीयेतिवृत्तविद्भ्योऽवगच्छामः। ये

हि भारतीयार्थशास्त्रेषु निष्णाततराः, त एव तादृशं ग्रन्थं रचयितु-मर्हन्तीति तैरुच्यते । तच्च संस्कृतालोचनाय नियुक्तनिखिलायुर्भिः श्रीमद्भिर्ब्राह्मणपण्डितैरेव सुष्ठुतरं सम्भाव्यम् । अतो विद्यार्थिनाम् एतद्विषयप्रवृत्त्युद्रेकार्थं यतनीयम् ।

स्थानस्थानेषु आङ्गलशिक्षितानाम् उच्चतरशिक्षासौकर्यार्थं यथा 'गवेषणावृत्तयः' ( Research Scholarship ) सन्ति, संस्कृताध्येतृणा-न्तु न तथा किञ्चिद् दृश्यते । तादृशवृत्तिव्यवस्थापनेन महीयानु-पकारो भवतीति सर्व एव मनाग् विविच्य ज्ञातुं शक्नुवन्तीति कृतं तत्प्रतिपादनेन । सहृदयैरेतद्विषयेऽवश्यं प्रयतनीयमिति सनिर्बन्धं ब्रूमः । अस्मन्मित्रगोष्ठ्या अन्यतमेन मित्रेण श्रीमता माननीयेन ( Honourable ) माधवलालमहोदयेन लक्षरूप्यकाणि संस्कृतशिक्षार्थं दित्सितानि । तत्र षष्टिसहस्ररूप्यकैः षड् गवेषणावृत्तयः ( यासामे-कैका प्रतिमासं विंशतिरूप्यकपरिमिता भवेत् ) स्थाप्येरन्निति बहु-भिरेव ज्ञायते । माधवलालमहोदयानां तदिदं कृत्यं कस्य नाम सेवनीयसंस्कृतस्य धनिजनस्य नानुकरणीयम् । किन्त्वत्र इदं किञ्चि-दस्माभिर्वक्तुमिष्यते यत्तैः रूप्यकैः प्रतिमासं षष्टिरूप्यकमिता द्वे एव वृत्ती स्थाप्येतामिति ।

———:o:———

## काव्यतत्त्वावली ।

ननु काव्यं किं, कस्माद्वा तस्य उत्पत्तिः, काव्यस्य प्रयोजनं वा किम् इत्यादिषु वक्तव्येषु प्रथमतः काव्यस्य लक्ष्याणि निरूप्यन्ते । लक्ष्यज्ञानं विना हि लक्षणज्ञानं दुष्करं भवति ।

काव्यस्य लक्ष्याणि यथा-वेदाः, उपनिषदः, पुराणानि, इतिहासाः, स्मृतिशास्त्राणि, दर्शनशास्त्राणि, वैद्यकानि, महाकाव्यानि, खण्डका-व्यानि, विरुदावली * स्तोत्राणि, कथाः, आख्यायिकाः ( प्राचांमते )

*विरुदावली गद्यपद्यमयं राजादीनां स्तोत्रम् ।

प्रहेलिकाः अन्येच तादृशा ग्रन्थाः। एतानि श्रव्यकाव्यानि। दृश्य-काव्यानि च नाटकप्रकरणादीनि दशरूपकाणि। नाटिकादीनि च अष्टादश उपरूपकाणि। तेषामभिनयसम्बन्धात् दृश्यत्वम्। तथा-हि "भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः, आङ्गिको वाचिक-श्चैवमाहार्यः सात्त्विकस्तथा" इति अभिनयानां मध्येऽपि वाचिका-भिनयः श्रव्यकाव्यम् आङ्गिकाहार्यसात्त्विकास्तु दृश्यकाव्यान्येव। यथा अभिज्ञानशकुन्तले—"विदूषकः"। भोदु, अङ्गभङ्गवि-अलो भविअ चिट्ठिस्सं। इति दण्डकाष्ठमवलम्ब्य स्थितः"। अत्र दण्डकाष्ठमवलम्ब्य अङ्गभङ्गविशेषेण भग्नाङ्गवदवस्थानं दृश्य-काव्यम्। तस्य तादृश मवस्थानं दृष्ट्वा हि विदूषकस्य अङ्गानि भग्नानि इति प्रतीयते सभ्यैः, एवं "राजा शरसन्धानं नाटयति" इति राज्ञः शरसन्धानानुकरणं दृश्यकाव्यम्। एवं "शकुन्तला शृङ्गारलज्जां नाट-यति" इत्यत्र तादृशलज्जाविशेषस्यानुकरणं दृश्यकाव्यम्। एवं रोद-नस्यानुकरणं वाष्पमोचनादिकं दृश्यकाव्यम्। नृत्यादिकमपि दृश्य-काव्यम्। आहार्योऽभिनयस्तु राजादीनामनुकरणाय छत्रचामराद्या-हरणम्, मुकुटकुण्डलादिधारणञ्च। सात्त्विकोऽभिनयः पुनः ऊरु-स्तम्भ-कम्पधर्मादीनामनुकरणं, यथा अभिज्ञानशाकुन्तले-शकुन्तला, "उरुत्थम्भ विब्भलम्हि संवुत्ता" इत्यत्र ऊरुस्तम्भस्य अनुकरणम्। वस्तुतो नाटकादिषु यावत्योऽनुकरणक्रियाः सन्ति तावत्यः सर्वा एव दृश्यकाव्यानि, अतएव कश्चिद् यदि पंगु विडम्ब्य गच्छति तदा तम-वलोक्य पूर्ववङ्गनिवासिनः "अयमुत्तमं काव्यं करोतीति" वदन्ति। अतो दृश्यश्रव्याणां द्विविधानामेव काव्यानां संग्राहक काव्यलक्षणं कार्यम्। साहित्यदर्पणे तु पूर्वेषां लक्षणानि खण्डयित्वा यत् "वाक्यं रसात्मकं काव्यम्" इति लक्षणं कृतम्, तन्न समीचीनम्, अनुकरण-क्रियासु दृश्यकाव्येषु तस्य अव्याप्तेः। आङ्गिकाहार्यसात्त्विकाभिन-यास्तु न वाक्यानि; अत स्तेषां वाक्यत्वाभावात् लक्षणस्य अव्याप्ति-रेव। अतएव च काव्यप्रकाशकारमम्मटभट्टादयः प्राञ्चः "शब्दार्थौ

काव्यम्" इति लक्षणं चक्रुः। तत्र शब्दार्थयोर्मध्ये रामायण-रघुवंशादीनि शब्दात्मकानि श्रव्यकाव्यानि। 'अङ्गभङ्ग विशेष-शरसन्धानादिका अनुकरणक्रियास्तु अर्थात्मकानि दृश्यकाव्यानि। ताः क्रिया हि "अङ्गभङ्गविकलोभूत्वा स्थास्यामि" "शरसन्धानं नाटयति" इत्यादीनाम् वाक्यानां अभिधेया अर्थाः। तथा च "तददोषौ शब्दार्थौ सगुणावनलङ्कृतीपुनः क्वापि" इति लक्षणमेव समीचीनम्। अत्र लक्षणे यो यो दोषः साहित्यदर्पणकारेण आरोपितः स सर्व एव प्रतिसमाहितष्टीकाकारै रिति स विचारोऽत्र न क्रियते।

वेदाः काव्यानीति यदुक्तं तत्र "तेने ब्रह्म हृदा य आदिकवये" इति श्रीमद्भागवतोक्तः प्रथमश्लोक एव प्रमाणम्। तत्र हि आदिकविशब्दस्य वाच्यो ब्रह्मा, वेदात्मकादिकाव्यकर्त्तृतयैव तस्यादिकवित्वम्। एवं "एकोऽभून्नलिनात्ततश्च पुलिनात् वल्मीकतश्चापर" इत्यत्र नलिनादेकः कविरभूदिति यदुक्तं, तस्य प्रतिपाद्यो ब्रह्मा, सहि पद्मयोनिः। किञ्च वेदेषु अग्न्यादीनां स्तोत्राणि पुरुषसूक्तानि च सर्वाण्येव उत्कृष्टानि काव्यानि। अन्यञ्च—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासोअस्य।
त्रिधाबद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश॥

इति यजुः माध्यन्दिन शाखा १७ अ० ११ सू.

अस्य वाच्योर्थः कश्चिद्वृषः, तस्य चत्वारि शृङ्गाणि त्रयः पादाः, द्वे शिरसी, सप्तहस्ताः। स च त्रिधा बद्धः रोरवीति पौनः पुन्येन अतिशयेन वा रौति, स महान् देवः मर्त्यलोकमाविवेशेति; अद्भुतोऽयं वृषभइत्यर्थः। परन्तु अस्य व्यङ्ग्या अर्था बहवः सन्ति तेषु एकः चतुः शृङ्गो यज्ञः वृषभरूपः। अपरो व्यङ्ग्यार्थः शब्दग्रामः, एवमन्योऽपि भाष्यकारोऽन्यं व्यङ्ग्यार्थं व्याख्यातवान्, इत्यतो ध्वनिकाव्यमिदमुत्तमम्। तथाहि वाच्यार्थापेक्षया अस्य व्यङ्ग्यार्थस्यैव अधिकचमत्कारजनकत्वमिति।

एवमुपनिषदां च काव्यत्वं, यथा "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः। इति" अस्य वाच्योऽर्थः काचित् छागस्त्री, द्वौ छागौ च। व्यङ्ग्यार्थस्तु प्रकृतिर्जीवात्मा, परमात्मा च इति व्यङ्ग्यार्थस्य अधिकचमत्कारित्वात् उत्तमं ध्वनिकाव्यमिदम्। तथाचोक्तम् काव्यप्रकाशे-"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्यात् ध्वनिर्बुधैः कथितः" इति।

पुराणानां काव्यत्वं नानारसनिरन्तरतया सुव्यक्तम्। महाभारतादेरितिहासस्य काव्यत्वम् महाभारते एव उक्तं। यथा व्यासो ब्रह्माणमुवाच—

"कृतं मयेदं भगवन् काव्यं परमपूजितम्"। इति

अथ ब्रह्मोवाच—"त्वया च काव्यमितिप्रोक्तं तस्मात्काव्यं भविष्यति इत्यादि"

रामायणस्य काव्यत्वन्तु सर्ववादिसम्मतमेव। लौकिककाव्यानां मध्ये आदिकाव्यं रामायणमादिकविश्च लौकिककवीनां मध्ये वाल्मीकिः। वेदकर्त्ता ब्रह्मा तु अलौकिककवीनां मध्ये आदिकविरिति विशेषः।

रघुवंशादीनां काव्यत्वे न कस्यचिद्विप्रतिपत्तिः। प्रहेलिकानां काव्यत्वं पुनराचार्यदण्डिप्रभृतीनां प्राचां सम्मतं, तासां हि व्यंग्योऽर्थः चमत्कारातिशयजनकः। यथा—

"यएवादौ स एवान्ते मध्ये भवति मध्यमः।
अस्यार्थं यो न जानाति तन्मुखे तद् ददाम्यहम्"॥

इत्यस्याः प्रहेलिकाया वाच्योऽर्थो दुर्बोधः। व्यङ्ग्योऽर्थस्तु 'य'कार एवादौ 'स'कार एवान्ते मध्येतु 'भवति'शब्दस्य मध्यमो 'व'कार इति 'यवस' इति, यवसशब्दस्य अर्थः शुष्कं तृणम्। इत्यतः प्रहेलिकानां काव्यत्वम् प्राचां सहृदयानां सम्मतम्। नव्याः साहित्यदर्पणकारादयस्तु व्यङ्ग्यस्य अतिगूढत्वात् प्रहेलिकानां काव्यत्वं न मन्यन्ते।

प्रहेलिकानां काव्यत्वमुचित नवेति विचारयन्तु आधुनिकाः सचेतसः। अलं तद्विचारेण। अस्माकं मते तु काव्यत्वस्वीकार एव उचितः इति।

मन्वादीनां स्मृतिशास्त्राणामपि काव्यत्वं दृश्यते ।

यथा—"दृष्टिपूतं क्षिपेत्पाद वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद् वाच्चं मनःपूतंसमाचरेत् ॥"

इत्यादौ समुच्चयालङ्कारः प्रसादगुणश्चास्ति । काव्यस्य मुख्यप्रयोजनमुपदेशोऽपि विद्यत एवेति अस्य काव्यत्वम्। नन्वत्र कोऽपि रसो नास्तीति कथं काव्यत्वम् रसवत एवं शब्दस्य अर्थस्य वा काव्यत्वाङ्गीकारादिति चेन्न । रसवत्काव्यसादृश्यात् गुणालंकारादिसत्वाच्च तस्य गौणकाव्यत्वंहि साहित्यदर्पणकारादिभिरपि स्वीकृतमेव ॥

दर्शनानामपि काव्यत्वं स्वीकुर्मः तथाहि तत्र परमात्मविषयक-भक्तिभावो रसोऽस्ति, उपपत्तिसादृश्यादीनां सत्वाच्च काव्यलिङ्गोपमादयोऽलङ्कारा अपि सन्तीति तेषां काव्यत्वम् ॥

किं बहुना यत्र शास्त्रे काव्यगन्धोऽपि नास्ति तच्छास्त्रं कस्यचिदप्यादरणीयं न भवतीति कोऽपि तदध्ययनाय् उन्मुखो न दृश्यते ॥

वैद्यकेऽपि कवित्वं दृश्यते, यथा—"वयस्थानागरासंगादङ्गानां हन्ति वेदना" मित्यत्र वयस्था हरीतकी, नागरः शुण्ठी, तस्या आसङ्गात् हरीतकी अङ्गानां व्यथां हन्तीति वाच्योऽर्थः। व्यङ्ग्यार्थस्तु, 'वयस्था' यौवनस्था कामिनी 'नागरस्य' नगरवासिनो जनस्य 'आसङ्गात्' आसक्त्या अंगानां 'वेदनां' कामव्यथां हन्तीति। नन्वत्र वाच्यार्थेन व्यङ्ग्यार्थस्य सम्बन्धविरहात् कवेरसम्बद्धप्रलापित्वं प्रसज्येत इति चेन्न, असम्बद्धं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोः उपमानोपमेयभावसम्बन्धः कल्पनीय इत्यालङ्कारिकोक्त्या प्राकरणिकमर्थमुपमेयं अप्राकरणिकञ्च अर्थम् उपमानम्

कल्पयित्वा वाच्यार्थव्यङ्ग्यार्थयोरुपमेयोपमानभावसम्बन्धो हि ज्ञातव्यः यथा नागरस्य यूनः अससङ्गात् यौवनस्था कामिनी अङ्गानां कामव्यथां हन्ति तथा शुण्ठ्यासङ्गात् हरीतकी अंगानां वेदनां हन्तीति काव्यार्थः कर्तव्य इति न कश्चिद्दोषः असम्बद्धप्रलापित्वं वा। वैद्यके तत्र तत्र कवित्वमस्तीति वैद्यानां कविराजख्यातिरिति मन्यामहे वयम् ॥

अथ कस्मात् काव्यस्य उत्पत्तिरिति काव्यस्य हेतुरुच्यते। अत्रोक्तं काव्यप्रकाशे—

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥" इति।

तत्र शक्तिः कवित्वबीजभूतः संस्कारविशेषः। स च संस्कारः पूर्वजन्मार्जितपुण्यविशेषजन्यो भावनाख्यः। तादृशीं शक्तिं विना काव्यं नोत्पद्येत, उत्पन्नमपि वा उपहसनीयं भवेत्। तथाहि अशक्तिकृतस्य "ग्रथ्नामि काव्यशशिनं विततार्थरश्मि' मित्यादेर्हि उपमानोपमेयभावो न सङ्गच्छते। तथाहि लोको यथा शशिनं ग्रथ्नाति, तथा अहं काव्यं ग्रथ्नामीत्ययमर्थो न समीचीनः। नहि कोऽपि शशिनं ग्रथ्नातीति उपमानमेव असम्भव्यम् ॥

तथा लोकशास्त्रकाव्याद्यवेक्षणात् निपुणता। लोकस्य स्थावरजंगमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोषकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां, काव्यानाञ्च महाकविकर्मणाम् आदि ग्रहणात् इतिहासादीनाञ्च अवेक्षणात् विमर्शनात् व्युत्पत्तिः। तथा काव्यज्ञशिक्षयाभ्यासः। काव्यं कर्त्तुं विचारयितुञ्च ये जानन्ति तदुपदेशेन पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिता हेतुः। न तु व्यस्ता हेतवः। एवञ्च पुष्पादीनि मनोहराणि वस्तूनि, अरण्यादीनि भयानकानि, समुद्रादीनि गम्भीराणि, पर्वतादीनि, विशालानि वा वस्तूनि दृष्ट्वा शक्तिमतामेव कवीनां काव्यनि-

र्माणे प्रवृत्तिरुदेति न तु शक्तिं विनापि यस्य कस्यचित् प्रवृत्तिर्भवति तत्र कारणं मनोहराणि पुष्पाणि दृष्ट्वा पुष्पेषु काचिद् रतिरुदेति, साच रतिः मनसः प्रवणायितम्। उक्तं हि साहित्यदर्पणे—"रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायित मिति।" रतिरनुरागविशेष इति फलितोऽर्थः। साच रतिस्तस्य वस्तुन उपभोगेभिलाषं जनयति सचाभिलाषः काम इत्युच्यते। यस्य मनसि यद् वस्तु आलम्ब्य रति रनुराग उदेति तस्यैव मनसि तद्‌वस्तु विषयीकृत्य काम उदेतीत्यतो भारतवर्षीयाणां मते रतिकामयोः सहचरत्वं, स्त्रीपुंसयो रिव दम्पतिभावश्च परिकल्पितः। इंलण्डादिदेशवासिनां मते तु रतिकामयोः मातृपुत्रभावः, रतौ सत्यां हि काम उत्पद्यते इत्यतो रतिजन्यः कामो रतेः पुत्र इति कल्पितः। पुष्पादीनि मनोहराणि वस्तूनि तु कामस्य उद्दीपनानि इति तानि उद्दीपनविभावा उच्यन्ते शृङ्गाररसस्य। अतस्तद्दर्शने कवीनां मनःसु ते ते भावा जायन्ते। पत्रमरण्यादीनि भयानकानि वस्तूनि दृष्ट्वा भयमुदेति इत्यतस्तानि भयानकरसस्य आलम्बनविभावाः। समुद्रादीनि गम्भीराणि वस्तूनि दृष्ट्वा गाम्भीर्यभाव उदेति इत्यतः स भावोऽपि यदि उद्रिक्तः स्यात् तर्हि सोऽपि रसतुल्य एव चमत्कार जनकः। रसो हि उपलक्षणम्। रसशब्देन रसभावरसाभासभावाभासादयोऽपि उपलक्ष्यन्ते। अतएव इंलंडीयानामालङ्कारिकाणां मते भाव एव काव्यस्य आत्मा। "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। वीभत्सोऽथाद्भुतश्चेति" अष्टौरसा अपि भावविशेषा एव। अतस्तेऽपि इंलंडीयानां मते भावा एव उच्यन्ते। भारतवर्षीया आलङ्कारिकास्तु भावविशेषानपि तानष्टौ पृथक् कृत्वा रसनाम्ना व्यपदिशन्ति। वस्तुतस्तु तेऽपि भावा एव। परन्तु अन्येभ्यो भावेभ्यः शृङ्गारादिभावानामष्टानां प्रवलतया रसनाम्ना तान् निर्दिशन्ति। पर्यालोचने तु कविशक्तेस्तारतम्यादेव भावानां प्रवलत्वं दुर्वलत्वञ्च जायते, न तु स्वभावतस्तेषां केषाञ्चित्प्रवलत्वम्

अन्येषाञ्च दुर्बलत्वम् । तथाहि कदाचित् शृङ्गारादिभ्योऽष्टभ्यो रसेभ्योऽपि दैन्यादिव्यभिचारिभावस्य प्रबलत्वं दृश्यते, अतो यः कश्चिदेव भावः कविशक्तेस्तारतम्यात् उत्कृष्टतमः, उत्कृष्टतरः, उत्कृष्टः, अपकृष्टः, अपकृष्टतरः, अपकृष्टतमो वा भवितु महंति, नतु स्वभावात् । अस्मादेव हेतोः केषाञ्चिन्मतेऽष्टौ रसाः, अन्येषां मते शान्तेन सह नवैव रसाः, इतरेषाञ्च मते वात्सल्येन सह दश रसाः । वैष्णवानां मते पुनश्चतुःषष्टीरसाः । इत्थं रसानां संख्यातारतम्यं च दृश्यते । भावा अपि अलङ्कारशास्त्रे विभावानुभावव्यभिचारिभावत्वेन ये ये गणिता स्ततोऽपि अधिकाः सम्भवन्ति । तथाहि गाम्भीर्यभावः विभावेषु अनुभावेषु व्यभिचारिभावेषु वा यद्यपि न गणित स्तथापि कवर्वर्णनाचातुर्येण सोऽपि भावः शृङ्गारादिकान् रसानपि कदाचिद् अतिशयितु शक्नुयात् तदा गाम्भीर्यभावोऽपि रसवत् काव्यस्य आत्मा भवेत् । अतएवोक्त " न भावहीनोऽस्ति रसो, न भावो रसवर्जितः परस्परकृता सिद्धिरनयो रसभावयोः " इति । यत्र तु रसापेक्षया भावस्य अधिकतरचमत्कारित्वं तत्र भावस्यैव रसवत् मुख्यत्वमङ्गित्वञ्च, रसस्य पुनर्भाववत् गौणत्वमङ्गत्वञ्च, तथा—

" क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंशुकान्तम्,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवोवः शराग्निः ॥ "

इत्यत्र भगवति महादेवे भक्तिरूपो भावः मुख्योऽङ्गीच, तस्यकाव्यस्य ध्वनित्वव्यपदेशहेतुश्च । 'कामीवेति' शराग्नौ कामिसादृश्योद्भावनाच्च आयातः शृङ्गारः पुनर्गौणः, अङ्गश्च व्यभिचारिभावश्चेति अन्यत्र यः शृङ्गारो रसत्वेन व्यपदिश्यते स एवात्र भावत्वेन व्यपदिष्टः । तथाचोक्त साहित्यदर्पणे—" रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः " इति । सुतरां रसोऽपि कदाचिद् भावो भवति,

भावोऽपि कदाचिद् रस्यमानतया रसो भवतीति पर्यालोचने रसभावयो र्न पार्थक्यम् ॥

कविना वर्णनीयं वस्तु पुष्पादिवत् साधारणं भवतु तथापि सर्वमेव कवे भावोदयस्य कारणं भवति । तथाहि महाकविना कालिदासेन साधारणस्य घटस्यापि वर्णनायामसाधारणो भावविशेष उद्भावितः, यथा—

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः,
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहानलः ।
यत् कान्ताकुचपार्श्वबाहुलतिकाहिल्लोललीलासुखं,
लब्धं कुम्भवर त्वया, नहि सुखं दुःखै र्विना लभ्यते ॥

इत्यत्र काव्ये स्थावरस्यापि सुखदुःखानभिज्ञस्यापि अचेतनस्यापि च घटस्य या अवस्था कविना उद्भाविता, सा अवस्था सर्वेषां लोकानां विशेषतो यूनां कामिनामतीव कमनीया । इत्यतः कारणादेव लोकानां प्रार्थनीयया अवस्थया सह घटस्य तामवस्थां सदृशीकृत्य कवि-रवर्णयदिति काव्यार्थस्य सद्य एव हृदयग्राहित्वं जातम् ।

रसास्वादोहि लोकानां मनोभावेन सह काव्यार्थस्य सम्भेदात् ( सम्मेलनात् ) आत्मन आनन्दोदयः । उक्तं हि " स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भव इति " । यथा गङ्गायमुनयोरिव द्वयोर्नद्योः द्वौ प्रवाहौ क्वचित् सम्भिद्य ( मिथः सङ्गत्य ) एकप्रवाहात्मकौ भवतः, एकमेव नदीभावञ्च गच्छतः, तथा काव्यश्रोतृमनोभावः काव्यस्य भावश्च, द्वावपि भावौ परस्परं यदि सङ्गतौ भवतस्तदा जायमानः परमानन्द एव रसास्वाद इति कथ्यते । प्रकृते च कयाचित् सुन्दर्य्या कुचपार्श्वे बाहुलतया गृहीतकण्ठस्य घटस्य दोलनलीलां दृष्ट्वा तादृशमेव कण्ठग्रहमात्मनस्तया क्रियमाणं सर्वे कामिन इच्छन्ति, इत्यतः कविना घटस्य पुरुषस्येव साऽवस्था वर्णिताऽभूत् । अतएव तस्य काव्यस्य भावेन लोकानां मनोभावो मिलति, मेलनाच्च परमानन्द उत्पद्यते ।

वस्तुनः तं तं भावं कविर्यदुद्भावयति तत् खलु कविशक्तेरेव विस्फूर्जितं, शक्तिजन्या प्रतिभा हि तत्तद्भावोद्भावनी । कविरेव स्वशक्त्या स्वप्रतिभया वस्तुनस्तां तामवस्थाम् उद्भाव्य तया अवस्थया सह लोकानां मनोगतं भावम् ऐक्यं नयति ॥

इदानीं काव्यानामुत्कर्षापकर्षयोः हेतुरुच्यते । काव्यस्य प्रतिपाद्योऽर्थो द्विविधो भवति । एकविधः स्वतःसम्भवी अर्थः । अन्यविधश्च प्रौढोक्तिसिद्धोऽर्थः । योऽर्थः कविना स्वप्रतिभया परिकल्पितोऽपि स्वभावतः सत्यवत् प्रतीयते, सोऽर्थः स्वतः सम्भवीत्युच्यते । यथा महाभारते शकुन्तलोपाख्याने दुष्मन्तः गान्धर्वेण विवाहेन शकुन्तलां परिणीय, 'तां पित्रालय एव स्थापयित्वा राजधानीं' गत्वा, अन्यासु अन्तःपुरिकासु आसक्तः शकुन्तलां विसस्मार । शकुन्तला तु ऊढापि पञ्च वत्सरान् पित्रालय एव यापयित्वा प्रसूतेन पुत्रेण सह पञ्चवर्षानन्तरं दुष्मन्तस्य समीपं जगाम । ततो राजनि विवाहमनङ्गीकुर्वति शापप्रदानस्य भयं दर्शयित्वा राजानं स्वीकारयामास । इत्येव मूलप्रस्तावः । महाकविः कालिदासः पुन र्दुष्मन्तस्य शकुन्तलापरिणयम् अन्यथा कल्पयामास । तथाहि शकुन्तला ऊढा सती राजनि राजधानीं गते पत्युर्दुष्मन्तस्य ध्याने एकाग्रमनाः सती अतिकोपनं तपस्विनं दुर्वाससमृषिम् "अयमहम् भोः" इत्युक्तवन्तमप्यतिथिं न शुश्राव । इत्यतः स ऋषिः कुपितः "यं चिन्तयन्ती मामभ्यागतमपि न वेत्सि, स त्वया प्रतिबोधितोऽपि त्वां न स्मरिष्यति" इति शकुन्तलां शशाप । अथ शकुन्तलायाः सखी तच्छापवचनं श्रुत्वा तमृषिमनुनीय प्रसादयामास । तत ऋषिरुवाच "यदि किञ्चिदभिज्ञानं शकुन्तला दर्शयितुं शक्नुयात्तर्हि स शकुन्तलां स्मरेद्" इत्युक्त्वा शापान्तं चकार । सखी च शकुन्तलाया हस्ते राजदत्तमङ्गुरीयकमस्ति तदेव अभिज्ञानं भवेदिति निश्चित्य निर्वृतमना अतिष्ठत् । अथ शकुन्तलायाः पिता कण्वमुनिः प्रवासात् प्रतिनिवृत्य सर्वं ज्ञात्वा

अन्तर्वत्नीं शकुन्तलां पत्युर्गृहं प्रेषयामास। शकुन्तलापि पथि गच्छन्ती गङ्गायाः शचीतीर्थे सलिलं वन्दमाना जले प्रभ्रष्टमपि अंगुरीयकं न बुबुधे। ततश्च राजा शकुन्तलां प्रत्यादिदेश। अथ राजधान्या निष्क्रान्ता सा उच्चैः क्रन्दन्ती मात्रा मेनकया स्वर्गलोकं नीता मारीचस्य देवगुरोः सन्निधानेऽतिष्ठत्। तच्चांगुरीयकं केनचिद् रोहितमत्स्येन ग्रस्तमभूत्। सोऽपि मत्स्यः केनचिन्मत्स्यजीविना कैवर्तेन धृत्वा विक्रयार्थं यावत् खण्डशः कल्प्यते तावत्तस्योदरे महारत्नभासुरमंगुरीयं लब्धम्। अथ स तदंगुरीयकं नगरे विक्रेतुं दर्शयन् राजकीयेन रक्षिपुरुषेण धृतः। अथ राजसमीपं नीतोऽङ्गुरीयकमादाय विना दण्डं राज्ञा मुक्तः पुरस्कारेण च परितोषितः। ततश्च तदंगुरीयकं दृष्ट्वैव राजा शकुन्तलाया विवाहादिकं सर्वं वृत्त सस्मार। इत्येतावान् सर्वं पदार्थः कालिदासेन परिकल्पितोऽपि लोके सम्भवपर एव प्रतीयते इत्यतः सोऽयमर्थः स्वतःसम्भवी। यदि कश्चिद् अभिज्ञानशकुन्तलनाटकस्य मूलं महाभारतीयं शकुन्तलोपाख्यानमदृष्ट्वा तन्नाटकमेव वाचयति तदा स एतावन्तमर्थं परिकल्पितत्वेन लक्षयितुमपि न शक्नुयादिति वयं मन्यामहे। एतादृशोऽर्थः स्वतः स्वभावतो लोके सम्भवतीति स्वतः सम्भवीत्युच्यते। स्वतः सम्भविनोऽर्थस्य परिकल्पनं काव्यस्य उत्कर्षबीजं भवति। तत्र लोकानां विश्वासेन काव्यस्य असत्यता प्रतीति र्हि निवार्यते ॥

(क्रमशः)

श्रीमहेशचन्द्रतर्कचूडामणिः।

दिनाजपुरम्।

——:o:——

# "विवाहे कन्यापरीक्षा"*-परिशिष्टम् ।

अहो द्रढीयानसौ विवाहसम्बन्ध-ग्रन्थिरार्य्य जातीनां, यः खलु कालधर्म्मतां गतयोरपि दम्पत्योरशक्यच्छेदोऽशिथिलश्च सञ्जायते, विशेषतश्चार्य्यरमणी पुनः पुनर्जन्मनि तमेव पाणिग्राहमभिलषति, अनुतिष्ठति च तदर्थं धृतव्रता कठोरं तपो देवाराधनादिकञ्च ।

सत्येवंविधे विधाने, समीचीनं परीक्ष्यैव विधेयो विवाह-सम्बन्धः । येन हि जायापत्योरेकतरोऽपि न पश्चात्तप्येत प्रत्युत विमलं दाम्पत्यमानन्दं लभेतेति ।

ततो विशेषस्त्वेतावान्, ब्राह्मणमानवकानामुपनयनमिव, कुमारीणां विवाहएव वैदिकोमुख्यः संस्कारः । किमधिकं विवाह संस्कारादन्यत्र नास्त्यमूषां मुक्तिसम्भावनापि शतशतैरपि ब्रह्मचर्य्यादिभिर्नियमैरिति,

यथोक्तं—

"वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौवासो गृहार्थोऽग्निपरिष्क्रिया ॥"

(मनु० । २ । ६७)

प्राक्तनास्तु ऋषय स्त्रिकालज्ञा लोकहितैषिणः संसर्गात् पापादिदोषाः सह शारीरिकेनोष्मणा मानवेषु परस्परं व्यतिसंक्रमन्त इति सूक्ष्मं व्यवस्थापयामासुः , यथा—

प्रायश्चित्तविवेके छागलेयः

"आलापाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात् ।
सहशय्यासनाध्यायात् पापं संक्रमते नृणाम् ॥

तत्रैव देवलः—

---

*सोऽयं प्रबन्धः पत्रिकाया द्वितीयवर्षे पञ्चमसंख्यायां प्रकाशितः । ...त्र १२ पृ० पादटीकायां "तैत्तिरीय गृह्य सूत्रे" इत्यत्र "आपस्तम्बगृह्य सूत्रे" इति भवेत् । मि० प्र० स०

संलापस्पर्शनिःश्वास सहशय्याशनासनात्।
याजनाध्यापनाद् योनात् पापं संक्रमते नृणाम्॥

तत्रैव, पराशरः—

"आसनाच्छयनाद् यानाद् भाषणात सहभोजनात्।
संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि॥"

इत्थं साधारण्येनोक्ताः संसर्गदोषा विवाहे ऽपि नोपेक्षणीयाः। अतएव कस्याश्चित् शरीरे विषविशेषरूपः कोऽपिदोषः स्थितिमालभते नवा, येन खलु कन्याशरीरात् संक्रान्तेन दोषेण भर्त्ता पीड्येत म्रियेतैव वेत्यादि शास्त्रयुक्त्या परीक्षणीयम्। तत्रेयं परीक्षा—

तथाच स्मृतिः—

"धर्म्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः।
परीक्ष्यन्ते प्रयत्नेनपूर्व्वमेव करग्रहात्॥"
"रिपुक्षेत्रगतो तौतु लग्ने यदि शुभग्रहौ।
क्रूरस्तत्रगतो ऽप्येको भवेत् स्त्री विषकन्यका॥"
"भद्रातिथिर्यदाश्लेषा शतभिषाच कृत्तिका।
मन्दारर्विवारेषु भवेत् स्त्री विषकन्यका॥"

(इति रामदासकविवल्लभकृतज्योतिःसारार्णवे ६ष्ठ तरङ्गे)

अपरञ्च तत्रैव—

"त्रीणि यस्याः प्रलम्बानि ललाट मुदरं भगम्।
क्रमेण भक्षयेन्नारी श्वशुरं देवरं पतिम्॥
भूमिं न स्पृश्यते यस्या अङ्गुल्याच कनिष्ठया।
भर्त्तारं प्रथमं हन्याद् द्वितीयञ्चाभिनन्दति॥
यस्या मध्यं भवेद्दीर्घा सास्त्री पुरुषघातिनी।
भूमिं न स्पृश्यते ऽङ्गुल्या सापि हन्यात् पतित्रयं॥
प्रदेशिनी भवेद्दीर्घा सास्यात् सौभाग्यशालिनी।
ऊर्द्ध्वा यस्या भवेद्दीर्घा पतिं हन्ति चतुष्टयम्॥

लम्बोदरी स्थूलजङ्घा स्थूलनासाच या भवेत् ।
एतयोऽष्टौ म्रियेरन् सा नवमेतु प्रसीदति ॥
विरला दशना यस्याः कृष्णाक्षी कृष्णजिह्विका ।
भर्त्तारं प्रथमं हन्ति द्वितीयमपि विन्दति ॥
यस्या अत्युत्कटौपादौ विस्तृतञ्च मुखं भवेत् ।
उत्तरोष्ठे च लोमानि साशाघ्रं भक्षयेत् पतिं ॥"

(पञ्चमतरङ्गे)

अपिच शुभाशुभपरीक्षा गरुड़ पुराणे—

यस्या स्तु कुञ्चिताः केशा मुखञ्च परिमण्डलं ।
नाभिश्च दक्षिणावर्त्ता साकन्या कुलवर्द्धिनी ॥
याचकाञ्चनवर्णाभा रक्तहस्तसरोरुहा ।
सहस्राणान्तु नारीणां भवेत् सापि पतिव्रता ॥
वक्रकेशाच या कन्या मण्डलाक्षी च या भवेत् ।
भर्त्ताच म्रियते तस्या नियत दुःखभागिनी ॥
पूर्णचन्द्रमुखी कन्या बालसूर्य्यसमप्रभा ।
विशालनेत्रा विम्बोष्ठी सा कन्या लभते सुखं ॥
रेखाभिर्वहुभिः क्लेशं स्वल्पाभिर्धनहीनतां ।
रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां व्रजेत् ॥
अङ्कुशं कुण्डलं चक्रं यस्याः पाणितले भवेत् ।
पुत्रं प्रसूयते नारी नरेन्द्रं लभते पतिं ॥
यस्यास्तु रोमशौ पार्श्वौ रोमशौच पयोधरौ ।
उन्नतौ चाधरोष्ठौच क्षिप्रं मारयते पतिं ॥
यस्याः पाणितले रेखा प्राकार स्तोरणं भवेत् ।
अपिदासकुलजाता राज्ञीत्वमुपगच्छति ॥
उद्वृत्तकापिला यस्या रोमराजी निरन्तरं ।
अपिराजकुलेजाता दासीत्वमुपजायते ॥

यस्या अनामिकाङ्गुष्ठौ पृथिव्यां नैव तिष्ठतः ।
पतिं मारयते क्षिप्रं स्वातन्त्र्येणैव वर्त्तते ॥
यस्यागमन कालेतु भूमिकम्पः प्रजायते ।
पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥
चक्षुः स्नेहेन सौभाग्यं दन्तस्नेहेन भोजनं ।
त्वचः स्नेहेन शय्याञ्च पादस्नेहेन वाहनं ॥
स्निग्धोन्नतौ ताम्रनखौं नार्य्याश्च चरणौ शुभौ ।
मत्स्याङ्कुशाब्ज चिह्नौच चक्रलाङ्गल लक्षितौ ॥
अस्वेदिनौ मृदुतलौ प्रशस्तौ चरणौ स्त्रियाः ।
शुभेजङ्घे विरोमेच ऊरू करिकरोपमौ ॥
अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमं ॥
नाभिः प्रशस्ता गम्भीरा दक्षिणावर्त्तिका शुभा ।
अरोमा त्रिवली नार्य्या हृत्स्तनौ रोमवर्ज्जितौ ॥

( ६४ अध्याये )

अपिच मनौ—

"गुरुणानुमतः स्नात्वा समावृत्तो यथा विधि ।
उद्वहेत द्विजोभार्य्यां सवर्णां लक्षणान्वितां ॥
असपिण्डा च या मातुरसपिण्डाच या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ॥
महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसं ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥
नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीं ।
नालोमिकां नातिलोम्नीं न वाचाटां न पिङ्गलां ॥
नर्क्षवृक्ष नदीनाम्नीं नान्त्य पर्व्वत नामिकां ।
नपक्ष्यहि प्रेष्यनाम्नीं न च भीषणनामिकां ॥

अव्यङ्गाङ्गी सौम्यनाम्नीं हंसवारणगामिनीं।
तनुलोम केशदशनां मृदङ्गीमुद्वहेत् स्त्रियं ॥ (३।४—१०)

अपिच कृत्यचिन्तामणौ—

"नेत्रे यस्याः केकरे पिङ्गलेवा
स्याद् दुःशीलाश्यावलोलेक्षणाच।
कूपौ यस्या गण्डयोः सस्मिताया
निःसन्दिग्धां बन्धकीं तां वदन्ति ॥"

अपिच, यदा इन्द्रजिता शरजालेन बद्धौ राम-लक्ष्मणौ रक्षोभिः सीतासकाशे मृतत्वेन दर्शितौ, तदानीं त्रिजटया समास्वास्यमाना सा स्व वैधव्यलक्ष्म नास्तीति सनिर्व्वेदं व्यलपत्, यथा—वाल्मीकीये युद्धकाण्डे—

"वैधव्यं यान्ति यै नार्य्यो ऽलक्षणैर्भाग्यदुर्लभाः।
नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥
सत्य नामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः।
तान्यद्य निहते रामे वितथानि भवन्ति मे ॥
केशाः सूक्ष्माः समानीला भ्रुवौ चासंहते मम।
वृत्ते चारोमके जङ्घे दन्ताश्चाविरला मम ॥
शंखे नेत्रे करौ पादौ गुल्फावूरू समन्वितौ।
अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥
स्तनौ चाविरलौ पीनौ मामकौ मग्नचूचुकौ।
मग्ना चोत्सेधनी नाभिः पार्श्वोरस्कश्च मेचितं ॥
मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च।
प्रतिष्ठितां द्वादशभिर्म्मामूचुः शुभलक्षणां ॥
समग्रयवमच्छिद्रं पाणिपादश्च वर्णवत्।
मन्दस्मितेत्येव च मां कन्यालाक्षणिका विदुः ॥
अधिराज्ये ऽभिषेको मे ब्राह्मणैः पतिना सह।
कृतान्तकुशलै र्व्यक्तं तत् सर्व्वं वितथीकृतं ॥" (४८।७—१४)

अपिच समानगोत्रप्रवरादिविवाहे हठात् कृते तत्र शुक्ररजसोः पितृमातृकुलस्य सान्निध्यसम्बन्धात्, तथाविधभार्य्यायामुत्पन्नः सन्तानो विकृतप्रकृतिमापद्यते नृशसभावमधिकरोति, स्वधर्म्ममाचारञ्च परिहरति, दुस्तरां च रुजमाश्रयति स्वल्पमायुश्चभजते। अतो यथा समानगोत्रप्रवरादिदोषो न जातु घटेत, तथैव कन्यां परीक्ष्य विवहेत्।

तत्रैय सङ्क्षिप्ता परीक्षा—

सगोत्रा, अनवरवयस्का, समानप्रवरा, पित्रपेक्षया ऊर्द्ध्वतनषण्णां पुरुषाणां पुत्रकन्यासन्ततिपरम्परया प्रत्येकं सप्तमीपर्य्यन्ता, अधस्तनेऽपि तदपेक्षया सप्तमीपर्य्यन्ता पितृबन्ध्वपेक्षया ऊर्द्ध्वतनषण्णां प्रत्येकापेक्षया सप्तमीपर्य्यन्ता, अधस्तनेऽपि तदपेक्षया सप्तमीपर्य्यन्ता।

मातामहसमानोदका मातामहापेक्षया ऊर्द्ध्वतनचतुर्णां पुरुषाणां पुत्रकन्यासन्ततिपरम्परया प्रत्येकापेक्षया पञ्चमीपर्य्यन्ता, अधस्तने च तदपेक्षया पञ्चमीपर्य्यन्ता, मातृबन्ध्वपेक्षया ऊर्द्ध्वतनचतुर्णां पुरुषाणां प्रत्येकापेक्षया पञ्चमी पर्य्यन्ता, अधस्तन च तदपेक्षया पञ्चमीपर्य्यन्ता कन्या विवाहे परीक्ष्य परित्याज्या इति। विशेषस्तु उद्वाहतत्त्वादौ द्रष्टव्य इति। तथाच—

"समानगोत्रप्रवरां समुद्वाह्योपगम्य च।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते॥" इति

यदित्रा दैवदुर्विपाकवशाद् यथोक्तलक्षणपरीक्षाविप्लवाद्वा विसदृशलक्षणा कन्या विवाहादुरापतत् तन्महिम्नाच कन्या भर्त्तुः प्रतिकूला जारादिदोषदुष्टा वा शङ्क्येत तर्हि तद्दोषप्रशमनाय मुनिभिरुपदिष्टो विधिर्बृहदारण्यकोपनिषदादौ द्रष्टव्यः, तदुक्तेन प्रकारेण प्रतिकूलां वशीकुर्य्यात्, जारदोषाच्च निवर्त्तयेत्।

अपिच वरकन्ययोः राशिनक्षत्रादि समनुसृत्य वर्ण-गणराजयोटकद्विद्वादश-नवपञ्चमारिद्वादशमित्रद्विद्वादशषड़ष्टकमित्रषड़ष्टकारिषड़ष्टकादयः शुभाशुभयोगाः सम्यक् परीक्षितव्याः। तेनहि तयोः

शारीरमानसयोः समस्वभावे विवाहश्चतुर्वर्गमनुबध्नाति विषमभावेतु विवाहः परिवर्ज्जनीय इति ।

श्रूयते तत्र दाक्षिणात्यैरित्थं विचारो विवाहे नाद्रियते तत् परिणामफलमपि तैरेवानुभूयता मसाधु साधुवेति ।

वर्गगणादिमेलन शास्त्रन्तु दिनपञ्जिकातो ऽवगन्तव्यं नेहतदाश्रितं विस्तृतिभयादिति दिक् ॥

श्रीजयचन्द्रशर्म्मा ।

संस्कृतचन्द्रिका-सम्पादकः ।

———:o:———

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

संस्कृतविद्याकरभूतायां वाराणस्यां सार्वजनिकः संस्कृतपुस्तकालयो नास्तीत्यद्भुततरं वृत्तान्तं कान्यपि वर्षाणि मुक्तकण्ठमुच्चैस्तरामारटत्स्वस्मासु निपतित इवेदानीं सकरुणकटाक्षपातो भगवत्या भागधेयदेवतायाः । साम्प्रतमुत्प्रेक्षितं तस्यावश्यकत्वं वाराणसेयैर्महत्तरैः, विधीयते च तदर्थसाधनाय तैर्यथोचितं प्रयास इति को नाम संस्कृतपक्षपाती जनो नात्यन्तमानन्देत् ?

युवराजागमनेन अपरापरविषयेषु भारतस्य कीदृशं मङ्गलामङ्गलमुत्पन्नमिति निश्चिन्वन्तु ते राजनीतिवेत्तारः, न वयं तत्र किञ्चित् कथयितुं प्रभवामः, निरुद्धप्रसारा खल्वत्र तदनधिकारिणामस्माकं लेखनी । संस्कृतभाषायास्तु युवराजप्रसादेन महानुपकारः सम्पादित इति निगदामः । नायं महाभागो भिन्नो नाम युवराजात्, यं खलु निमित्तत्वेनासाद्य वाराणस्यां सुबृहत्संस्कृतपुस्तकालयः स्वल्पैरेवाहोभिः संस्कृतसेविनां परमानन्दमुत्पादयन् विराजिष्यते, युवराजसम्माननार्थम् इच्छयानिच्छया वा, भक्त्या भीत्या वा, शक्त्याशक्त्या वा पौरजानपदवर्गैर्व्ययितानां तावतां धनानामयमेवैको रमणीयः परिपाको यदेष संस्कृतपुस्तकालयो नामेति—यद्यप्यस्य सम्पत्तये भिन्न

एव द्रविणविनियोगोऽपेक्ष्यते । पुस्तकालयोऽयं युवराजस्मारकत्वेन स्थाप्येत । स्थानमस्य वर्त्तमानराजकीयसंस्कृतविद्यालयसीमान्तर्गतमेव भवेत् । तत्र पृथगेव गृहं निर्मीयेत । पुस्तकालयस्य निखिलव्ययनिर्वाहार्थं रूप्यकलक्षमपेक्षितम्, तत्र श्रीमता काशीनरेशेन त्रिंशत् सहस्राणि, श्रीमता माधवलालेन च पञ्चविंशतिः सहस्राणि प्रदत्तानि । यावच्छेषमन्यैरपि प्रदीयते । सम्भाव्यते तूर्णमेवापेक्षितं धनं संगृहीतं स्यादिति ।

राजकीयसंस्कृतविद्यालयस्य नगरतो दूरवर्त्तित्वात् तदन्तर्गते स्थापयिष्यमाणे संस्कृतपुस्तकालये नागरिकाणां ग्रन्थालोचनसौकर्यं भवेदिति न वयं सम्भावयामः । अतो नगरमध्य एव क्वचिद्युक्ततरे स्थाने सोऽयं पुस्तकालयो स्थाप्येत चेद्, वरं स्यादिति युक्तमिव मन्यामहे ।

अध्यापको म्याकडोनेलः ( Professor Arthur A. Macdonell ) 'संस्कृतसाहित्येतिवृत्तं' ( A History of Sanskrit Literature ) विरचय्य प्राच्यविद्यावित्समाजेषु महद्यश उपार्जितवान् । यद्यप्यस्माकं तस्य ग्रन्थस्य सर्वेष्वप्यंशेषु मतैक्यं नास्ति, तथापि यया परिपाट्या संक्षेपपूर्वकं विविधा विषया एतस्मिन् सन्दर्भास्तेन वस्तुत एवायं परं साधुवादमर्हति । नूनमिमं पठतां चित्तानन्दितं स्यादित्यत्र नास्त्यस्माकं स्तोकोऽपि सन्देहः । अध्यापकस्य वेबरस्य 'भारतवर्षीयसाहित्येतिवृत्तं' ( Professor Weber's History of Indian Literature ) टिप्पनीशतसङ्कुलत्वान्नातीव रुचिकरमस्माकं प्रतिभाति । मोक्षमूलरस्य च 'प्राचीनसंस्कृतसाहित्येतिवृत्तम्' ( History of Ancient Sanskrit Literat[illegible] साम्प्रतमतिदुर्लभं संवृत्तम्, यतोनेदं पुनर्मुद्रितम् । अतो नवीनजिज्ञासूनाम् अध्यापकम्याकडोनेलप्रणीतः स एव ग्रन्थः परमुपकारमिदानीमावहति । संस्कृते पुनरीदृशस्य ग्रन्थस्य कदा दर्शनं लभ्येतेति भगवानेव जानाति ।

# मित्रगोष्ठी-पत्रिका।

( मासिकं संस्कृतपत्रम्। )

"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्"।

ऋग्वेदः।

द्वितीये वर्षे } १८२७ शकाब्दाः, चैत्रः। { द्वादशसंख्या

## बद्धविहगः।

१

कदाचिद् दृङ्मध्ये पतति बत बन्धो तृणकणे
विधत्ते पक्ष्मभ्यां द्रुततरमियं यत्निजतनुम्।
स्वभावोऽसौ सृष्टेर्न खलु परिहार्यः क्वचिदयं
समर्थैरन्यैरप्यपि मरणभीतेरुपगतो॥

२

यथेच्छं त्वं भस्मीकुरु मम शरीरं दहनकै-
र्मया तु स्थातव्यं जडवदति तूष्णीं स्थिरपदम्।
अहो माहात्म्यं ते किमपि भुवनानामविदितं
यदन्तर्ह्लादाय प्रभवति च सन्तापयति च॥

३

तपस्वी निर्दोषो नभसि विहरन्नात्मविषये
शकुन्तोऽयं पाशे ननु सुविषमे व्याध, पतितः।
स्वशक्त्या प्रस्थातुं धृतपरिकरो यत्प्रयतते,
कृपा तेनैव स्यादिह यदि न ते, किं स कुरुताम्॥

विधुशेखरशर्मा।

## प्रार्थनापरिपाकः ।

१

गतो भ्रातः स्त्रीवश्भिभूतभवनाभ्यन्तरमहो
स्खलद्भिर्बाष्पाम्भः पृषतनिकुरम्बैरनुदिनम् ।
स्थितस्तूष्णीं पृथ्वीतलमिह परिप्लावयसि यत्
न तस्यायं कालो द्रढय निजचित्तं द्रढय रे ॥

२

कृतः शोकः कामं, रुदितमपि भूयः सकरुणं
बहूक्तं वैधुर्यादसकृदपि बद्धोऽञ्जलिपुटः ।
कृता याच्ञा भूरि प्रणतिविधिनापि प्रतिदिनं
न सन्तोषस्तेषान्तदपि यदि कार्यन्तदनु किम् ॥

३

निमग्नास्ते नित्यं मदजलधिगम्भीरसलिले
व्यथां बुध्येरन्नो व्यथितहृदयानां कथमिव ।
विषज्वाला ज्वालां जनयति कथं, वेत्ति किमयं
न दष्टो यो धन्यो ननु विषधरेण क्वचिदपि ॥

विधुशेखरशर्मा ।

———:o:———

## जयमङ्गला ।

( कामसूत्रटीका, भट्टिकाव्यटीका च )

विदितमिदं मित्रगोष्ठीपत्रिकापाठकमहाशयानां, यथा किल—वात्स्यायनप्रोक्तस्य कामसूत्रस्य टीकास्वन्यतमा जयमङ्गलाख्या प्रकाशिता नैकवारं जयपुराभिजनैः काव्यमालासंपादकैर्महामहोपाध्यायैः श्रीदुर्गाप्रसादशर्मभिरिति ।

अथ तत्कर्तृविषयिण्येषा जिज्ञासा—" इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरु-

इत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां साधारणे प्रथमेऽधिकरणे शास्त्रसंग्रहः प्रथमोऽध्यायः" इति सर्वत्राध्यायसमाप्तावधिकरणसमाप्तौ चाभिन्नरूपेणावस्थितां पुष्पिकां दृष्ट्वा तत्प्रकाशकैः मुखपत्रे 'कामसूत्रम् यशोधरविरचितया जयमङ्गलाख्यया टीकया समेतम्' इत्यमुद्र्यत।

तस्मिन्नेव पुस्तके ३६४ पृष्ठस्य टिप्पणे पूर्वोल्लिखितपुष्पिकानन्तरम् "इत्यपरार्जुनभुजबलमल्ल-राजनारायण-महाराजाधिराज-चौलुक्यचूडामणि-श्रीमद्वीसलदेवस्य-भारतीभाण्डागारे श्रीवात्स्यायनीय-कामसूत्रटीकायां 'जयमङ्गला'भिधानायां वैशिकमधिकरणं समाप्तम्" इतिपुस्तकान्तरस्थः पाठ उट्टङ्कितो दृश्यते।

११०५ तमवत्सरे मद्रासपुर-राजकीय-प्राचीनलेखान्वेषणपटिष्ठेन श्रीहुल्षपण्डितेन मुद्रिते तञ्जोरनगरस्थस्य श्रीजम्बूनाथभट्टस्य पुस्तकालये विद्योतमानानां पुस्तकानां सूचीपत्रे * १६३३ संख्याकस्यास्य ग्रन्थस्याद्यन्तप्रकाशनस्थलीयपुष्पिकायामप्यन्यूनानतिरिक्ता एषैवानुपूर्वी दृश्यते।

मैसूर-राजकीय-प्राच्यकोशागारे १६६२ संख्याकद्रमिडाक्षरमय-जयमङ्गलामातृकायां तु "इति श्रीकामसूत्रटीका 'जयमङ्गला' समाप्ते"त्येतावदेव वर्तते। एतन्मातृकाधारेणैवेदानीं सप्तमस्यौपनिषदिकाधिरणस्य टीका परिशिष्टरूपेण मुद्रिता श्रीदुर्गाप्रसादसूनुना श्रीमता केदारनाथेन साहित्याचार्येणास्मन्मित्रप्रकाण्डेन।

एवं मातृकात्रयान्तपुष्पिकादर्शनेन मुद्रितायाः कामसूत्रटीकाया नाम 'जयमङ्गलेति' निर्विकल्पमवसीयते। तत्कर्ता क इति जिज्ञासायां श्रीदुर्गाप्रसादशर्मणां वाक्यप्रामाण्येन यशोधर इति ज्ञायते।

अत्रायमस्मदाशयः—यथापण्डितसम्राड्-†जगन्नाथविरचितरसगा-

* Reports on Sanskrit Manuscripts in Southern India by E. Hultrsch, PH. D. Government Epigraphist, Madras No. III.

† Bomby Sanskrit Series No. LXI संख्याकरसगङ्गाधरस्य भूमिकायाः ७म पत्रं द्रष्टव्यम्।

गणितस्य श्रीजयपुराधीशपुस्तकालयीयमातृकाया "लोकमणि' लेख-कः, एवमेव चौलुक्यचूडामणेः श्रीवीसलदेवस्य भारतीभाण्डागारस्थ-'जयमङ्गला' सहितकामसूत्रपुस्तकस्य 'लेखको' यशोधरो, न तु कर्तेति ।

अत्र प्रमाणं तु पूर्वोदाहृतपुष्पिकान्तर्गतः—'विदग्धाङ्गनाविरह-कातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेण एकत्रकृतसूत्रभाष्यायां' इति भाग एव । अत्र हि यशोधरेणेति कर्तरि तृतीयाया 'एकत्रकृते'ति मूलव्याख्यानयोरेकस्मिन् पुस्तके संनिवेशरूपैकीकरणक्रियायामेवा-न्वयः ।

पूर्वोदाहृतपुष्पिकायां 'विदग्धाङ्गने'-त्यादिभागस्य त्यागे मैसूर-मातृकापुष्पिकयैकार्थ्यं सुस्पष्टमेव । तञ्जोरमातृकायामपि 'श्रीवीसल-देवस्ये'त्यादिदर्शनात् जयमङ्गलायाः प्राथमिकी मातृका वीसलदेवस्य पुस्तकालयस्थेत्यनुमीयते । एष मदीयस्तर्कः ।

एवंचापैतु नाम कर्तृत्वं यशोधरे । परं तु पौरुषेय्या जयमङ्गलायाः कः कर्तेति तु जिज्ञासायाम्—भट्टिकाव्यटीकासु सुप्रसिद्धा प्राचीना च या 'जयमङ्गलाख्या' टीकाऽनेकवारं सम्मुद्र्य प्रकाशिता वर्वर्ति, कृप-या तस्या अन्ते दृष्टिः प्रसार्यताम् । तत्र "जटीश्वरो जयदेवो जय-मङ्गल इति च नामभि स्त्रिभिस्सुप्रसिद्धस्य * अनेकशास्त्रव्याख्यानु-कृतौ टीकायां काव्यस्य" इति हि पुष्पिका दृश्यते ।

तथाच जटीश्वर-जयदेव-जयमङ्गलरूपै स्त्रिभिर्नामभिः प्रसिद्धो यो भट्टिटीकाया 'जयमङ्गलायाः' कर्ता स एवास्याः कामसूत्रटीकाया अपि कर्तेति ममाशयः ।

यदि टीकाद्वयनामैक्यमात्रेण कर्तुरैक्यं सम्भाव्येत; ननु तर्हि प्रवर-

* 'अनेकशास्त्रव्याख्यानुकृतौ' इति कलकत्तायां श्रीयुक्तभुवनचन्द्र बसाक-समुद्रितास्मत्पुस्तकालयस्य पुष्पक मातृकायां वर्त्तते 'अनेकशास्त्रव्याख्यानकृतः' इति षष्ठ्यन्तमेव साधुपदमिति ममाशयः ।

सेनकृतप्राकृतकाव्यस्य, भास्कररायकृतस्य ( मन्त्रशास्त्रीयप्रधान-त्रयान्तर्गतस्य ) 'योगिनीहृदयव्याख्यानस्य' च 'सेतुबन्धम्' इति नाम्नै-क्यात्कत्रैक्यं सम्पद्येतेति चेन्नैवम्। 'अनेकशास्त्रव्याख्यानकृत' इति पुष्पिका खण्डस्य अर्थपर्यालोचनया नायं तादृशः प्रसिद्धापलाप इति निश्चेतुं श्रीमतां हृदयान्येव प्रतिभुवो भवन्तीति मम प्रत्ययः।

अथ च विचारयन्त्वनेकमहाग्रन्थपरिशीलनतीक्ष्णमतयः ग्रन्थ-द्वयस्य मङ्गलश्लोकसौसादृश्यमपि—

"वात्स्यायनीयं किल कामसूत्रं, प्रास्तावितं कैश्चिदिहान्यथैव।
तस्माद्विधास्ये जयमङ्गलाख्यां टीकामहं * सर्वविदं प्रणम्य" ॥
प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टिकाव्यसलिलनिधेः।
जयमङ्गलेतिनाम्ना नौकेव विरच्यते टीका ॥

मङ्गलश्लोकयोः 'प्रणिपत्य'-'प्रणम्य', 'सर्वविदं'-'सकलवेदिनं, इत्या-दिपदार्थसाम्यं सावधानं विचार्यताम्।

कामसूत्रटीकायां तत्र तत्रोदाहृतेतिहासबोधकसूत्राणां व्याख्याने व्याख्यातु र्यादृशमितिहासानुपूर्वीप्रकाशनसामर्थ्यं व्यक्तीभवति तादृ-शमेवभट्टिकाव्यव्याख्यानेऽपि तत्र तत्रोपलभ्यत इति द्वितीयो मस्तक-स्य हस्तावलम्बः।

उदाहरणार्थं कामसूत्रस्य प्रथमेऽधिकरणे द्वितीयेऽध्याये 'यथादा-ण्डक्य' इतिसूत्रस्य, भट्टिकाव्यस्य चतुर्थसर्गे प्रथमश्लोके 'दण्डकारण्य-मीयिवान्' इति पादस्य च व्याख्याजयमङ्गला द्रष्टव्या।

"गुणदोषौबुधोगृह्णन्निन्दुक्ष्वेडाविवेश्वरः।
शिरसाश्लाघतेपूर्वंपरंकण्ठेनियच्छति" ॥

इति विज्ञापयति—

वेङ्कटरङ्गनाथस्वामी।
विशाखपत्तनम्

---

* 'दमं' इति मैसूर मातृका।

## नागिला।

"का हि पुरुषणना तेषां येऽन्यशिक्षाविचक्षणाः।
ये स्वं शिक्षयितुं दक्षास्तेषां पुरुषणना नृणाम्"॥
स्थविरावलीचरितम्, (परिशिष्टपर्व) १।३८१

पुरा किल मगधेषु सुग्रामाभिधेयग्रामवास्तव्ययोः रेवतीराष्ट्रकूटयोर्दम्पत्यो र्भवदत्तो भवदेवश्चेति तनयावभूताम्। एतयोर्भवदत्तो यौवन एव सुस्थिताचार्यसन्निधौ प्रव्रज्यादीक्षामदत्त। अथ कदाचित् तदीये 'गच्छे'* कश्चित्साधुः 'मम वैमात्रेयो भ्राता मयि नितान्तं स्निग्धः, तन्मयाप्रार्थितो नूनं प्रव्रजिष्यतीति' तत्समीपं गन्तुं गुरुणानुज्ञातो यथास्थानमुपेत्यापश्यद् यत्तस्य भ्रातरमजानन्निव स्वागतमपि नाकार्षीत्, व्रतादानस्य तु कथैव नास्तीति। स तु विलक्षः सन् गुरुसमीपमागत्यानुजस्य सर्वां कथामकथयत्। तदाकर्ण्य भवदत्तोऽवादीत्—'अहो काठिन्यमस्यानुजस्य यदेष गृहगतं ज्यायांसमवाज्ञासीदिति किं नु भो गुरुभक्तेरपि विवाहकौतुकं नाम श्रेयः, यदयं सानन्दः सन् तां परित्यज्य ज्येष्ठं नान्वियायेति। अत्र कश्चिद् भवदत्तमूचे—'तदासि भवदत्तस्त्वं पण्डितः, यदा स्वं भ्रातरं प्रव्राजयिष्यसीति'। प्रत्युक्तं तेन यदास्मद्गुरुचरणाः सहास्माभिर्मगधेषु गमिष्यन्ति, तदानीं खल्विदं कौतुकं दर्शयिष्यत इति। अथ कालेन सूरयो मगधानगच्छन्। तत आसन्नान् दिदृक्षुर्भवदत्तो गुरुणाज्ञातः सन् सहैकेन साधुना निजमनुजं प्रव्रज्याग्रहणेनानुग्रहीतुं गृहमुपजगाम।

इतो भवदत्तानुजो भवदेवो वासुकी-नागदत्तयोस्तनयां नागिलां नाम कन्यकां वोढुमुद्युक्तः। विधीयमानोद्वाहोत्सवा बन्धवो भवदत्तागमनम् उत्सवोपरि उत्सवमिवान्वमन्यन्त। सद्यः पाद्येन तत्पादौ प्रक्षाल्य तीर्थोदकादप्यधिकमिव तत्पादोदकमवन्दन्त ते। भवदत्तस्तु

* गुरुशिष्यसंघो जैनग्रन्थेषु 'गच्छ'नाम्ना प्रसिद्धः।

'विवाहव्याकुला यूयम्, अतोऽन्यत्र विहर्तुं यामीति' बन्धूनकथयत्। भवदेवोऽपि तदानीं कुलाचारं पालयन् वयस्याभिः सेव्यमानां नवोढां प्रियां मण्डयन्नासीत्। अस्मिन्नेव समये स महामुनेर्भवदत्तस्यागमनवार्त्तामश्रौषीत्। श्रुत्वैव भ्रातृदर्शनोत्तालोऽसौ अर्द्धमण्डितामपि वल्लभां विहाय द्रागुदस्थात्। अर्धालंकृतां कान्तां विहाय गन्तुं नोचितमिति तस्याः सखीनां सविनयप्रणयं वचनं बधिर इव स नाश्रौषीत्। स खलु 'गुरुप्रणिपातं कृत्वा पुनरप्ययमहमागच्छामीति' कथञ्चित्ताः सर्वाः समाश्वास्य त्वरितगतिस्तस्मात् स्थानादभ्येत्य भवदत्तमवन्दत। भवदत्तस्तु वन्दित्वोत्थितमात्रस्यैवानुजस्य श्रामण्यदानाय सत्यङ्कारमिवैकं घृतभाजनं प्रदाय तस्मिन् मनाग्दत्तदृष्टिर्निर्जगाम। तत्पदाम्भोजषट्पदः सोदरस्तद्घृतभाजनं धारयन् तमेवान्वगच्छत्। अन्येऽपि च बहवो नरा नार्यश्च भवदेवदत्तमनुययुः। अथातिक्रान्ते कियति मार्गे विना भवदेवं सर्वं एव निवृत्ता बभूवुः। अयन्तु 'नाहमेनं श्रान्तं ज्यायांसं भ्रातरमस्थाने परित्यज्य गन्तुमुत्सहे' इति न तत्सङ्गमजहात्। भवदत्तोऽपि विविधाभिर्गार्हस्थ्यवार्त्ताभिस्तन्मन आवर्जयन् क्रमेणाचार्यपादैः पवित्रितं ग्राममभ्यगच्छत्। तत्र च क्षुद्रका भवदत्तं सानुजमागतं निरीक्ष्य कृतवक्रोष्ठिकाः 'अहो भवदत्तः स्ववचसोऽवितथत्वसम्पत्तये दिव्यवेशधरमनुजमानीतवानिति' उपाहसन्। 'कोऽयं तरुण' इत्याचार्येण पृष्टे, 'सोदरोऽयं मम भगवन् दीक्षां जिघृक्षुरागत' इति प्रत्युक्ते च भवदत्तेन, पुनरपृच्छदाचार्यो भवदेवं—'किं त्वं दीक्षां कामयसे' ? तेन प्रत्युत्तरितम्—'भगवन्, मा मे भ्राता मृषावादी भवतु'। अथ भवदेवस्य यथोचितं प्रव्रज्याग्रहणविधिः सम्पन्नः। स हि ततः प्रभृति जैनसाधूनामन्यतमः सन् देशान्तरेषु विहर्तुमारभत।

अन्यतो भवदेवः किमिति नायात इति चिन्तयोद्विग्ना बन्धवो भवदेवमभ्येत्य तद्विरहेण परिवाराणां तपस्विन्या नवोढाया वध्वाश्च दौर्गत्यातिशयं प्रकाश्य क स साम्प्रतं तिष्ठतीति विनयेन पर्यपृच्छन्।

भवदेवस्तु सोदरस्य धर्मोदकार्थम् 'आयातमात्र एव स पुन र्यातः न वेद्मि कुत्र स वर्त्तत इति मिथ्योवाच'। तदाकर्ण्य दस्युमुषिता इव दीनास्यास्ते किमेष तेनैवापरेण वा वर्त्मना गत इत्यादिकं बहुविध कल्पयन्तस्तर्कयन्तश्च प्रत्यावर्त्तन्त।

इतो भवदेवः कर्णाकर्णिकया तां वार्त्तामधिगत्य नवोढां प्रियां हृदि ध्यायन् केवलं भ्रातृभक्त्यैव गृहीतां प्रव्रज्यां सशल्यामिव कथञ्चित् पर्यपालयत्। अथ महर्षिर्भवदत्तः कालेन स्वर्गमुपेतः। भवदेवस्य तु संसारचिन्ता क्रमेण वर्द्धितुमारभत। नियतमेव सोऽचिन्तयत्—'अहो कथं नु मे प्रेयसी नागिला सुदुःसहं विरहदहनमिमं सहते। भ्रातुरेवोपरोधेनाहमेतावन्तं कालं व्रतमपालयम्, साम्प्रतं तु तस्मिन् स्वर्गते किं मे प्रयोजनमनेन स्यात्। नाहं दुष्करेणाप्येतेन व्रताचरणेन तथा पीडितः, यथा खलु तस्या विरहक्लिष्टाया नागिलाया अवस्थाविपर्यासचिन्तनेन। हन्त नूनं सेदानीं तुहिनाविलेव पद्मिनी, मरुमध्यगतेव मराली, निदाघतप्तेव वल्ली, यूथभ्रष्टेव हरिणी, पाशबद्धेव च शारिका कष्टां दशामागता। तद्यदि जीवन्तीं तामधिगच्छेयं तर्हि गार्हस्थ्यमेवावलम्बेयेति'। एवं चिन्तासन्तानसन्दानितहृदयः कदाचिदेष स्थविरर्षीननापृच्छ्यैव स्वगच्छाद् विनिर्ययौ।

अथायं तूर्णमेव स्वग्राममागत्य क्वापि संवृतद्वारबाह्यायतनसन्निधावत्रस्थित एकया ब्राह्मण्या सह समागतया कयाचिदङ्गनया वन्दितः सन् पित्रोः कुशलं पृच्छन्नकुशलमेव विज्ञाय दुःखितचित्तः प्रिया नागिला जीवति न वेति पप्रच्छ 'ननु भद्रे भवदेवेन या खलु नवोढा प्रिया परित्यक्तासीत्, किमेषा साम्प्रतं तिष्ठति'? सा त्वङ्गना स्वरसंयोगेनाकारेण च प्रत्यभिज्ञाय प्रत्युत्तरितवती–'तपोधन, अपि नाम भवानेव स भवदेवः'? उक्तं भवदेवेन—'यथाह भवती, अहमेव स नागिलाजीवितेश्वरो भवदेवः। तदानीं किलाग्रजोपरोधेन मया तां विमुच्य अकामेनापि दुष्करं व्रतमिदमादायि। साम्प्रतं तु विपन्ने तस्मिन् भ्रातरि, निरंकुशोऽहं कथमस्ति मे प्रियतमेति वद्दिदृक्षया

आगतोऽस्मि' । तया ब्राह्मण्या सह समागता सा खलु सीमन्तिनी नागिलैवासीत् । परावृत्तवयोगुणामेनां बहुतिथात् कालादनन्तरमालोक्य भवदेवः प्रत्यभिज्ञातुं नाशक्नोत् । नागिलोक्तवती—'अहमेव सा नागिलाऽस्मि, या हि नवोढैव भवताऽत्याजि । पुण्याशय, एतावता कालेन व्यतीते यौवनविभवे किं ममेदानीं लावण्यं वर्त्तत इति विमृश्यताम् । येन त्वमिह मुह्यसि । तदङ्ग, स्वर्गापवर्गदायकं रत्नत्रयं परित्यज्य वराटिकामात्रसदृशीं मां न कथमपि ग्रहीतुमर्हसि । घोरनरकपातप्रतिभुवां विषयरूपाणां स्मरास्त्राणां मा जातु भेदनीयो भव । छद्मनापि हितैषिणैव भ्रात्रा त्वं व्रतं ग्राहितोऽसि अतः पापत्मनो मय्यनुरक्तः सन् तमनाप्तं मा मंस्थाः । तदद्यापि निवर्त्तस्व अनुव्रज च गुरुपादान्, आलोचय च तदन्तिके मदनुरागजं पापम् इति' ।

नागिला यावदेवं भवदेवमन्वशात्, तावदेव ब्राह्मण्या भुक्तपायसः कोऽपि शिशुपुत्रस्तत्रोपागत्य मातरमवोचत्—'मातः, यन्मयाद्य सुधोपमं पायसमभ्यवहृतं तदिदानीं वमिष्यामीति भाजनमेकमधो धारय; अद्याहमन्यत्र निमन्त्रितोऽस्मि, तत्रैव भुक्त्वा दक्षिणां लप्स्ये अवान्तपायसस्तु न पुनर्भोक्तुं शक्ष्यामि; आदत्तदक्षिण आगत्य भूयोऽपि वान्तमिदं पायसं भोक्ष्ये, का ह्रीः स्वोच्छिष्टभोजन इति' । ब्राह्मण्युक्तवती—'वान्ताशी त्वं जुगुप्स्यो भविष्यसि, तदलमनेन जुगुप्सनीयेन कर्मणेति' । भवदेवोऽपि ब्राह्मण्युक्तं समर्थयमानोऽवादीत्—'त्वं खलु वत्स, वान्ताशी कुक्कुरादपि निकृष्टो भविष्यसीति' । नागिला भवदेवस्येदं वचनमाकर्ण्य तमब्रवीत्—'श्रीमन्, यद्येवं जानासि कथयसि च, तर्हि किमिति मामुद्वम्य पुनरप्युपबुभुक्षसे ? मांसासृगस्थिविण्मूत्रपूर्णा अधमाधमाहं वान्तादपि जुगुप्स्यास्मीति किं त्वं मामिच्छन् न जिह्रेषि परं खलु शिक्षयसि, न त्वात्मानमिति यत्सत्यं पर्वतशिखरे हि ज्वलन्तमग्निं पश्यसि, न पुनर्वर्त्तमानमपि चरणयोरधः ?

का हि पुंगणना तेषां येऽन्यशिक्षाविचक्षणाः।
ये स्वं शिक्षयितुं दक्षास्तेषां पुङ्गणना नृणाम्" ॥ इति

भवदेवः। साधु शिक्षितोऽस्मि भद्रे त्वया यत् शिक्षणीयम्। जात्यन्ध इवोत्पथप्रस्थितोऽहं पन्थानं खल्वानीतोऽस्मि त्वया। तदद्य स्वजनान् दृष्ट्वा गुरुसमीपमुपसृत्य व्रतातीचारार्थं दुस्तपं तपो विधास्यामि।

नागिला। किं ते स्वजनैस्तपोधन, ते हि तव गुरुसन्दर्शने नूनं मूर्त्तिमन्तो विघ्ना भविष्यन्ति। तदलं तत्र गमनेन, गुरुपादान्तमुपगत्य दान्तचित्तो व्रतमेवाचर। अहमपि च व्रतिनीजनसन्निधौ प्रव्रजिष्यामि।

भवदेवो नागिलाया वचनेन यथोक्तमकार्षीत्। नागिलापि स्वोक्तं नान्यथयत्। *

विधुशेखरशर्मा।

——:o:——

## श्रीस्वामिबालरामस्योदासीनमहात्मनः प्रशस्तिः।

आसीन्निखिलशास्त्रपारावारपारदृश्वा विश्वविश्रुतयशोराशिर्विषयभीषणाशीविषदष्टमानुषजनविषवैद्योद्दामानवद्यगुणरत्नाकरोऽश्रान्तोपस्थितमहीपतिगणाहम्पूर्विकाप्रणतमूर्धतिरोहितचरणारविन्द उदासीनोमहात्मा स्वामिश्रीबालरामोनाम।

अयं खलु क्रमशः—

---

* कथेयं जैनाचार्यहेमचन्द्रकृत-'स्थविरावलीचरित'-नामकात् ग्रन्थात् संगृहीता। नागिलानुरक्तस्य भवदेवस्य प्रागवर्णितं प्रव्रज्याग्रहणं 'सुन्दरी'-बद्धहृदयस्य नन्दस्य तेन तूलनीयम्। सोदराग्रजेण भवदेव इव भगवतो बुद्धस्य निर्बन्धेन नन्दः प्रव्रजितः सन् प्रियतमार्थं नितरां कातरोबभूव। अथ कृपालुना भगवता बुद्धेन स उद्धृत आसीदिति बोधिसत्त्वावदानकल्पलतिकायां (दशमे पल्लवे) द्रष्टव्यम्।

पितुःप्रियः प्राप्तसमग्रसंस्कृतिः कृती जनानन्दकरः स्वभावतः ।
प्रभावशाली धिषणाप्रकर्षतः प्रवीणतां वर्णगणेधिजग्मिवान् ॥१॥
अत्यल्पकालात्सकलान्यधीत्य श्रुतेः षडङ्गानि परिश्रमेण ।
विचक्षणाद्दीक्षितवैद्यनाथात्तथेतरेभ्यो नियतोगुरुभ्यः ॥ २ ॥
काश्यामधीयाय महामहोपाध्यायादसौ कोविदराममिश्रात् ।
वेदान्तशास्त्राणि नितान्तसक्तो भक्तौपरब्रह्मणउत्कचित्तः ३ (युग्मम्)
ततोनवद्वीपपुरं प्रयातोऽधीतेस्म शेषाण्यपि दर्शनानि ।
अभ्यस्य भूयोरसनाग्रवर्त्तीन्यमूनि कृत्वाभृशमाप तोषम् ॥४॥
अथभ्रमन् देशविशेषशोभां पश्यन्गुरुभ्योबहुशोऽधिगच्छन् ।
शास्त्राणि लोकैरभितोर्च्यमानः पराभवन्वादिकुलं तथासीत् ॥५॥
दाक्षिण्यवान्दक्षिणदिग्गतोसौ विचक्षणानैक्षत सक्षणस्तान् ।
क्षणादवाकृष्यत यैर्मनोऽस्य बैलक्ष्यमापे भृशमीक्षितश्च ॥६॥
मूर्ध्नागतः क्ष्मां विनयेन युक्तः परीक्षितोनुक्षणमेभिरेषः ।
क्षीणः क्षुधान्नाय भुवाऽक्षयांहि तृप्तिं प्रपेदे श्रुतिशिक्षयासाम् ॥७॥
तेन श्रुतिक्षौद्रबुभुक्षितेन गृहीतदीक्षेण समीक्षितानि ।
क्षौद्रैक्षवक्षीरसुधादिकानि क्षाराणि रूक्षाणि गतक्षणानि ॥८॥
समाप्य वेदाध्ययनं विधायोपाध्यायवर्गाङ्घ्रिसरोजरेणून् ।
निजोत्तमाङ्गस्य विभूषणानि तीर्थाटनं कर्तुमियेषभूयः ॥९॥
कुर्वन्पवित्रान्पृथिवीप्रदेशान्महात्मनां सङ्गतिमीप्समानः ।
प्रायः प्रयातिस्म सतां समाजो यात्राप्रसङ्गाद्भवतिस्म यत्र ॥१०॥
क्ष्मामण्डलस्याखिललब्धवर्णवर्गेदधत्प्रेम परं सदाऽयम् ।
वाराणसीवासिमनीषिवृन्दे महद्गुरुत्वं कलयाञ्चकार ॥११॥
विधाय पातञ्जलदर्शनस्य व्याख्यां कवीनां रुचिरां चिराय ।
स्थिरां तनुं कीर्तिमयी मभीप्सस्तत्पुस्तकान्यर्पितवान्बुधेभ्यः ॥१२॥
अभ्यर्थितः शिष्टजनैश्च पातञ्जलप्रकाशं सरलं स्फुटार्थम् ।
हिन्दीगिरा दर्शनशास्त्रसारं लोकोपकाराय चकारशीघ्रम् ॥१३॥

अथ श्रौतसर्वस्वं ( पिण्डपितृयज्ञमीमांसा ) गङ्गास्थितिमीमांसा, अबोधध्वान्तमार्तण्डः अन्येऽप्यनेके ग्रन्थास्तत्रभवता भवता पवतां जनानामुपकरिष्णुना प्राणायिषत प्रारथायि चोद्‌ग्दिग्गतजनपदान्पदारविन्दरजोभिः पवित्रयितुम्। प्रागेवास्यां पूर्वं प्रभावमाकर्ण्यातिसमुत्कण्ठितचेतसा सत्सम्भावनस्वभावेन छपरानगरीवास्तव्येन श्रीमता देवकुमारसिंहेनाभ्यर्थितः सनाथयाम्बभूव तद्भवनं चरणसरसीरुहयोरेणुभिः। सततपरिभ्रमणशीलेनापि भावभूरिलेन तस्मैप्रत्यहं ज्ञानमार्गमुपदिशता व्यलम्बि तस्यैवालये वर्षद्वयम्। ततः प्रस्थितो वङ्गदेशीयाङ्ग्लविद्यालयानामध्यक्षेण ( इंस्पेक्टर आफ स्कूल्स्, बङ्गाल् ) श्रीमता भूदेवचन्द्रमुखोपाध्यायेन दर्शनशास्त्राध्ययनाय स्वस्योपाध्यायपदवीं प्रापितः। उत्तरपाराभूमिपतिना श्रीमता रासविहारिमहोदयेनापि दर्शनशास्त्रस्य महाऽऽदर्शभूतः स्वसद्मनोभूषणीचक्रे वर्षद्वयावधि।

एवमेव जगति ज्ञानमार्गं प्रकाशयता भूमण्डलमार्तण्डेन, जनाह्लादकारिणा क्षयरहितचन्द्रमसा, मनीषितवर्षिणा जङ्गमकल्पतरुणा करुणावरुणालयेन वर्त्तमानएव संवत्सरे कुम्भमहोत्सवे त्रिवेणीं स्नातुं प्रयागतीर्थं गतवता शमवता साधुगुणानवता सर्वदर्शिनापि स्वानुचरवर्गान् स्फुटमकथितवतैव ससम्भ्रममीश्वराहूतेन वा पापीयसामस्माकं सङ्गतिं त्वरया परिजिहीर्षता वा देवैः स्वेषामधःस्थितलोके तस्य वासमनुचितं मन्यमानैर्विमानवद्भिरपि तस्मिन् बहुमानवद्भिर्मानवजनादृश्यैर्नीतनवोपरिलोकं तपोनिधिना तपोमासे कृष्णप्रियेण कृष्णपक्षे अद्भुतप्रभावपूर्णेन पूर्वाङ्क तिथौ ( नवमी तिथौ ) यशःशुक्लेन शुक्रवासरे सेवकजनक्षणदेन क्षणदायां महात्मनामग्रगण्येनाद्य यामे भूमिवलयेऽभिनवं शोकमुद्भावयता नवम्यां घण्टायामस्मिंल्लोके सचेतनमात्रस्य नेत्राभ्यामश्रुवेणीः प्रवाहयता शोकसागरमग्नेष्वपि सर्वेषु परमप्रियशिष्यं श्रीस्वाम्यात्मस्वरूपशास्त्रिणं ज्योतिर्विदं श्रीरामचन्द्रोपा-

यं च निरवलम्बमेवं त्यजता त्रिवेणीतटे निजपाञ्चभौतिकशरीरशून्यं मर्त्यभुवनं व्यधायि।

अधुना श्रीस्वाम्यात्मस्वरूपशास्त्रिणा तत्रभवद्भिः परमकृपालुभिर्निजानुचरत्वेन स्वीकृतया साधुमण्डल्याऽभ्यर्थितपूर्वेण निजशोकमूनयित्वा तां मण्डलीं स्वमात्रशरणां यथापूर्वं पालयितुं प्रवृत्तेन भूयतामित्याशास्ते।

पाण्डेयश्रीकान्तशर्मा।

——o——

## काव्यतत्त्वावली।

( पूर्वतोऽनुवृत्ता )

अन्यविधोऽर्थस्तु प्रौढया प्रगल्भयैव उक्त्या सिद्धोनिश्चित इत्यतः प्रौढोक्तिसिद्धः। न तु स्वभावतोऽपि लोके सम्भवति। यथा उत्तरचरिते रामो यदा सीतां निर्वास्य तद्द्वादशेवर्षे शम्बूकस्य शूद्रतापसस्य वधाय दण्डकारण्यं पुनर्जगाम, तदा मुरलानाम काचिन्नदी तमसानदीमुवाच—

"सखि तमसे, प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया" इत्याद्यारभ्य "स्वैरं स्वैरं प्रेरितैस्तर्पयेति" इत्यन्तम्। अथ तमसा मुरलां प्रत्युवाच "उचितमेव दाक्षिण्यं स्नेहस्य" इत्याद्यारभ्य मुरलातमसयोर्नद्योरुक्तिप्रत्युक्तयः प्रौढोक्तिसिद्धा एवार्थाः। तृतीयाङ्कं विष्कम्भं यावत्। ततश्च तृतीयेऽङ्के सीतातमसयो रुक्तिप्रत्युक्ती प्रौढोक्तिसिद्धोऽर्थः।

सीतया च छायारूपया रामगात्रस्पर्शो रामेणसह वनदेवताया वासन्त्याश्च उक्तिप्रत्युक्तयः सर्वाएव प्रौढोक्तिसिद्धा एवार्थाः।

द्वितीयेऽङ्के आत्रेय्या नद्यासह वनदेवताया वासन्त्या उक्तिप्रत्युक्तयश्च प्रौढोक्तिसिद्धाअर्थाः, किं बहुना उत्तरचरितस्य वस्तूनि प्रायेण प्रौढोक्तिसिद्धार्थभित्तिकानि।

तथाहि मुरला-तमसा-गङ्गादीनां नदीनां वनदेवतायाश्च दिव्यः कोऽपि प्रभावोऽस्तीति मन्तव्यम् । तेन प्रभावेन तीर्थभूतास्तानद्यो वनदेवता च मनुष्यवत् मूर्त्तिं धारयन्ति, मनुष्यवत् उक्तिप्रत्युक्तीश्च कुर्वन्ति, देवताइव प्रणिधानेन अतीतानागतान् सन्निकृष्टविप्रकृष्टांश्च पदार्थान् जानन्ति, इत्येवं रूपया प्रौढ़या उक्त्या एव तेतेऽर्थाः नाटकपाठकैः सत्यत्वेन निश्चीयन्ते ।

ये पुनः नदीनां तीर्थत्वं तादृशदिव्यप्रभवान् अतीतानागतसन्निहितव्यवहितविषयज्ञानं च प्रणिधानशक्तिं वा न मन्यन्ते, वनानां देवताश्च न विश्वसन्ति, ते खलु तादृशान् प्रौढोक्तिसिद्धानर्थान् न प्रतियन्ति । तथाहि महम्मदीय-खिष्टीय-नास्तिकप्रभृतिभिर्लोकैस्तेतेऽर्था मिथ्यात्वेनैव गृह्यन्ते, सुतरां तादृशार्थनिबद्धं काव्यमपि तैरसत्यत्वेनैव निर्णीयते । एवं रामायणे वानरमात्रस्य हनूमतः शतयोजनविस्तीर्णसागरलङ्घनं प्रौढोक्तिसिद्धोऽर्थः । न खलु कोऽपि वानरः एकमपि योजनमुल्लङ्घयितुं क्षमते, किंपुनः शतयोजनविस्तीर्णं समुद्रम् । परन्तु देवेन वायुना जनितस्य विशेषतो रुद्रावतारस्य हनूमतो महान् प्रभाव आसीत्; वायुर्हि दिव्यशक्तिसम्पन्नः सहस्रमपि योजनानि मुहूर्तेन लङ्घयति, बलेन च वृक्षप्रासादादीन् भङ्क्त्वा पातयति, तस्य पुत्रो हनूमान् पितुः कञ्चिदपिमहिमानं प्रापैव इत्यतः स शतयोजनमपि समुद्रं ललङ्घे । रुद्रावतारतया च तस्य महाबलशालित्वं । रुद्रोहि महाप्रलये सर्वं जगत् संहरति, किं विचित्रं तदात्मकस्य हनूमतो गन्धमादनपर्वतानयनमिति प्रौढया प्रगल्भया उक्त्या हनूमतः शतयोजनविस्तीर्णसागरलङ्घनादिकोऽर्थः सिध्यतीति प्रौढोक्तिसिद्धोऽयमर्थः सर्वेषां लोकानां विश्वासयोग्यो न भवति ।

ननु रसभावादीनामाधिक्यात् काव्यस्य यदि चमत्कारित्वं स्यात् तदा किं छिन्नं प्रौढोक्तिसिद्धेन अर्थेन । उत्तरचरिते रामस्य विप्रलम्भरसः सान्द्रतया कस्य सचेतसो मनो न हरति, सहि सर्वएव वि-

प्रलम्भरसः प्रौढोक्त्या सिद्धेनार्थेन व्यक्तः। एवम् 'आरव्योपन्यासे' प्रौढोक्तिसिद्धानामर्थानां बाहुल्यात्, मन्ये, सर्वेषामेव असत्यता प्रतीतिर्जायते, परन्तु तस्य रसः कस्य वा मनो नाकर्षति; कोवा तमुपन्यासं पठन्नभिनिविष्टचेता न भवति ?

ननु तस्य उपन्यासस्य असत्यताप्रतीतावपि न काचित् क्षतिः, सर्वेषां साभिनिवेशप्रवृत्तिदर्शनादिति चेत् न यत्र काव्येऽसत्यता-प्रतीतिर्भवति तस्य काव्यस्य उपदेशोऽपि मिथ्यात्वेनैव गृह्यते ततश्च काव्यस्य प्रयोजनं तेन न सिध्यति इति तस्य काव्यस्य निष्फलत्वा-पत्तिः। काव्यस्य मुख्यं प्रयोजनं हि रामादिवत् प्रवर्तितव्यं न रावणा-दिवदित्युपदेशदानमेव।*

---

* तथाच उक्तं काव्यप्रकाशे,

काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये।

सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे ॥ इति

अस्यायमर्थः। काव्यं यशसे, काव्यस्य प्रयोजनं यशः। कविर्हि काव्यंनिर्माय कालिदासादिवत् चिरस्थायि असाधारणं यशोलभते। इत्येकं प्रयोजनम् ॥ १ ॥

काव्य"मर्थकृते", अर्थस्य धनस्य कृत् करणम् तस्मै। कविः काव्यं निर्माय तद्विक्रीय अर्थोपार्जनं करोतीति प्रत्यक्षसिद्धमिदं काव्यस्य द्वितीयं प्रयोजनम् ॥२॥

काव्यं "व्यवहारविदे", व्यवहारस्य राजादिभिः सह पण्डितानां मुनीनां मन्त्रिणां अन्यसचिवानां दासानां महिषीणां प्रजादीनां च यादृशोव्यवहारः कर्तव्यः तस्य विद् ज्ञानं तस्मै व्यवहारविदे। कविर्हि काव्यं निर्माय तद्द्वारा कीदृशेन जनेन सह कीदृशस्य जनस्य कीदृग्व्यवहारोजात इति काव्यपाठकानुपदिशति। यथा पातशाहादिभिः पातशाह जातादिभिश्च सह कः कीदृग्व्यवहरेदिति आकबरादिचरितेषु काव्येषु ज्ञात्वा इदानीं-तनाः प्रिन्स अव् ओयेल्स् नामकेन सम्राट् कुमारेण सह तादृशं व्यवहरन्ति एतो व्यवहारज्ञानं तृतीयं प्रयोजनम् ॥ ३ ॥

यदि काव्ये असत्यताप्रतीतिरुत्पद्यते तदा तदीयोपदेशेऽपि असत्यताप्रतीति र्दुर्निवारा भवति। तथाहि यदि रामायणे असत्यताप्रतीतिः स्यात्, तदा रामस्य तादृशसदाचारे रावणस्य च तादृशदुराचारे, मिथ्यात्वप्रतीतिर्जायेत। तथात्वेसति, रामस्य तत्तत् सदाचरणं पराजयस्य कारणमित्यपि न प्रतीयेत, सुतरां रामवत् प्रवर्त्तितव्यम् रावणवत्तु न प्रवर्त्तितव्यमित्यस्मिन्नुपदेशेऽपि विश्वासो नोपपद्येत इति काव्यस्यैव वैयर्थ्यं स्यादिति। अतः काव्ये यथा असत्यताप्रतीति र्न स्यात् प्रत्युत सत्यताप्रतीतिरेव दृढ़ा भवेत् कविना तथैव यत्नः कर्त्तव्यः इत्यत उक्तं प्रौढ़ोक्तिसिद्धादर्थात् स्वतः सम्भविनो·

---

काव्यं "शिवेतरक्षतये", शिवेतरस्य अमङ्गलस्य पापस्येति यावत् क्षतये ध्वंसाय। भगवत् स्तोत्रादिकं काव्यं हि कवेः पापं विनाशयति। अत्र प्रसिद्धिः मयूरभट्टनामा कश्चित् कविः कुष्ठरोगग्रस्तोभूत्वा सूर्यशतकं नाम काव्यं निर्माय तेन सूर्यं स्तुत्वा आरोग्यदातुर्भगवतः सूर्यस्य प्रसादात् कुष्ठरोगात् मुक्तोबभूवेति। सर्वदेशवासिनः सर्वएव आस्तिकाः खलु परमेश्वरस्तोत्रं पापक्षयकारणं मन्यन्त इति॥

दुरदृष्टध्वंसःकाव्यस्य चतुर्थं प्रयोजनम् ॥४॥

"सद्यः परनिर्वृतये", सद्यः काव्यनिर्माणसमये काव्यश्रवणसमये च काव्यं परमानन्दं कमपि जनयतीति पञ्चमं प्रयोजनम् ॥५॥

"कान्तासम्मिततयोपदेशयुजे" कान्ता यथा क्रीड़ाकौतुकादिरसैः प्रेयांसमात्माभिमुखीकृत्य उपदिशति प्रियतम, प्रार्थेश, मह्यमेकां वाराणस्याः शाटिकां देहि इति, सच उपदेशः रसैरार्द्रीकृतेन प्रेयसा कदाचिदपि प्रत्याख्यातुं न शक्यते, तथा काव्यमपि शृङ्गारादिभीरसैः श्रोतारं द्रष्टारं वा अभिमुखीकृत्योपदिशति रामवत् प्रवर्तस्व न रावणवदिति; एवं च स उपदेशः प्रियायास्तदानीन्तनोपदेशवत् अलङ्घनीयो भवति। इति षष्ठं प्रयोजनम् ॥६॥ इदमेव प्रयोजनं काव्यस्य सर्वेभ्यः प्रयोजनेभ्यो मुख्यतमम्। अस्य उपदेशरूपस्य प्रयोजनस्य यत्र काव्ये सद्भावस्तस्य सत्काव्यत्वं, यत्र पुनरसद्भावस्तस्यासत्काव्यत्वं निश्चीयतां सद्भिः।

ऽर्थस्य सर्वेषां हृदयङ्गमतया उत्कृष्टतरत्वमिति। एवञ्च भवभूतेरुत्तरचरिते रसस्य आधिक्ये सत्यपि प्रौढोक्तिसिद्धानामर्थानां बाहुल्यादभिज्ञानशकुन्तलापेक्षया उत्तरचरितस्य निकर्षं वयं मन्यामहे।

प्रौढोक्तिसिद्धोऽप्यर्थो द्विविधः। तयो रेकतरः कवे रात्मन एव प्रौढोक्त्या सिद्धः। यथा हनूमतः शतयोजनविस्तीर्णसागरलङ्घनं वाल्मीकेः प्रौढोक्तिसिद्धोऽर्थः। यथा वा उत्तरचरित तृतीयेऽङ्के मुरलया नद्या सह तमसानद्या उक्तिप्रत्युक्ती भवभूतेरेव प्रौढोक्तिसिद्धोऽर्थः। तृतीयाङ्के विष्कम्भः।

अन्यतरस्तु कविना निबद्धस्य अन्यस्य कस्यचित् प्रौढोक्त्या सिद्धः। कवेः प्रौढोक्तिसिद्धादर्थात् कविनिबद्धस्यान्यस्य प्रौढोक्त्या सिद्धोऽर्थः किञ्चिन्मनोरमः। यथा अभिज्ञानशकुन्तले दुष्मन्तस्य पुरोधसोमुखेन कविना सशरीरायाः शकुन्तलायाः स्वर्गलोकोत्पतनं वर्णितम्। यथा—

नेपथ्ये। आश्चर्यमाश्चर्यम्!

राजा। (कर्णं दत्वा) किन्नु खलु स्यात्?

पुरोधाः (प्रविश्य) देव, अद्भुतं खलु सवृत्तम्!

राजा। किमिव?

पुरोधाः। देव, परावृत्तेषु कण्वशिष्येषु,

सा निन्दन्ती स्वानि भाग्यानि वाला,
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता।

राजा। ततः किम्?

पुरोधाः। स्त्रीसंस्थानञ्चाप्सरस्तीर्थ मारात्,
उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत्।

इति प्रौढोक्तिसिद्धोऽर्थो विवृतः।

अन्यथापि अर्थस्य द्वौ भेदौ स्तः। यथा स्वयोनि रन्यच्छायायोनिश्चेति। तयोर्मध्ये कविना योऽर्थः स्वयमेव प्रथममुद्भावितः सः

स्वयोनिः । स्वः कवेरात्मैव योनिरुत्पत्तिहेतुर्यस्येत्यर्थः । यथा "सद्योमुण्डितमत्तहूनचिबुकप्रस्पर्द्धिनारङ्गकम्" । इत्यत्र कविना उद्भावितं सादृश्यं केनाप्यन्येन न ततः पूर्वमुट्टङ्कितम् । मत्तस्य हूनस्य चिबुकं हि नारङ्गक ( नारङ्गो ) फलवत् रक्तगौरं भवति । सद्योमुण्डितत्वेन च चिबुकस्योपरि नारङ्गकफलस्य उपरीव कूर्चमूलानां कृष्णकृष्णविन्दुचिह्नानि दृश्यन्ते इत्यतोऽयमर्थः स्वयोनिः । सादृश्यमिदञ्च अतीव चमत्कारजनकम् । यथा वा अभिज्ञानशकुन्तले—

"स्मर एव तापहेतु र्निर्वापयिता स एव मे जातः ।
दिवस इवाभ्रश्याम स्तपात्यये जीवलोकस्य" ॥

इत्यत्र य एव तापस्य हेतुः स एव तापस्य शान्तिकारकः इत्ययमर्थोऽसम्भव इव प्रतिभाति । अतः सादृश्येन महाकवि स्तमर्थमुपपादयामास—"दिवस इवाभ्रश्याम" इति । तपात्यये वर्षासु ऋतौ यद्दिनं मेघाच्छन्नं भवति, वृष्टेः प्राक् तद्दिनमतीव ग्रीष्मसन्तप्तमसह्यमिवानुभूयते । वृष्टौ सत्यां तु तदेव दिनं कदाचित्तथा शीतलं भवति यथा वस्त्राच्छादनेनापि शीतं न निवार्यते । सोऽयं दृष्टान्तः कालिदासेनैव स्वप्रतिभया प्रागुद्भावित इति स्वयोनिरयमर्थः । यथा वा—

"तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे,
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः" ॥

इति मेघदूते मयूरनर्त्तनरूपोऽर्थः कालिदासेनैव प्रथमतः परिकल्पितः । सोऽयमर्थः स्वतः सम्भवी च स्वयोनिश्च ।

अन्यच्छायायोनिरर्थस्तु अन्यस्य कवेरर्थस्य च्छायामात्र मवलम्ब्य अन्येन कविना यः परिकल्प्यते, सोऽर्थोऽन्यच्छायायोनिः । यथा प्राचीनै र्व्यासवाल्मीकादिभिः कविभिः प्रथमतो नीलोत्पलसादृश्येन सुन्दर्या नयनस्य मनोहरत्वं वर्णितम् । तेषां तस्य अर्थस्य च्छाया मुपजीव्य अन्येन कविना—

"निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी" ॥

इत्येतत्काव्यं ग्रथितम् । अस्यार्थश्च कुसुमचयनकारिणी काचित् सुन्दरी जले पुष्पं चिन्वती निजनयनप्रतिबिम्बान्येव जले दृष्ट्वा नीलोत्पलभ्रमेण तान्युद्धर्तुं हस्तं प्रसार्य प्रसार्य वञ्चिता सती तात्त्विके नीलोत्पलेऽपि हस्तमर्पयितुं विमृशति, इदं मम नयनप्रतिबिम्बं, उत नीलोत्पलमिति विकल्प्य शङ्कते इति । एषोऽर्थोऽन्यच्छायायोनिः । यद्यपि अयमर्थोऽन्यच्छायायोनि स्तथापि नूतनया कविप्रतिभया योजितत्वादपूर्व इव प्रतिभाति । नयननीलोत्पलयोः परस्परसादृश्यञ्च अतीवसङ्गततया चमत्कारविशेष मुद्भावयति । यथा वा—

"चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला, द्विसंश्रयां प्रीतिमवाप लक्ष्मीः" ॥

इत्यत्र कालिदासोऽपि अन्यच्छायायोनिमर्थं बबन्ध । प्राञ्चो वाल्मीकिव्यासादयः कवयः चन्द्रवन्मुखम्, पद्मवद् वदनमिति चन्द्रस्य पद्मस्य वा सादृश्येन मुखसौन्दर्य्यं तुष्टुवुः । कालिदासस्तु तयो रुभयो रेव सादृश्यं भङ्गीविशेषेण उमामुखे व्यञ्जयामास, एवमन्यच्छायायोनिरप्ययमर्थः स्वयोनिरिव नूतनायते । परन्तु अन्यस्य कवेरर्थमेव शब्दान्तरेण यदि कोऽपि गृहीत्वा ग्रथ्नाति, तदा स निन्दनीय एव । उक्तं हि केनचित् कविना—

"कृतप्रवृत्ति रन्यार्थे कविर्वान्तं समश्नुते" ॥ इति ॥

वान्तभोजीव स इतिभावः । भवभूतिस्तु "तन्मध्ये च स्फटिक फलके" त्यादेः कालिदासकृतेः पद्यस्य अर्थं—

"भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः,
प्रचलितचटुलभ्रूताण्डवै र्मण्डयन्त्या ।
करकिसलयतालै र्मुग्धया नर्त्यमानम्,
सुतमिव मनसा त्वां वत्सलेन स्मरामि" ॥

इत्यनेन अनुकृत्यैव बबन्धेति वयं तर्कयामः । भवभूतिर्हि कालिदासा-दर्वाचीनः कविरित्यतः कालिदासापेक्षया भवभूते र्निकर्षः ।

उत्तरचरितेऽन्यस्य कवे रर्थानुकरणमस्ति इति तस्य अभिज्ञान-शकुन्तलाभिकृष्टत्वं ब्रूमः ।

अपिच अभिज्ञानशकुन्तले पञ्चमेऽङ्के—

"न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्" इति,

"न विवृतो मदनो न च संवृतः" इति च यथैव उक्तं तथैव उत्तरचरिते—

"पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा" इति भवभूतिना उक्तम् । कालिदास एव इत्थं विरुद्धयोः क्रिययोरेव नि-षेधं कृत्वा बहुश उक्तिवैचित्र्यमदर्शयत् । यथा—

"शैलाधिराजतनया न ययौ न तस्थौ"

"साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम्" ॥

इत्यादि । उक्तिवैचित्र्यमेव ह्यलंकारः । अन्यत्र च अर्थयोस्तुल्यता दृश्यते । यथा अभिज्ञानशकुन्तले, षष्ठेऽङ्के मिश्रकेशी—

"सव्वधा प्पमज्जिदं तुए पश्चादेश दुक्खं

पिअसहीए, पच्चक्खं ज्जेव सहीजनस्य" इति ।

उत्तरचरिते च तृतीयेऽङ्के सीता, "अज्जउत्त, दाणीं सि तुमं अम्महे उक्था इदं दाणीं मे परिक्खाअसल्लं अज्जउत्तेण" इति । अनयो-र्द्वयो रर्थयोस्तुल्यतैव । अपरत्र च अभिज्ञानशकुन्तले "सविषमिव शल्यं दहति माम्" इति, उत्तरचरिते च "यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः" इत्युभयोः सादृश्यं प्रायस्तुल्यम् । किञ्च अभिज्ञानशकु-न्तले:—सख्यौ । (तथाकृत्वा) "सहि जइ नाम सो राएसी पच्चहिस्माण मन्थरो भवे तदो से इमं अत्तणो णामधेअङ्कितं अंगुलीअअं देंसस्सम-सि" । शकुन्तला । इमिणा वो सन्देशेण कम्पिदं मे हिअअम् । सख्यौ । सहि मा भाआहि सिणेहो पाव मासङ्कदि । इति । उत्तरच-रिते च—

वासन्ती। अयि कठोर यशः किल ते प्रियं,
किमयशो ननु घोरमतः परम्।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं वत मन्यसे॥

सीता। सहि वासन्ति, तुमं एव्व दारुणा कठोरा अ।
जा एव्वं पलवन्तं पलावेसि।

तमसा। प्रणय एवं व्याहरति शोकश्च इति "स्नेहः पापमाशङ्कते" "प्रणय एवं व्याहरति शोकश्च" इति उभावेव अर्थौ एकविधौ। तथाहि "स्नेहः पापमाशङ्कते" इत्यस्य अर्थः स्नेहः पापमाशङ्कयति इति। "प्रणय एवं व्याहरति शोकश्च" इत्यस्याप्यर्थः प्रणय एवं व्याहारयति शोकश्च इति द्वयोरेव वाक्ययोः लक्षणया णिचोऽर्थः बोद्धव्यः। स्नेहे आशङ्कायाः प्रणये च व्याहारस्य साक्षात्कर्तृत्वेन अन्वयानुपपत्तेः। लक्षणायाः प्रयोजनं च व्यङ्ग्यम्। तच्च व्यङ्ग्यम् "स्नेहः पापमाशङ्कते" नतु आवां पाप माशङ्कावहे इति। तथाच त्वयि आवयोर्यः स्नेहोऽस्ति स एव पापाशङ्की नतु आवामिति भावः। प्रणय एवं व्याहरति इत्यत्रापि प्रणयस्यैव अयं दोषः नतु वासन्त्याः कठोरत्वं दारुणत्वं वा इति व्यङ्ग्यो भावः। इत्युभयत्र ध्वनेस्तुल्यत्वमिति पर्यालोचयन्तु सन्तः। लक्षणामूला शाब्दीयं व्यञ्जना।

किञ्च मेघदूते—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं,
सास्रेणास्रद्रुतमविरतोत्कण्ठ मुत्कण्ठितेन।
दीर्घोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्ते विशति विधिना वैरिणारुद्धमार्गः॥

इत्यत्र यथा कालिदासेन नायिकानायकयो रङ्गयोस्तुल्यावस्था विशेषणेन सूचिता तथा उत्तरचरितेऽपि तृतीयेऽङ्के—

रामः। हाधिक् प्रमादः।

करपल्लवः स तस्याः सहसैव जडो जडात् परिभ्रष्टः।
परिकम्पिनः प्रकम्पी करान्ममस्विद्यतः स्विद्यन्। इति।

उत्तरचरिते पौनरुक्त्यमपि दृश्यते यथा द्वितीयेऽङ्के—

"वासन्ती । अथ स रामभद्रः किमाचारः ।

आत्रेयी । तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः ॥

वासन्ती । अहह ! धिक् परिणीतमपि ॥

आत्रेयी । शान्तं नहि नहि ।

वासन्ती । का तर्हि यज्ञे सहधर्मचारिणी ॥

आत्रेयी । हिरण्मयी सीताप्रतिकृतिः" ।

इति आत्रेयीमुखात् वासन्ती शुश्राव ।
तथापि तृतीयेऽङ्के—
रामः । अस्तिचेदानीमश्वमेधसहधर्मचारिणी मे ॥

सीता । ( साक्षेपं ) अज्जउत्त, का सा ?

वासन्ती । परिणीतमपि किम् ?

रामः । नहि नहि, हिरण्मयी सीताप्रतिकृतिः ॥

इत्यत्र वासन्त्याः पौनरुक्त्यं दोषः ।

इति कालिदासभवभूत्योस्तारतम्यं सहृदया एव विचारयन्तु किं महाकवेर्दोषोद्धारणेन ।

क्रमशः

श्रीमहेशचन्द्रतर्कचूड़ामणिः
राजारामपुरम्, दिनाजपुरम् ।

——o——

## वार्त्ताः सम्पादकाभिप्रायाश्च ।

अस्मत्पाठकानां कैश्चिद् वाराणस्यां 'दरिद्रदुःखप्रतीकारसमिति'-रित्यपराभिधेयस्य 'रामकृष्णसेवाश्रमस्य ( Ramkrishna Home of Service ) वृत्तान्तो विज्ञातपूर्वः । अस्य पञ्चमवार्षिककार्यविवृतिमालोकयतामस्माकं हृदयकन्दरो महतानन्देनापूर्यते । 'स्निग्धे शिरसि सर्व एव तैलं निषिञ्चतीति' लौकिकानामाभाणकम् अन्यथयितुमिव बद्धपरिकरोऽयं यथार्थाभिधान आश्रमः । दारिद्र्यदहनदग्धानां

विविधामयकवलितकलेवराणामधन्यानां साहायकाय प्रज्ञावत्स्वपि लक्ष्मीवत्स्वपि च स्वल्प एव स्वहस्तावलम्बमर्पयन्ति। भगवत्यान्नपूर्णया कृताधिष्ठानायां वाराणस्यां मुष्टिमेयेनान्नेन कथञ्चिद्गच्छेदेव दिनमिति व्यर्थप्रायचिन्तया बहव एवेह समागत्य प्रतिकूलेन दैवेन व्याधिदानशीलेन च परिपीड्यमाना उपेक्ष्यमाणाश्च पार्श्वगामिभिः पश्यद्भिर्जनैर्निःसहायाः परां विपत्तिमापद्यन्ते। अस्माकं 'रामकृष्णसेवाश्रमः' प्रतिद्वारं भिक्षाटनोपलब्धधनतण्डुलादिदानेन यावच्छक्यं कथञ्चित्तेषामेव तपस्विनां दुःखापनोदनार्थं प्रयतमानः प्रशस्यतमं कृत्यमनुतिष्ठति। अतीतेऽब्देऽस्मादाश्रमात् १२५ जनाः येषां ५१३ पुमांसः, स्त्रियश्च ४१२, साहाय्यकमधिगताः। जातिधर्माभिजनादिनिर्विशेषं खल्वनेनातुरा जनः सेव्यत इत्युद्घोषानुरूपमेवास्य कृत्यमिति तदीया कार्यविवृतिः, पश्यतामस्माकं नयनानि च प्रदर्शयति। विस्तरः कार्यविवृतौ ज्ञेयः। साम्प्रतन्तु आश्रमस्य स्वकीयगृहाभावादातुराणां सेवनादिकार्येषु महदसौकर्यं जायते; अतस्तेन सहास्माभि स्तदर्थं सकरुणाः सचेतसो यथाशक्तिद्रविणादिसाहाय्यं प्रार्थ्यन्ते। स्वल्पतरमपि दानं बहु मंस्यते। दातृभिर्दित्सितं द्रव्यमाश्रमसहकारिसम्पादकसमीपे प्रेषणीयम्। तत्स्थानसङ्केत इत्थं—सहकारिसम्पादकः, रामकृष्णसेवाश्रमः, रामापुरा, बनारस सिटी। The Assistant Secretary, Ramkrishna Home of Service, Ramapura, Benares City.

* * * * * * *

हंहो पाठकमहाभागाः सम्प्रत्यपि नोच्छिन्नान्यस्माकं वेदविद्याविरहितानामप्यार्यम्मन्यानाम् आम्नायादीनि तानि तानि शास्त्राणि, न च नेदानीमप्यध्यापयन्त्यध्यापकाः, अधीयते चान्तेवासिनः परन्तु सर्वमपि कथं कथमिव विपर्यासापन्नमिह परिदृश्यते। यः खलु 'गुरुकुल'-शब्दः पुराकिल बालस्यापि विशेषतो ब्राह्मणादिवंशीयस्य नितान्तं सुपरिचित आसीत्, स एवेदानीं बहुवर्षीयैरपि संस्कृतशास्त्रमधीयानैरपि चान्तेसदैः कोषोद्घाटनमन्तरेण न ज्ञायते। अद्यत्वे ग्रन्थमात्र-

स्थितोऽयं शब्दः । कीदृशः पुनस्तदर्थ इति नास्माभिः प्रत्यक्षीकर्त्तुं शक्यते । एतादृशे च भारतीयानामधःपातसमये यदि किञ्चिद् विकलोऽपि वा गृहीतपरिच्छदान्तरोऽपि वा स एवार्थोऽस्माकं नयनपथमवतरेत् तर्हि क इव प्रमोद उत्पद्यत इत्यनुमीयतां भवद्भिः ।

युक्ते वयसि गुरुकुलमुपनीता वटवो यथानियमं ब्रह्मचर्यमाचर्य कां नु खलु विश्वतोमुखीं कल्याणपरम्परां लेभिर इति न जानन्ति वयं चिन्तयामः, न च तस्य चिन्तनीयत्वमपि गणयामः । अवितथमिदं यदिदानीं सर्वथा प्राचीनरीत्यागुरुकुलनिषेवणेन साम्प्रतिकी लोकस्थितिर्दुर्लभेति । तथापि पृष्टो व्याचष्टां भवान्—किमङ्ग अपेक्षितेन प्रकारेण संस्कृत्यापि गुरुकुलनिवासो ग्रहीतुं न शक्यते ? मन्यामहे ब्रह्मचर्याभावादेव प्रायेणेदानीं भारतीयानामकालवार्द्धक्यम्, अल्पायुष्ट्वशक्तिह्रासः धर्मानाश्वासः, ईश्वराननुरागादयश्च विविधा उपद्रवा आविर्भवन्तीति । कृते संस्कारे, यः कोऽपि यां काञ्चिद्दिशां कि नाधिगच्छतु न दुष्करं तेन ब्रह्मचर्यपरिपालनं भवेदिति विश्वसिमः । अतएव समाजहितचिकीर्षुभिः 'आर्य-समाज'-मतानुसारिभिः सम्भूय यथाविवेकं प्राचीनां पद्धतिं संस्कृत्य हरिद्वारसमीपे जाह्नवीतटे 'गुरुकुलम्' इति ब्रह्मचर्याश्रमः स्थापितः, यस्य खलु वृत्तान्तपुस्तकं तन्मुख्याधिष्ठातृमहाशयेन कृपयास्मभ्यमुपहृतम् । क्षुद्रविग्रहेयं पत्रिका विस्तरशस्तदालोचयितुमसमर्था । तथापीदं समासतोऽवश्यमेवाऽस्माभिर्वक्तव्यं पाश्चात्यसाहित्यविज्ञानादिव्यवस्थामपि क्रोडीकृत्य प्राचीनांश्च नियमकलापान् यावत्सौकर्यं परिपालयद् गुरुकुलमेतत् सर्वेषामेवोदारहृदयानां नूनं महीयसीं प्रशंसामर्हतीति । आर्यसमाजानुसृतं मतमस्मत्सम्मतं न वेति नेह तत्र किञ्चिदुच्यते, नचास्य पत्रिकायां तत्प्रकाशनार्थमस्माकमवसरोऽप्यस्ति; सम्भवियमानसम्प्रदायविशेषवैमनस्यस्य कृत्यकलापस्य हि निषिद्धः सञ्चारो गोष्ठ्या सुतरां च तत्प्रकाशितायां पत्रिकायाम् । न चेह तन्मतप्रकाशनस्या

पेक्षाप्युत्प्रेक्ष्यते। इदन्त्वस्माभिः स्पष्टमुदीर्यते यत्र वयं तेषां महनीय-महिम्नामपि विद्वद्धौरेयाणां पन्थानमनुगन्तुं प्रभवाम इच्छामो वा, ये हि आर्यसमाजेन स्वनामधेये 'आर्य'पदं प्रयुक्तमालोक्य स्वयमार्याः सन्तोऽपि न तेन पदेनात्मानं व्यपदेष्टुमभिलषन्तीति। आर्यसमाजो धर्मादिविषये युक्तं मतमनुसरतु मैव वा, परन्तु तेन समाजमङ्गलार्थं विधीयमानःप्रयत्नः प्रशस्य एवेति स्वीकर्त्तव्यमेव। आर्यसमाजस्य जलन्धरनगरवर्त्ती-'कन्यामहाविद्यालयो'ऽप्यपरं तस्य सामाजिक-कल्याणसाधनोदाहरणस्थानम्। अन्यच्चैवं लाहोरस्थो 'दयानन्दा-ङ्गलोवैदिकविद्यालयो'नाम।

*　　*　　*　　*　　*

अस्माकं श्रीभारतधर्ममहामण्डलेन पुनः किमद्ययावत् कृतं लोकोपकाराय? कासाञ्चिदवान्तरसमितीनां स्थापनं, स्थानेषु स्थानेषु अन्तरोपदेशक-महोपदेशकानां प्रेरणम्, वस्तुतो हितकाराणां केषांचिन् कर्मणां सङ्कल्पं विना नान्यत् किञ्चिदुपलभामहे। महामण्डलेन स्वमतावलम्बिनां कृते आर्यसमाजस्योदाहृतानीव कर्माण्यवश्यमनुष्ठेयानि, विशेषतस्तु ब्रह्मचर्याश्रमस्थापनं नाम। महामहानृपतीनां नामाक्षराणि महामण्डलस्य सहायकसंरक्षकादिश्रेण्यां दृश्यन्ते। किं नाम दुष्करमेतैः स्वधर्मरक्षणवर्द्धनप्रचारणार्थम्? कियद्वा द्रव्यमपेक्ष्यते। बहु खलु कृतं महामण्डलस्य श्रीमता ज्ञानानन्दस्वामिना। अपि नाम तत्र भवान् साम्प्रतमस्मिन् विषये स्वनयनं सञ्चारयेत्?

*　　*　　*　　*　　*

नातिपूर्वं केनापि सुशिक्षितेन जापानीयेन विदुषा स्वदेशीय-शिक्षापद्धतिविषये अत्रत्यनगरमन्दिरे व्याख्यानं कृतम्। अयमिह तस्य संक्षिप्ततरो निष्कर्षोऽस्मत्पाठकेभ्य उपह्रियते:—इतः ४० वत्सरपूर्वं जापानदेशो उच्चशिक्षाया निष्प्रयोजनत्वममन्यत, परन्तु ततः

प्रभृति शिक्षा तथा प्रचलिता, यथा साम्प्रतं तत्रत्यानां जनानां प्रतिशतकं १८ जना लिखितुं पठितुं च जानन्ति । स्त्रीषु षष्ठात् चतुर्दशं वत्सरं यावत् सर्वा एव राजनियमेन पठितुं विद्यालयं प्रेर्यन्ते । तत्र ताभ्यो लिखनं पठनं च विना रन्धनं गृहकर्मपरिपाटीप्रभृतीनामपि शिक्षा दीयते । व्यायाममपि यथोचितं ता अभ्यस्यन्ति । बालकानां शिक्षाव्यवस्था सर्वकर्मोपयोगिनी । जापानीयतरुणाः प्रायेण राजकीयं कर्म नेच्छन्ति । त एव हि राजानं पुष्णन्ति, न पुन स्तेन पुष्यमाणमात्मानमिच्छन्ति । जापाने द्वौ राजकीयौ अपरे च कतिचिद् अराजकीया विश्वविद्यालयाः सन्ति । राजकीयाराजकीययोस्तयोरेतावानेव भेदो यत्पूर्वस्मिन् एकप्रकारैव शिक्षा, अन्यत्र तु विविधा सा । जापाने द्विविधमक्षरं व्यवह्रियते, एकं तत्रत्यमेव, अन्यत्तु चीनजम् । उभयमपि दुरधिगमम्, तेन च शिक्षाया महानन्तरायो भवतीति साम्प्रतं रोमकाक्षरग्रहणप्रस्तावस्तत्र प्रचलति । व्याख्याताऽयं समर्थयत एव । जापानीयाः सत्यमन्विष्यन्ति, अतस्ते स्थितमधममात्मनो दूरीकर्तुम्, अस्थितं चोत्तममन्यस्माद् ग्रहीतुं नियतमुन्मुखाः । श्रीमता व्याख्यात्रा स्वव्याख्यानमित्थमुपसंहृतम् :—
" Pride of India is pride of Japan, shame of India is the shame of Japan."—भारतस्य गौरवेण जापानस्यापि गौरवम्, भारतस्य लज्जया तु जापानस्यापि लज्जेति ।

   

अन्येद्युः लण्डननगरवर्त्तिन्यां 'Royal Asiatic Society'-सभायामनेनाध्यापकेन म्याकडोनेलेन भारतीयराजपुरुषाणां संस्कृतशिक्षावश्यकत्वविषये कश्चित्प्रबन्धः पठितः । संस्कृतशिक्षयैव भारतीयानामाचारव्यवहारादिकं सुष्ठु ज्ञातुं शक्यं, शक्यं च तथैव तेषां धर्मविधिनियमादिकमवबोद्धुं येन ब्रिटिशपुरुषैर्भारतीयानां शासनं चारुतरं सम्पद्येतेति । स खल्विदं विविधाभिर्युक्तिभिः प्रतिपाद्य 'सिविल

ार्विस्'-परीक्षायां संस्कृताध्ययनावश्यकत्वनियमव्यवस्थापनप्रस्ता-
वम् अकार्षीत्। सभापतिना तु तत्परीक्षायां संस्कृतस्य तथात्वेन
वर्त्तनं साम्प्रतं दुर्लभावकाशमिवेत्युक्तमासीत्।

* * * * * * *

महामतिरुदारनीतिकत्वेन प्रख्याततरो भारतसचिवमहाशयः कै-
श्चिद् भारतबन्धुभिः वङ्गव्यवच्छेदप्रतीकारार्थं प्रार्थितः सन् वङ्गी-
ानां वङ्गव्यवच्छेदानलसन्तापः प्रशान्तः अतः कृतं तत्प्रलङ्गेन इति
ःमर्णात्रेनोत्तरेण तेषां कर्णविवरमशीतलयत्। तदिदं विज्ञाय वङ्गानां
ुनरप्यभिनवैव काचिदवस्थोपस्थिता। राजपुरुषाणामनुचितेन निरा-
ाणेनादर्शेन दुःखदहनज्वालाकलापैर्दह्यमानेष्वपि हृतिपण्डेषु वङ्गी-
ानां तत्प्रकाशनसामर्थ्यं तिरोहितमिवासीत्। कस्य खलु स्कन्ध
ुर्द्दयमस्ति, यो हि नीचस्यापि राजपुरुषस्य तर्जनीसञ्चालनतोऽपि
विभीयात्। किम्पाकफलानामिव वङ्गीयानां बाह्यरूपं विलोक्यैव
वस्थास्ति इति राजपुरुषैर्निर्णीतं परन्तु यद्यैस्तेषामन्तर्भागेषु नयन-
मलं सञ्चारितं स्यात् तर्हि विलोक्यन्त यद् दुःखदहनदग्धत्वाद्
ाङ्गारकृष्णं संवृत्तं तेषां हृदयमण्डलमिति। यथा वा भवतु, वङ्गेषु
ङ्गव्यवच्छेदस्यानभिमतत्वप्रख्यापनोत्साहः स्वदेशवस्तुव्यवहारा-
ध्यवसायश्च पुनरपि प्रभूततरेण रभसेन प्रवर्त्तते। नूतनमिव जीवनं
ब्धं वङ्गीयैः। पुनरप्युद्यमातिशयेन समितीः संस्थाप्य देवताश्च
ाक्षीकृत्य स्वदेशद्रव्यव्यवहारः प्रतिज्ञायते ऽस्माकं वङ्गीयबन्धुभिः।

* * * * *

संस्कृतचन्द्रिकाया द्वादशखण्डीयनवमसंख्यायां पण्डितवामन-
स्य 'धर्मविप्लव'-नामकः सन्दर्भो मनोरमो विचार्यश्च। वयमस्य
ारितं समाप्तिं द्रष्टुमुत्कण्ठामहे। अस्यामेव संख्यायाम् एतान्यक्ष-
णि प्रकाशितानि—यानि सविशेषं सर्वेषां नयनाकर्षणमर्हन्ति:—

"पुण्यपत्तने ...वीरवर्यपटीयसः श्रीमतो राणासरतानसिंहमहाशयस्य वेधप्रयोगाः समघटन्त। अवेक्षिता आमूलान्तमेतेऽस्माभिः। यो यः किल प्रयोगो दृश्यते स स विस्मयस्तिमितमेवातनोति चेतो द्रष्टॄणाम्। मत्स्यवेधः, पत्रकरगतनारीकेलवेधो, वापीगतस्य जम्बीरस्योत्पातनमित्येवंविधाः किल प्रयोगा आनन्दपूरेण हृदयमुत्प्लावयन्तीव। यैः किल महामतिभिर्मत्स्यवेधशब्दवेधादिषु मिथ्यात्वमारोप्यतेऽवश्यममी अवेक्ष्यन्तां प्रयोगा एते येन सुदूरमुत्सरेद् दुराग्रहपिशाचिकेयमेतेषामिति ब्रूम इति"। इतोऽपि विस्तरश इदं शुश्रूषितमासीदस्माभिः। अपि नाम तत्सम्पादकमहाशयस्तामिमां वार्त्तां प्रपञ्चयितुं मनाक् श्रममङ्गीकुर्यात्। महत् खल्विह कौतूहलं जनानां विशेषतस्तु साम्प्रतिकानाम्।

* * * *

नातिपूर्वं दुर्धर्षगुर्खाबल प्रपीड़िते विग्रहिणीव स्वदेशानुरागप्रभावे वङ्गेषु वरिशालनगरे अन्येद्युर्वङ्गीयप्रादेशिकसमिति सम्मेलने तत्तत्स्थानागता निरपराधाः सभास्तार-महाशयाः भूताविष्टानामिव, पिशाचपीड़ितानामिव वातग्रस्तानामिव वोच्छृङ्खलं विचरताम्, अनुचितमाचरताम्, अस्थान एव कुप्यतां बिभ्यतां च स्वार्थान्धानां राजपुरुषाणां निष्कारणप्रज्वलितेन कोपानलेन कथमिव निर्दयं प्लुष्टा इति कस्य नाम वर्त्तमाने समये परिचिताक्षरस्य क्षीरकण्ठबालकस्याप्यगोचरम्। तस्मिन्नहनि वङ्गीयानां तां खलु दुर्दशामालोक्य युगपदेवास्माकं हर्षो विषादश्च हृदयमधत्ताम्॥ एकतो दुर्विनीतानां मूढानां रक्षापुरुषाणां गुरुतरलगुडाघातेन निरपराधानां सामाजिकानां शिरसः सुदुर्दर्शः शोणितस्रावः, अन्यतश्च तदानीमपि निर्विचारमाहन्यमानानामपि तेषां तारात्तारतरं "वन्देमातरम्" इत्यत्रघोरितामृतनिष्यन्दो निखिलप्रेमसर्वस्वीभूतः सुप्रसिद्धो ध्वनिः। यावद्यावद् रक्षापुरुषाणां लगुडपातः, तावत्तावदेव भूतलपतितानामपि तेषामु-

श्चैस्तरां स एव सान्द्रगम्भीरो निनादः, कश्चिदष्टादशवर्षदेशीयो बालकश्चित्तरञ्जनो नाम आघातेनासन्नमृत्युरपि क्षीणीभूतात्कण्ठतो न तं ध्वनिपर्यत्यजत् । एष खलु ताडयद्भिः रक्षापुरुषैः सरोमध्ये न्यपात्यत; रुधिरधारया चायं भूतलमरञ्जयत् । इयं दशा बहूनामेवासीत् । इत्थमपि वङ्गीयास्तदानीं यदपूर्वं वीर्यमदर्शयन्, तत् खलु वस्तुत एवाद्भुतमनिर्वचनीयं च । एते हि पूर्वमेव तादृङ् निग्रहस्तैस्तैर्हेतुभिरन्वमीयत । तथा ज्ञात्वैव ते सकलदेशोपकाराय निरणयन् यत् ताडयतो विनाशयतोऽपि राजकीयपुरुषान् ताडयमाना अपि च वयं न लेशतोऽपि प्रहरेमेति । देशाधिनायकैः सुरेन्द्रनाथादिभिर्यथैवादिष्टं, कण्ठागतेष्वपि प्राणेषु वङ्गीया भ्रातरो निःशब्दं च तथैवाकार्षुः । तत्साम्प्रतं पश्यत भो वाचकमहाशया वङ्गानां वर्त्तमानामवस्थाम् । गिरिनिर्झरिणीप्रवाह इव प्रतिहन्यमानोऽयं वङ्गीयानां स्वदेशानुरागो भूयोऽभि वर्धमानः कमिव परिपाकमुपैष्यतीति न ज्ञायते । अथवा किमत्र ज्ञेयमवशिष्यते । सर्वथा स्वस्ति नो देवा करिष्यन्ति ।

तस्मिन् महत्युपद्रवे ईश्वरायमाणेन लीलान्यायेन विहरता वरिशालनगरकृ्रासनाधिकृतेन वङ्गाधिनायकानामन्यतमो महात्मा सुरेन्द्रनाथो रूप्यकाणां चतुःशतीं दण्डितः ।

राजपुरुषाणामीदृशेनानुचितेन व्यवहारेण न केवलं वङ्गाः, अपि तु निखिलं भारतमेव अवज्ञातम्मन्यं विषण्णमानसं च तिष्ठति । नैतच्चित्रं नाम । न हि शरीरस्यैकस्मिन्नङ्गे व्रणे परेषामङ्गानां लेशतोऽपि स्वास्थ्यानुभवो जायते । न चैतदप्यप्रसिद्धं यथो ह्येकं निकेतनं भस्मीभूतं करोति, स न पुनरपरं कुर्यादिति को नु स्वल्पबुद्धिरपि न प्रतीयादिति । तत् सर्वथा शिवं भवतु ।

* * * * * * *

कलिकातायां राजकीये 'प्रेसिडेन्सिकलेज'नामके विद्यालये कि-

मप्यभिनवं संस्कृताध्यापकपदं प्रतिष्ठाप्य तदधिष्ठानार्थम् इंलैण्डतः कश्चित् संस्कृतज्ञ आनेष्यत इत्यपरेद्युर्यंक्षीय व्यवस्थापकसभायाम-यमर्थो विचारित आसीत् । नैतत्प्रकाश्य कथनीयं यदेषोऽध्यापको भारतीयानेव संस्कृतमध्यापयेदिति । किमतः परं श्रोतव्यमस्ति ! दुर्विदग्धै राजपुरुषैः किं खल्वशक्यमसम्भाव्यं वा ! भारतीयान् संस्कृतं शिक्षयितुं किं भारतीया एव न प्रभवः ? अपि विलीनं नाम भारतीयेन संस्कृतपाण्डित्येन ? अथ संस्कृतशिक्षायां पाश्चात्याध्य-यनप्रकारः प्रवर्त्तनीय इति तदारम्भः नैतदपि पेशलम् । किं नु भो-स्तत्परिपाटीनिपुणेषु भारतीयानां स्थानं नावलोक्यते ? को वा स प्रकारः श्रीमतामायुष्मतामभिमतः, यो हि तादृशवैदेशिकाध्यापका-नयनमन्तरेण स्वल्पतमेन च व्ययेन भारतीयैरेव प्रवर्त्तयितुं न शक्यते । अथ स्वजातीयजनपोषणरूपे धर्मे प्रवर्त्तमानेष्वस्मासु कथं भवतोऽ-क्षमेत्युदीर्यते । स्पष्टमङ्ग तदेवोदीरयन्तु, तदेव श्रोतुमिच्छामः । नास्मिन् पक्षेऽस्माकं लेशोऽपि विप्रतिपत्तेः । कामं स्वैरं विहरन्तु भवन्तः ।

कर्णाकर्णिकया शृणुमो भारतीयेष्वेव कश्चिन् महापण्डितः ! दुविराहुत्या राजपुरुषाणां तमिमं मनोरथदहनं सुन्धुक्षयतीति । धिग् राजानुग्रहलोभम्, येन विवेकसामर्थ्यं सुदूरमुत्सार्याकर्त्तव्यमपि कर्त्त-व्यत्वेन निर्दिश्यते ।

——०——

## वर्षान्ते निवेदनम् ।

अनुग्रहेण भगवतो निखिलभुवनाधिपतेर्भूतनाथस्य, शुभाशंसया च सकरुणान्तःकरणानां सहृदयानां मित्राणां ग्राहकाणां च, ननु भोः पाठकमहाभागाः भवदीयेयं 'मित्रगोष्ठी-पत्रिका' समागताम् नैकवि-घानपायानतिक्रम्य द्वितीयमपि वर्षं कथमप्यतिवाहितवती । अद्येय मस्यास्तद्वर्षस्य चरमा संख्या श्रीमतां कमलकोमलपाणितलपरामर्श-

ख्यमनुभवितुं गच्छति । प्रथमवर्षशेषे 'निवेदन'-सन्दर्भे एतद्वर्षीय-
त्रिकायाः सौष्ठवातिरेकसम्पादनादिविषये बहु खल्वस्माभिः प्रति-
तमासीत्, अस्मद्धन्यतया तु न तद्यथामनोरथमिच्छद्भिरप्यस्मा-
: सम्पादयितुमशक्यतेति प्रकाममपत्रपते वितथवादिनां नः सेयं
खनी । नायमेक एवापराधोऽस्मिन् वत्सरे पत्रिकापरिचालकानाम् ।
तद्गोचरं नामैतेषां प्रथमप्रभृत्येव,—यदेतद्वर्षीयपत्रिकायां बालैरपि
बोधानां केषाञ्चित् स्खलितानां प्रचारेण पाठकमहाशयानां चित्त-
ततमामुद्वेगपरीतमजायतेति । किं तानि सम्पादकलेखनीतो वा,
दनवधानपरीक्षणतो वा, शोधकशोधनापाटवतो वा, मुद्रायन्त्रविल-
तो वा सञ्जातानीति प्रेक्षका एव विचारयन्तु किन्तु तदर्थमति-
र्त्तनायमानैः कैश्चिन्मङ्गलचिकीर्षुभिर्बन्धुभिः सोपहासमुदीरिता-
म् उपालम्भवचनानामपि भाजनीभूता वयमभूम । नूनं साधुवा-
र्हास्ते महात्मानः, यैर्हि करुणया तानि तानि स्खलितानि प्रदर्श्य
नां शोधनसौकर्यं सम्पादितवन्तः, निषिद्धवन्तश्च तथाविधानाम-
षां पुनः प्रचारम् । गच्छतः स्खलनं नामेदं नैसर्गिकम् । अतो
र्ं विस्मयावहं यदस्मिन् दुर्गमेऽध्वनि सञ्चरन्तो वयमपि क्वचित्
चिदपि स्खलेमेति । यथा तथा वास्तु, इदं पुनर्यत् सर्वथा गर्हणीयं,
: खल्वस्मद्विधो न तन्मुक्तकण्ठमङ्गीकुर्यात् । अलं निवेदनेन—आ-
मिनि वत्सरे नैतद्यथा पुनर्नयनगोचरतामापतेत्, पत्रिकापरिचाल-
: सर्वथा तथा कर्त्तुमवश्यं प्रयतेरन्निति । पत्रिकाया अपरापरगुण-
षविचारे श्रीमन्तः पाठकमहाशया एव प्रमाणम्, न वयमत्र स्वयं
ञ्चिद् वक्तुमभिलषामः । तथापीदं सुप्रकाशं नाम यन्मित्रगोष्ठी-
त्रकालेखानां भिन्न एव हि कश्चित्प्रकारो, यः खलु वर्त्तमानसमया-
कूलइति । पत्रिकायां प्रकाशनीयानां सन्दर्भाणां विषयादिविवेके
यतमेव वयं सचेतसामभिप्रायमजिज्ञासामहि, इदानीमपि च जि-
ासामहे । सुष्ठु खल्विदं वयं जानीमो यद्विदुषां साहाय्यकादृते ईदृशं
र्मं दुःसाधमेवेति ।

पाठकैरिदं लक्षितं स्यादिति मन्यामहे यत् पत्रिकाया वार्षिकाकारः शतत्रयपृष्ठात्मकइति, परन्तु द्वयोरपि वर्षयोस्ततोऽधिकान्येव कानिञ्चित् पत्राणि प्रदत्तानीति । सति सम्भवे, इतोऽप्याकारो वर्द्धयिष्यते सम्प्रत्यपि । मित्रगोष्ठीपत्रिका सर्वाभ्यः संस्कृतपत्रिकाभ्य आकारतोऽपि गुरुतमा, अनुपातेन सुलभतमा च ।

आगामिनि वर्षे अस्मत्पत्रिकायां किं किं कथं वा स्यादिति पूर्वं किमप्यनभिधाय कर्मणैव प्रकाशयितु मिच्छामः । तथापि केषाञ्चित कौतूहलनिवृत्तये वा सन्तोषसम्पत्तय एव वेदं समासेनोच्यते यदस्मिन् वर्षे भारते अन्यत्र च प्रसिद्धतमानां विद्वद्वराणां लेखकानां सन्दर्भास्तत्र प्रकाशयिष्यन्ते । बहवो महानुभावाः प्रार्थिताः सन्तः करुणया स्वस्वनिबन्धं पत्रिकायै प्रदातु प्रतिश्रुतवन्तः ।

तदिदं विज्ञाय प्रसीदन्तु नः पाठकमहाशयाः, कुर्वन्तु च यथोचितं यावच्छक्यं च करुणया पत्रिकाया अभ्युदयमिति सविनयं, सनिर्बन्धं, सविस्रम्भं च याचमानाः सारस्वतपथसञ्चारिणो प्रतिपदसुलभस्खलनाः, दुष्करलोकरञ्जनव्रतदीक्षिताः वयं साम्प्रतं विरमामः इति शिवम् ।

